# सम्बन्धविच्छित्तिः

## ( शास्त्रेषु सम्बन्धः )

सम्पादकः
आचार्य भगवतशरणशुक्लः



प्रकाशकः
शारदा संस्कृत संस्थानम्
वाराणसी

# सम्बन्धविच्छित्तिः

## (शास्त्रेषु सम्बन्धः)

सम्पादकः
**आचार्य भगवत्शरणशुक्लः**
प्रोफेसर
व्याकरणविभागः
संस्कृतविद्याधर्मविज्ञानसंकायः
काशीहिन्दूविश्वविद्यालयः




प्रकाशकः
**शारदासंस्कृतसंस्थानम्**
वाराणसी

**सम्बन्धविच्छित्तिः**
**(शास्त्रेषु सम्बन्धः)**

**प्रकाशकः**
शारदासंस्कृतसंस्थानम्
सी २७/५९ जगतगंज, वाराणसी २२१००२,
दूरभाष : ०५४२-२२०४१६८
email : sharadabhavan@yahoo.com

**सम्पादकः/सहप्रकाशकः**
आचार्य भगवत्शरणशुक्लः
प्रोफेसर,
व्याकरणविभागः
संस्कृतविद्याधर्मविज्ञानसंकायः
काशीहिन्दूविश्वविद्यालयः

ISBN - 978-93-81999-28-8

संस्करणम् - २०१३ ई.

मूल्यम् : रु. ४००/-



मुद्रक :
इन्द्रा प्रेस,
जगतगंज, वाराणसी

# प्राक्कथनम्

**स्फोटाख्यं परब्रह्म कालशक्तिसमाश्रितम्।**
**सृष्टृ संसारचक्रस्य शब्दरूपं प्रणाम्यते।।**

मानवजीवनं न केवलं स्वस्वार्थचिन्तनाय आत्मोन्नत्यै च विद्यते। सामाजिकजीवने ये ये तेन सम्बद्धा भवन्ति, सर्वेषां स्वार्थं चिन्तनीयं भवति मिथः सर्वैः। न केवलं मानवैः मानवानामपितु सकलप्राणिनां तत्सम्बद्धानां पशुपक्षिसरीसृपपादपादीनामपि स्वार्थश्चिन्तनीयो भवति। एवं यैर्यैः स जनः सम्बद्धः तैस्तैः सह तस्य ते ते सम्बन्धाः भवन्ति। वस्तुतः पूर्वं सम्बन्धः कल्पितो भवति पश्चात् तस्य जन्म भवति यथा शिशुः गर्भावस्थायामेव स्वमात्रा पित्रा पितामह्या पितामहपितृव्यभ्रातृभगिनीमातामहीमातामहमातुलमातुलानीप्रभृतिभिः सम्बद्धो भवति। बीजसन्तापनादेव भूम्या सह सम्बन्धः पादपे भवति। तस्मादेव च खाद्यं पानीयादिकं च प्राप्य गृह्णाति। अत एव जन्मकालिकः प्रथमः सम्बन्धः भूम्या सर्वजीवानां भवत्येव। पश्चादेव यथा यथा व्यवहारो वर्द्धते सम्बन्धा अपि वर्द्धन्ते। एवमेव यथा सामाजिकार्थिकराजनीतिकशारीरिककार्यनिवार्हाय केचन सम्बन्धा अनिवार्या भवन्ति तथैव शास्त्रीयव्यवस्थानिर्वाहायापि शास्त्रीयसम्बन्धाः परिकल्पिता भवन्ति। यद्यपि सांख्ययोगन्यायवैशेषिकपूर्वोत्तरमीमांसेति षट्सु शास्त्रेषु यथाप्रसङ्गमनेके सम्बन्धा अङ्गीकृताः विशिष्टतया विचारिताश्च सन्ति, तथापि सम्बन्धा ह्येते व्याकरणज्योतिषसाहित्यादिशास्त्रेष्वपि वैशेष्येन विवेचिताः सन्ति। जैनबौद्धदर्शनेऽपि सम्बन्धोऽयं सम्यग् विवेचितोऽस्ति। आचार्यभर्तृहरिस्तु सम्बन्धसमुद्देशप्रकरणे स्ववाक्यपदीयग्रन्थे सामान्येन सम्बन्धस्य तु सम्बन्धस्य। नागेशरीत्या लक्षणं कृतवान्। सम्बन्धिभिन्नत्वे द्विष्ठत्वे सति आश्रयतया विशिष्टप्रतीतिनियामकत्वं सम्बन्धत्वमिति लक्षणं विहितं विद्यते। एतल्लक्षणं यद्यपि वृतिनियाम्कसम्बन्धेषु संयोगसमवायदैशिक-कालिकस्वरूपसम्बन्धेषु संघटते। वृत्यनियामकेष्वपि केषुचिद् स्वस्वामिभावादिषु गच्छति, किन्तु अभेदादिसम्बन्धेषु न संघटते फलतः केचन विशिष्टप्रतीतिविषयत्व-मित्येव सम्बन्धं लक्षयन्ति। व्याकरणशास्त्रानुसारेणायं सम्बन्धः षष्ठी विभक्त्यर्थत्वेनाश्रितः।

षष्ठी शेषे।।२।३।५०।। इति सूत्रं शेषेऽर्थे प्रातिपदिकात् षष्ठीं विभक्तिं नियमति। शेषो नाम उक्तादन्यः। क उक्तः? कारकाणि, प्रातिपदिकार्थश्च। तदन्यः कः सम्बन्धमात्रम्। तेन सर्वेषु सम्बन्धेषु विवक्षितेषु षष्ठी नियम्यते। एवमेव सांख्याः, यौगिकाः, नैयायिकाः, वैशेषिकाः, मीमांसकाः वेदान्तिनश्च (अद्वैतिनो विशिष्टाद्वैतप्रभृतयः) सर्वे स्वस्वशास्त्रानुसारेण विविधसम्बन्धानङ्गीकुर्वन्ति। केचन यं स्वीकुर्वन्ति अन्ये नोरीकुर्वन्ति। यथा समवायसम्बन्धं नैयायिकवैशेषिकाः स्वीकुर्वन्ति वेदान्तिनो नाङ्गीकुर्वन्ति। एवमेव वैयाकरणाः संयोगं समवायमभेदञ्च सम्बन्धत्वेन नाङ्गीकुर्वन्ति अन्ये नैयायिकप्रभृतयः सर्वेऽङ्गीकुर्वन्ति।

प्रायः समेऽपि दार्शनिकाः शब्दार्थसम्बन्धविषये विवदमानाः दृश्यन्ते। केचन केवलामभिधां, केचन अभिधालक्षणे, केचनाभिधालक्षणाव्यञ्जनाः। केचनाभिधालक्षणाव्यञ्जनतात्पर्याणि शब्दार्थसम्बन्धत्वेनाङ्गीकुर्वन्ति। शब्दार्थसम्बन्धविषये भूयान् विचारः शास्त्रविचारचणेषु वर्वर्त्ति। न ह्येकत्रैते विचाराः सङ्कलितरूपेण कुत्रापि ग्रन्थे विद्यन्ते, येन जिज्ञासूनां ज्ञानपिपासा शान्तिमधिगच्छेत्। तदर्थं कश्चन प्रयासः केनाप्यवश्यमेव करणीय आसीत्। मम मनसि बहुकालत एव एषा कार्यचिकीर्षा बलवती जाता। तदर्थं तत्तद्विषयविद्वांसः स्वशास्त्रानुसारेण चिन्तनं लिप्यनुबद्धुमनुरोधिताः। मम स्नेहाग्रहमूरीकृत्य ते कार्यं विहितवन्तः। तस्यैवैतद् ग्रन्थरत्नं फलमस्ति। तदर्थं ते समेऽपि ऋषिकल्पाश्शेमुषीकाः धन्यवादार्हाः वन्दनीयाश्च। मन्ये प्रयासोऽयं विदुषां प्रीतिसंवाहको भविष्यति।

तिथिः कार्तिककृष्ण अमावस्या
संवत् २०७१, दीपावली
स्थानम्- वाराणसी

विदुषां स्नेहपात्रम्
भगवत्शरणशुक्लः
प्रोफेसर
व्याकरणविभागः
संस्कृतविद्याधर्मविज्ञानसंकायः
काशीहिन्दूविश्वविद्यालयः
वाराणसी



## ॥मङ्गलम्॥

राधामाधवयोर्मध्ये भवानीविश्वनाथयोः।
वागर्थयोश्च यो मध्ये सम्बन्धाः पान्तु वश्च नः॥१॥

सम्बन्धो जगतीतले रचयतात् स्नेहस्य धारां शुभाम्
जीवा अण्डजपिण्डजोद्भिजमता ये स्वेदजाः सन्ति वै।
ये देवाः पितरश्च राक्षसगणा नागाश्च यक्षादयः,
तेषां जीवनपोषकोऽवतु सदा सम्बन्धदेवो हि नः॥२॥

रामकृष्णतनूजोऽयं मूलादेव्यास्तु गर्भजः।
भगवत्शरणश्शुक्लः प्रणौति पितरौ गुरून्॥३॥

शास्त्रेषु मर्मबोधाय सम्बन्धा ये समाश्रिताः।
सुधीवरेभ्यः सङ्कल्य ग्रन्थेऽस्मिन् सुव्यवस्थिताः॥४॥

बुधा ग्रन्थचणाश्श्रेष्ठाः पठित्वा ग्रन्थमिमं शुभम्।
विलोक्य च गुणान् दोषान् स्तुवन्तु सूचयन्तु च॥५॥

# विषयानुक्रमणिका

# सम्बन्धविच्छित्तिः

## सामाजिकसम्बन्धः

संसारेऽस्मिन् सर्वे जीवाः स्वस्ववर्गेषु स्थित्वा स्वजीवनं यापयन्ति। न हि कश्चिदेकाकी निवसितुमिच्छति। कश्चित् पशुरपि पश्वन्तरं पिपीलिकापि पिपीलिकान्तरं वाञ्छति। यावत् सृष्टिरारब्धा तावदेव सर्वे मिलित्वैव व्यवहर्तुं वाञ्छन्ति। यश्च तपस्वी न कश्चिद् स्वेतरं मानवं वाञ्छति तथापि स्वेष्टं वनप्रदेशं जलाशयं तु वाञ्छत्येव। इत्थं सर्वत्र सर्वे प्राणधारिणः स्वेतरसम्बद्धा एव दृश्यन्ते। सा च सम्बद्धता सम्बन्धं विना नैव भवितुमर्हति। अतः सर्वत्र सम्बन्धः स्वीक्रियते। स सम्बन्धः कथं भवति इति विषये कालिदासः कथयति–

"सम्बन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ सङ्गतयोर्वनान्ते।।"

यदा कस्यचित् केनचित् सह प्रथममाभाषणं भवति तदा भवति तेन सह तस्य मिथः सम्बन्धः। सम्बन्ध्यते वस्तुद्वयं प्राणिद्वयं वा येन धर्मविशेषेण सः सम्बन्धः। सम्बन्धः सदा द्वयोः सम्बन्धिनोः तिष्ठति अतः द्विष्ठो भवति, सम्बन्धिद्वय-भिन्नोऽपि भवति। एतत्सम्बन्धवन्तौ इमौ द्वौ इत्येवं काचिद् विशिष्टप्रतीति-नियामकोऽपि भवति। फलतः सम्बन्धिभिन्नत्वे सति द्विष्ठत्वे सति आश्रयतया विशिष्टप्रतीतिनियामकत्वं सम्बन्धत्वमिति समाजे सम्बन्धसामान्यलक्षणं सम्पद्यते।

सम्बन्धोऽयं समाजव्यवहारानुसारेणानेकविधो विद्यते। तेषु केचन विशिष्टाः सम्बन्धाः गणयितुं शक्यन्ते। यथा- (१) योनिजः, (२) विद्याजः, (३) संस्कारजः, (४) प्रीतिजः, (५) समुपासनाजः, (६) व्यवहारजः, (७) द्वेषजः, (८) रोगजः, (९) परलोकजश्चादयः सन्ति। एतेषां विषये क्रमशो विचार्यते–

(१) योनिजः– भूतलेऽस्मिन् सर्वे जीवाः सशरीराः जायन्ते। न हि लोकेऽस्मिन् शरीरं बिना प्राणानां सत्ता भवितुमर्हन्ति। स्वकर्मानुसारं च शरीरधारणम्। समुत्पत्तिश्च सर्वेषामण्डजपिण्डजानां मातापितृभ्यामेव। तेन जन्यस्य प्राणिनः प्रथमं सम्बन्धः मात्रा पित्रा च सह सम्पद्यते। तत्र पितुर्मातुश्च पुत्रेण सह, स्वजन्यत्वसम्बन्धः, पुत्रस्य पितृभ्यां स्वजनकत्वं स्वजननीत्वं च क्रमशः सम्बन्धो भवति अथवा उभयोर्मध्ये जन्यजनकभावसम्बन्धो भवति। तस्य पितुः मातुश्चापि पिता, पितामहः, प्रपितामहः, तथैव माता, पितामही, प्रपितामही,

मातामहः प्रमातामहः, मातामही, प्रमातामही, भ्रातरः, पितृव्याः, भगिनीप्रभृतया जनाः भवन्ति। सर्वै सह तस्य जन्यजनस्य एते योनिजसम्बन्धाः भवन्ति। जन्यस्य पितुः पितृपितामहप्रभृतयः पितामहप्रपितामहादयो भवन्ति, मातुः पितृपितामहादयः मातामहप्रमातामहश्चादयो भवन्ति। मातुः मातृपितामह्यश्चादयो मातामहीप्रमातामह्यादयो भवन्ति। पितुः पितृव्यः भ्रातरः भागिन्यश्च पितृव्यपितामहः, पितृव्याः पितृश्वसारः, मातुः पितृव्यः भ्रातरो भगिन्यः भातृपत्नी भगिनीपतिश्च क्रमशः पितृव्यमातामहः, मातुलः मातृश्वसा मातुलानी मातृस्वसृपतिश्च भवन्ति। एवमेव स्वस्वपितुः स्वेतरपुत्राः, पुत्र्यश्च, भ्रातरः, भागिन्यः तेषां पत्न्यः, पतयश्च, भातृजायाः आबुत्ताः कथ्यन्ते। भातृपुत्राः भातृजाः भागिनीपुत्राः भागिनेयाः पुत्र्यश्च तस्य भ्रातृजाः भागिनेय्यो व्यवह्रियन्ते। एते सम्बन्धाः एतैः सह सम्बद्धाश्चान्ये ये जनाः तैः सर्वैः सह यो सम्बन्धः सः सर्वो योनिजः सम्बन्धो कथ्यते। सर्वेषामपि मानवानां गोत्रद्वयम्। प्रथमगोत्रः पितृसम्बन्धी, द्वितीयश्च मातृसम्बन्धी। प्रथमगोत्रस्य सम्बन्धिनः पिता, पितामहः, प्रपितामहः, पितृव्यः, पितृव्यपुत्रप्रभृतयश्च। एतैः सहः सम्बद्धाः तत्पत्न्यः मातापितामहीप्रपितामहीपितृव्याणीभातृजायाप्रभृतयश्च सन्ति। द्वितीयगोत्रसम्बन्धिनः मातामहः, मातामही, प्रमातामहः, प्रमातामही, मातुलः मातुलानी मातृश्वासा मातृश्वसृपतिः, मातुलेयः, मातुलेया, मातुलेयजाया प्रभृतयो भवन्ति। एवमेव पितृस्वसृकुलेन मातृश्वसृकुलेन भगिनीपतिकुलेन सह सर्वे सम्बन्धाः योनिजाः कथ्यन्ते।

**(२) विद्याजः–** मनुष्यस्य द्विविधं जन्म भवति। प्रथमं मातापितृभ्यां, तज्जन्म योनिजं कथ्यते, वंशोऽपि योनिजः। द्वितीयं च विद्याविषयकं भवति तत्रापि गुरुः मातृवत् तं ब्रह्मचारिणं शिष्यं गर्भे धारयित्वा प्रसूते। प्रतिपादितं च तथा वेदे "आचार्य उपनयमानो ब्रह्मचारिणां वृणुते गर्भमन्तः। तं रात्रीस्तिस्र उदरे बिभर्त्ति तं जातं द्रष्टुमभिसंयन्ति देवाः।। अ.वे. ११/७/३।।

आचार्यः शिष्याय विद्यारूपं द्वितीयशरीरं प्रदाय विद्वद्रूपं द्वितीयं जन्म ददाति। अत एव तच्छिष्यस्य द्वितीयं जन्म भवति। अतएव गुरुसम्बद्धो द्वितीयो वंशो विद्यावंशः कथ्यते। पाणिनिरपि स्वग्रन्थे विद्यायोनिसम्बन्धेभ्यो वुञ्।।४/३/७७।। इति सूत्रे वंशद्वयसूचनायां प्रथमं विद्यावंशमेव सूचितवान्। तस्य शिष्यस्य गुरुणा तत्पत्न्या, पुत्रादिना गुरोरन्यशिष्यैश्च सह तस्य सम्बन्धो भवति। गुरुः पितृतुल्यो भवति। तत्र सम्बन्धो गुरुशिष्यभावरूपः, गुरुपत्न्या सह जन्यजननीभावः, तत्पुत्रेण सह भ्रातृभ्रातृभांवः पुत्र्या सह भ्रातृभगिनीभावः, अन्यशिष्यैश्च सह गुरुभ्रातृगुरुभ्रातृभावः इत्यादयः सम्बन्धा भवन्ति। गुरोः माता, पिता

पितामहादयश्चेति सर्वे शिष्यस्य गुरुपितामही गुरुपितामहः गुरुप्रपितामहादयश्चेति रीत्या सम्बध्यन्ते। इत्थमेतेऽपि सर्वे सम्बन्धाः श्रद्धास्नेहरज्जुबद्धाः योनिजसम्बन्धा इव दृढाः सम्मानिताश्च भवन्ति स्म पुरा गुरुकुलपद्धत्या चालितेषु विद्यासंस्थानेषु। अद्यापि यत्रैतादृशी व्यवस्था विद्यते तत्रैते सम्बन्धा जीविताः सन्ति।

**संस्कारजः सम्बन्धः**– यद्यपि वैदिकसनातनपरम्परायां जन्यस्य बालस्य गुणाधायकाः षोडशसंस्काराः भवन्ति। यथा (१) गर्भाधानम्, (२) पुंसवनम्, (३) सीमन्तोन्नयनम्, (४) जातकर्म, (५) नामकरणम्, (६) निष्क्रमणम्, (७) अन्नप्राशनम्, (८) चौलकर्म, (९) कर्णवेधः, (१०) उपनयनम्, (११) वेदारम्भः, (१२) केशान्तविधानं समावर्तनम्, (१३) विवाहः, (१४) अग्न्याधानम्, (१५) त्रेताग्निः, (१६) अन्त्येष्टिः। एतेषु सर्वेषु संस्कारेषु गर्भाधान-पुंसवनसीमन्तोन्नयनजातकर्मनामकरण-निष्क्रमणान्नप्राशनचौलकर्मकर्णवेधोपनयनवेदारम्भकेशान्तसमावर्तनसंस्कारेषु योनिजविद्याजवंशातिरिक्तपुरोहितनापितवर्धिकीलौहकारस्वर्णकारप्रभृतयो जनाः जन्यमानेन जन्येन बालेन च सह सम्बद्धाः भवन्ति। तेषां तैः सह कश्चन सम्बन्धो भवत्येव स च संस्कारजसम्बन्धः कथ्यते। जन्यस्य बालस्यैतैः सह यो सम्बन्धः पुरोहितादिभिः यद्यपि नूतनस्तथाप्येते न नूतनाः भवन्ति तस्य परिवारस्य कृते।

अतः परिवारैः सह तेषां पुरोहितादीनां प्राचीनसम्बन्धत्वात् जन्यबालेन सह तेषां सम्बन्धोऽपि प्राचीनो मन्तुं शक्यते। तथापि येन संस्कारेण केनचित् अपरिचितेनापरेण जनेन सह भवति यः सम्बन्धः सः, संस्कारविशेषो विवाहसंस्कारो भवति। अनेन विवाहसंस्कारेण वरः कन्यया तस्याः परिवारसम्बन्धिजनैश्च सम्बद्ध्यते तथैव कन्या वरेण वरपरिवारसम्बन्धिजनैश्च सम्बद्ध्यते। तयोर्वरकन्ययोः पतिपत्नीभावसम्बन्धो भवति। वरस्य मातापितृप्रभृतयः कन्यायाः मातापितृप्रभृतयो भवन्ति तथैव कन्यायाः मातापितृप्रभृतयो वरस्यापि मातापितृप्रभृतयो भवन्ति। किन्तु संज्ञाभेदो भवति यथा कन्यायाः माता, पिता, भ्राता, भगिनी, भ्रातृपत्नी, भगिनीपतिः, पितृव्यः, पितृव्याणी क्रमशः वरस्य श्वश्रूः, श्वसुरः, श्यालः, श्याली, श्यालीजाया, श्यालपतिः (साढु) पितृव्यश्वसुरः, पितृव्याणीश्वश्रूः भवन्ति। तथैव वरस्य माता, पिता, भ्राता, भगिनी, ज्येष्ठभ्राता, ज्येष्ठभ्रातृपत्नी, भ्रातृपत्नी, पितृव्यः, पितृव्याणी च कन्यायाः श्वश्रूः, श्वसुरः, देवरः ननान्दा, ज्येष्ठः, ज्येष्ठानी, देवरानी, पितृव्यश्वशुरःपितृव्याणीश्वश्रूः इत्यादयो भवन्ति। देवरपुत्रो, देवरपुत्री, ननान्दृपतिः, ननान्दृपुत्रः, ननान्दृपुत्री एवं श्यालपुत्रः, श्यालपुत्री, श्यालीपुत्रः, श्यालीपुत्री इत्यादिभिः सहापि वरकन्ययोः सम्बन्धाः भवन्ति। एतेषां सम्बन्धानां प्रमुखहेतुः विवाहसंस्कार एव भवति। एते सर्वेऽपि

सम्बन्धाः प्रगाढस्नेहेन बद्धाः भवन्ति। एकोऽपरोऽपि संस्कारो दीक्षासंस्कारो विद्यते। यत्र दीक्षागुरूः सद्व्रतिप्रदानाय वैष्णवादिमन्त्रैरन्यैश्च विधिभिः दीक्षाकामिनं दम्पतिं संस्करोति। तत्रापि तेन संस्कारेण दीक्षादायिना गुरुणा तस्य परिवारेण च सह शिष्यस्य कश्चन श्रद्धातिरेकपूरितस्नेहपूर्वकः सम्बन्धो जायते। सोऽपि नूतनः संस्कारजः सम्बन्धो भवति।

**प्रीतिजः सम्बन्धः**– प्रीत्या यस्य कस्यचिद् येन केनचिद् सह यः सम्बन्धो जायते सः प्रीतिजसम्बन्धान्तर्गतः गण्यते। स च त्रिविधः (१) द्वयोः पुरुषयोः, स्त्रियोर्मध्ये यस्तिष्ठति सः सखिसखिभावः सखीसखीभावश्च क्रमशो विद्यते। कदाचिदयं स्त्रीपुरुषयोर्मध्येऽपि वासनारहितशुद्धस्नेहवेलायां सखिसखी भावसम्बन्धो भवति। यथा द्रौपदीकृष्णमध्ये आसीत्।

(२) किन्तु यदा स्त्रीपुरुषयोर्मध्ये परस्पररूपगुणाद्याकर्षणेन वासना-मप्यङ्गीकृत्य सम्बन्धो भवति तदा सः उपपत्नीजारभावसम्बन्धः कथ्यते। पुरुषस्य सा स्त्री उपपत्नी (रखैल) प्रेयसी कथ्यते। स्त्रियश्च स पुरुषः उपपतिः जारश्च कथ्यते। अयं सम्बन्धः प्रीतिजोऽपि वैदिकसनातनसमाजे पूर्वकालत अधुना यावत् निन्दित एव विद्यते। उच्छृंखलाः सनातनधर्मपरम्पराविषयकनष्टस्वाभिमानाः भोगैकमानसाः कुनरा एव तं सम्बन्धं स्वीकुर्वन्ति। उक्तं च ब्रह्मवैवर्तपुराणे–

'जारञ्चोपरतिर्बन्धुर्दुष्टा सम्भोगकर्त्तरि।
उपपत्न्यां नवाङ्गी च प्रेयसी चित्तहारिणी।।
स्वामीतुल्यश्च जारश्च नवाङ्गी गृहिणी समा।
सम्बन्धो देशभेदे च सर्वदेशे विगर्हितः।।

अयं जारजसम्बन्धोऽपि द्विविधः। (१) प्रथमः सामान्यस्त्रीपुरुषयोः केवलं वासनापूर्त्यै परस्पराह्लादाय च यः सम्बन्धः। (२) द्वितीयः वासनामात्रपूर्त्यै पण्यस्त्रीजनैः पुरुषस्य पण्यपुरुषजनैः स्त्रियश्च यः सम्बन्धः कदाचिद् विशिष्टाकर्षणबद्धः सोऽपि प्रीतिजसम्बन्धः सर्वथा निन्दितः समाजे प्रायः सर्वत्र विद्यते।

एकोऽपरोऽपि सम्बन्धः प्रीतिजो विद्यते यदा कश्चिद् सहृदयो निःस्वार्थ भावेन कमपि प्रति विदधाति। सोऽपि द्विविधः सामान्यबालैः सह, प्रतिभाविशिष्ट बालैः सह यो विद्यते। लघून् क्रीडादिरतान् शिशून् बालान् अपरिचितानपि दृष्ट्वा प्रीत्या वात्सल्यभावात् कश्चित् (तात्कालिकः) सम्बन्धो जायते। स सहृदयः तं बालं लालयति, वार्तां च विदधाति। अयमपि सम्बन्धः प्रीतिजो वक्तुं शक्यते।

एवमेव कमपि दीनजनं दृष्ट्वा दयालुभावात् यः कश्चित् तं स्निह्यति तस्य सहायतां विदधाति त तयोर्मध्ये कश्चन सम्बन्धो जायते। स च सम्बन्धोऽपि प्रीतिजः कथ्यते। इत्थमेवायं प्रीतिजः सम्बन्धः सहृदयानां पादपानां पशूनां विषये वस्तूनां विषयेऽपि दृश्यते।

अयं प्रीतिजः सम्बन्धः श्रद्धास्पदे जनेऽपि यस्य कस्यचिद् दृश्यते। यथा तपस्विनि, महात्मनि, राजनि, कलामर्मज्ञे, कलाविदि, विदुषि, भवति। अत्र श्रद्धेयश्रद्धातृभावसम्बन्धो वक्तुं शक्यते। एतेभ्योऽन्येऽपि पूज्याः भवन्ति ये पितृवत् प्रीत्या श्रद्धया जनैराद्रिन्ते। ते पञ्चपितरश्शास्त्रेषु कथिताः सन्ति–

(१) अन्नदाता (२) भयत्राता (३) पत्नीपिता (४) स्वपिता (५) विद्यादाता

"श्वशुरस्तु पिता ज्ञेयो जन्मदातुः समो मुने।
अन्नदाता भयत्राता पत्नीतातस्तथैव च।।
विद्यादाता, जन्मदाता पञ्चैते पितरो नृणाम्।।" ब्र.वै.पु.

एतैः सर्वैः सह श्रद्धेयश्रद्धातृभाव एव सम्बन्धो भवति श्रद्धास्पदेषु जनेषु न केवलं पुरुषाः अतीव स्नेहसम्बद्धाः, श्रद्धास्पदाः स्त्रियोऽपि भवन्ति। यद्यपि भारतीय परम्परायां "मातृवत् परदारेषु', विद्याः समस्तास्तव देवि! भेदाः स्त्रियः समस्ताः सकला जगत्सु" इत्यादिवचनैः सर्वा अपि नार्यः देवीरूपाः मातृवदेव सन्ति। सर्वासु श्रद्धाभावो दातव्यस्तथापि सनातनधर्मिणि चतुर्दश मातरो निश्चयेनाङ्गीकृताः यथा– (१) अन्नदातुः पत्नी, (२) भगिनी, (३) गुरुपत्नी, (४) माता, (५) मातृसपत्नी, (६) सर्वाः कन्याः, (७) पुत्रपत्नी, (८) मातृमाता, (९) पितृमाता, (१०) श्वश्रुः, (११) पितृस्वसा, (१२) पितृव्याणी, (१३) मातुलानी, (१४) स्वपुत्री–

"अन्यदातुश्च या पत्नी भगिनी गुरुकामिनी।
माता च तत्सपत्नी च कन्या पुत्रप्रिया तथा।।
मातुर्माता पितुर्माता स्वश्रूः पित्रोः स्वसा सुता।
पितृव्याणी मातुलानी मातरश्च चतुर्दश।।" ब्र.वै.(पुराणम्)

अत्रैव मित्रमाता, मित्रभार्या, मित्रभगिनी, मित्रपुत्री प्रभृतयः सर्वा अपि मित्रपूज्याः सम्बद्धाश्च स्त्रियः मित्रस्य कृते श्रद्धास्पदाः मातृतुल्याः भवन्ति। फलत आहत्य पूर्वापेक्षया अष्टादशविंशतिः श्रद्धास्नेहपात्रमातृणां संख्या भवति। इत्थं प्रीत्या यथा यथा येन येन सह लोकव्यवहारेण जनाः वर्तयन्ति तथा तथा तेन तेन सह तस्य जनस्य विविधाः प्रीतिजाः सम्बन्धा लोके दृश्यन्ते।

**(५) समुपासनाजः सम्बन्धः–** जनाः स्वेष्टाराधनाय प्रीत्या कर्म कुर्वन्ति। तानि कर्माणि विविधानि सन्ति। सामान्योपसनारूपाणि नित्यकर्मसंध्यावन्दन

देवपूजादीनि काम्यकर्मसम्बन्धीनि, सामान्ययागादीनि विशेषयागश्रौतादीनि सन्ति। तत्र यागकर्तुर्जनस्य यागेन याजकेन, याज्यवस्तुभिः, यागक्रियाभिः, ऋत्विग्भिः यज्ञप्रयोगविधिभिराचार्यैः यागदेशनिवासिभिश्च कश्चन सम्बन्धो जायते ते च सम्बन्धाः यजमानयाजकभावः, याज्ययजनभाव, साध्यसाधनभावः उपास्योपासकभावः, पूज्यपूजकभावः, दातृदानभावः, दानदातादानगृहीतृभावः उपदेश्योपदेशकभावः सर्वे समुपासनाजाः सम्बन्धाः भवन्ति।

**(६) व्यवहारजः सम्बन्धः–** लोके सर्वेऽपि प्राणिनः सामाजिका स्वस्वसमाजे व्यवहरन्तो जीवन्ति। योनिजविद्याजप्रीतिजादिसम्बन्धेभ्यो भिन्नाः कार्यविशेषहेतुना यदा कश्चित् केनचिद् व्यवहरति तदा तस्य तेन सह (व्यावहारिको) व्यवहारजः सम्बन्धो भवति। यथा भोग्यवस्तुभिः भोग्यभोक्तृभावसम्बन्धः सेवकस्वामिनोः सेव्यसेवकभावसम्बन्धः स्वामिनो वस्तुभिः स्वस्वामिभावसम्बन्धः द्रव्यद्रव्ययोः संयोगसम्बन्धः, जातिव्यक्त्योः समवायसम्बन्धः, तादात्म्यसम्बन्धो वा। पञ्चकारुभिः स सहाय्यसहायकभावसम्बन्धः ग्राहकवणिजोः क्रेतृविक्रेतृभाव-सम्बन्धः, प्रजायाः राज्ञा सह पाल्यपालकभावसम्बन्धः दातुः याचकैस्सह दातायाचकभावसम्बन्धः, मल्लानां मल्लमल्लभावसम्बन्धः वीराणां वीरवीरभावसम्बन्धः इत्येवम्भूता अनेके व्यवहारजसम्बन्धाः लोकेव्यवहारे भवन्ति। एते सर्वे सम्बन्धाः तत्तत्कार्यसम्बद्धाः तत्तत्कार्यैः सह सम्पद्यन्तेऽतोऽनेके सन्ति।

**(७) द्वेषजः सम्बन्धः–** यथा जनानामन्यैः सह प्रीतिर्भवति तथैव स्वस्वभावविपरीतकार्यापत्तौ द्वेषोऽपि भवति। तेन तज्जन्यः केनचित् सम्बन्धो द्वेषजः सम्बन्धः कथ्यते। द्वेषस्य कारणानि भवन्ति स्वकार्यनाशः, भयस्थानम्, परगुणासहिष्णुता, परदोषासहिष्णुता, परधर्मासहिष्णुता, परोत्कर्षासहिष्णुता, स्वलाभनाशः स्वप्रत्याशाऽपूरणता, कामलोभादिविषयविनाशकः, चौरः, घातकः, दुष्टः, समाजदूषकः, राष्ट्रदूषकः, धर्मदूषकः, स्त्रीदूषकः सकलखाद्यदूषकप्रभृतयश्च। एतेषु कस्यचिदपि, द्वेष्यहेतोः सत्वे तेन हेतुना सह तस्य जनस्य द्वेष्यद्वेषकभाव-सम्बन्धो भवति। यथा प्रीत्या अनेके सम्बन्धाः मिथो जनानां भवन्ति। तथैव द्वेषेणापि पूर्वोक्तहेतूनां सत्त्वात्, मिथो जनानामनेके सम्बन्धा भवन्ति। यथा रामरावणयोः मुनिराक्षसयोः, सिंहमृगयोः, सर्पनकुलयोः श्वमर्जारयोः मिथः द्वेषजसम्बन्धाः लोके प्रथिताः सन्ति।

**(८) रोगजाः सम्बन्धाः–** यद्यपि रोगा अपि शत्रव एव, भवन्ति च ते सर्वे द्वेष्याः तथापि शरीरं व्याधिमन्दिरमित्युक्तेः सत्त्वात् शरीराद् भिन्नानि वस्तूनि द्वेष्यत्वेन गृहीतानि भवन्ति इति सिद्धान्तात् शरीरस्था द्वेष्याः रोगा एव भवन्ति।

रोगाणां शरीरेण सह रोगरोगिभावसम्बन्धः रोगाणामौषधभिः रोगरोगापहर्तृभाव-सम्बन्धः रोगिणः औषधिभिः सह रोगिरोगयुपकर्तृभावसम्बन्धः, रोगिणां चिकित्सकेन सह रोगिचिकित्सकभावसम्बन्धः, चिकित्सकस्य रोगेण सह अपकार्यापकारक-भावसम्बन्धः। एवमेव चिकित्सीयपरिचारकाः तथा परिचारिकाः चिकित्सीयोप-करणानि तैः सहापि रोगस्य रोगिणः चिकित्सकस्य अन्येभ्यश्च सम्बन्धाः भवन्ति एते सम्बन्धाः रोगजसम्बन्धाः कथ्यन्ते।

**(९) परलोकजाः सम्बन्धाः–** भारतीयपरम्परायां त्रैलौक्यस्य चतुर्दश भुवनानां परिकल्पना विद्यते। प्राणिनः स्वकृतकर्मानुसारेण तत्तद्योनिषु तत्तल्लोकेषु च जायन्ते। धर्माचरणशीलाः पुण्या उत्तमान् स्वर्गादिलोकान् प्राप्नुवन्ति। अधर्माचरणशीलाः पापिनो नरकादिलोकान् प्राप्नुवन्ति। तस्य प्राणिनः तैर्लोकैः सह, तन्नरकस्थलेन स्वर्गलोकेन च सह पुण्यैः पापकर्मभिश्च सह केचन सम्बन्धा भवन्ति। यथा स्वर्गस्वर्गवासिभावसम्बन्धो नरकनरकवासिभावसम्बन्धः पापपापिभावसम्बन्धः पुण्यपुण्यिभावादिसम्बन्धाः भवन्ति। एवम्भूताः सर्वेऽपि सम्बंन्धाः परलोकजाः सम्बन्धाः स्वीक्रियन्ते।

सर्वेऽपि सम्बन्धाः शब्दैः वाच्याः षष्ठीविभक्त्यर्थत्वेनाङ्गीकृताः सन्ति। तेन षष्ठ्यर्थः सम्बन्धः इति शास्त्रीयभणितिरपि प्रसिद्धास्ति।

सर्वमपि जगत् परमात्मनः सम्बद्धम्। सर्वाण्यपि जगज्जातानि वस्तूनि परस्परं यथायोग्यं सम्बद्धानि अतः लोके सर्वत्रैव सम्बन्धानां सत्ता परमेश्वरवत् विद्यते। सर्वत्रैव तेषां वैशिष्ट्यं विद्यत एव।

सम्बन्धविषये ब्रह्मवैवर्तपुराणे वैशद्येन निरूपितं विद्यते। तत्रत्यमविकलस्वरूपं प्रस्तूयते–

सम्बन्धो येषु तेषां यः सर्वजातिषु सर्वतः।
तं त्वां ब्रवीमि वेदोक्तं ब्रह्मणा कथितं पुरा।।
पिता तातस्तु जनको जन्मदातरि वर्तते।
अम्बा माता च जननी गर्भधात्र्यां प्रसूरिति।।
पितामहः पितृपिता तत्पिता प्रपितामहः।
अत उद्ध्वं ज्ञातयश्च सगोत्रा परिकीर्तिता।।
मातामहः पिता मातुः प्रमातामह एव च।
मातामहस्य जनकस्तत्पिता वृद्धपूर्वकः।।
पितामही पितुर्माता तत्श्वश्रू प्रपितामही।

मातामही मातृमाता मातृतुल्यो च पूजिता।।
प्रमातामहीति विख्याता प्रमातामहकामिनी।
वृद्धप्रमातामही ज्ञेया तत्पितुः कामिनी तथा।।
पितृभ्राता पितृव्यः स्यात् मातुर्भ्राता तु मातुलः।
पितुः स्वसा पितुभगिनी मातुर्भगिनी च मासुरी।।
सूनुश्च तनयः पुत्रो दायादश्चात्मजस्तथा।
धनभाक् वीर्य्यजश्चैव पुंसि जन्ये च वर्त्तते।।
जन्यानां दुहिता कन्या चात्मजा परिकीर्तिता।
पुत्रपत्नी वधूर्ज्ञेया जामाता दुहितुः पतिः।।
पतिः प्रियश्च भर्ता च स्वामी कान्ते च वर्तते।
पत्नीभ्राता श्यालकश्च पत्नीभगिनी च श्यालिका।।
देवरः स्वामिनो भ्राता ननन्दा स्वामिनः स्वसा।
श्वशुरः स्वामिनस्तातः स्वश्रूश्च स्वामिनः प्रसूः।।
भार्य्या जाया प्रिया कान्ता स्त्री च पत्न्याञ्च वर्त्तते।
पत्नीमातास्तथा श्वश्रूस्तत्पिता श्वशुरः स्मृतः।।
सगर्भः सोदरो भ्राता सगर्भा भगिनी स्मृता।
भगिनीपुत्रो भागिनेयो भ्रातृपुत्रश्च भ्रातृजः।।
श्यालस्तु भगिनीकान्तो भगिनीपतिरेव च।
श्यालीपतिस्तु भ्राता च श्वशुरैकत्वहेतुना।
श्वशुरस्तु पिता ज्ञेयो जन्मदातुः समो मुने।।
अन्नदाता भयत्राता पत्नीतातस्तथैव च।
विद्यादाता जन्मदाता पञ्चैते पितरो नृणाम्।।
अन्नदातुश्च या पत्नी भगिनी गुरुकामिनी।
माता च तत्सपत्नी च कन्या पुत्रप्रिया तथा।।
मातुर्माता पितुर्माता श्वश्रूः पित्रोः स्वसा सुता।
पितृव्याणी मातुलानी मातरञ्च चतुर्दश।।
पौत्रस्तु पुत्रपुत्रे च प्रपौत्रस्तत् सुतोऽपि च।
तत् पुत्राद्याश्च ये वंशाः कुलजाताश्च कीर्तिताः।।
कन्यापुत्रश्च दौहित्रस्तत्पुत्राद्याश्च बान्धवाः।
भागिनेयसुताद्याश्च पुरुषाः बान्धवाः स्मृताः।।
भातृपुत्राश्च पुत्राद्यास्ते पुनर्ज्ञातयः स्मृताः।

गुरुपुत्रस्तथा भ्राता पोष्यः परमबान्धवः।
गुरुकन्या च भगिनी पोष्या मातृसमा मुने!।।
पुत्रस्य च गुरुर्भ्राता प्रोष्यः सुस्निग्धबान्धवः।
पुत्रस्य श्वशुरभ्राता बन्धुर्वैवाहिकः स्मृतः।।
कन्यायाश्च श्वशुरे तत्सम्बन्धः परिकीर्त्तितः।
गुरुश्च कन्यकायाश्च पुरुषा बान्धवाः स्मृताः।।
गुरुः श्वशुरभ्रातॄणां गुरुतुल्यश्च पूजितः।
बन्धुता येन साधिञ्च तन्मित्रं परिकीर्त्तितम्।।
मित्रं सुखप्रदं ज्ञेयं दुखदो रिपुरुच्यते।
बान्धवो दुःखदो दैवात् निःसम्बन्धो सुखप्रदः।।
सम्बन्धस्त्रिविधः पुंसा विप्रेन्द्र! जगतीतले।
विद्याजो योनिजश्चैव प्रीतिजश्च प्रकीर्त्तितः।।
मित्रन्तु प्रीतिजं ज्ञेयं सम्बन्धः सुदुर्लभः।
मित्रमाता मित्रभार्य्या मातृतुल्या न संशयः।।
मित्रभ्राता मित्रपिता भ्रातृपितृसमो नृणाम्।
चतुर्थं नाम सम्बन्धमित्याह कमलोद्भवः।।
जारश्चोपरपतिर्बन्धुर्दुष्टा संभोगकर्त्तरि।
उपपत्न्यां नवाङ्गी च प्रेयसी चित्तहारिणी।।
स्वामीतुल्यश्च जारश्च नवाङ्गी गृहिणीसमा।
सम्बन्धो देशभेदे च सर्वदेशे विगर्हितः।।
अवैदिको निन्दितस्तु विश्वामित्रेण निर्मितः।
दुस्त्याज्यस्तु महद्भिश्च देशभेदे च सञ्चरेत्।।
अकीर्त्तिर्जनकः पुसां योषिताञ्च विशेषतः।
तेजीयसां न दोषाय विद्यमानो युगे-युगे।।

[1]इत्थं लौकिक-समाजिक-सम्बन्धविषये एतस्मिन् पुराणे प्रतिपादितं तथैव च भारतीय समाजे किञ्चित् भिन्नतया विदेशेषु च दृश्यते इतिशम्। इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे सम्बन्ध-जाति-निर्णयो नाम १० अध्यायः ११.११ कूर्म्मपुराणे

---

१. भगिनी पर्यायशब्दः

# शब्दशास्त्रे सम्बन्धमीमांसा

आचार्यपतञ्जलिर्महाभाष्ये भगवतः कात्यायनस्य "सिद्धे शब्दार्थसम्बन्धे"[1] इति वार्त्तिकं व्याचक्षाणः 'सिद्धे शब्देऽर्थे सम्बन्धे चेति'[2] इत्येवं पदविवेचनं विधाय सिद्धशब्दं नित्यपर्यायत्वेनाङ्गीकृत्य शब्दमर्थं तयोः सम्बन्धं च नित्यत्वेन स्वीचकार। सम्बन्धविषये कैयटो व्याख्याति- सम्बन्धस्यापि व्यावहारपरम्परयाऽनादित्वान्नित्यता। नागेशस्तु शब्दार्थयोरिव प्रवाहनित्यतया शब्दस्यापि नित्यता विद्यते इति तत्रैव महाभाष्यप्रदीपव्याख्यानेऽङ्गीकरोति।[3] आचार्यभर्तृहरेः "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृऋते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते" इति वचनाज् ज्ञायते यल्लोके सर्वोऽपि व्यवहारो न शब्दप्रयोगं विना भवितुमर्हति।[4] जगति यत् किञ्चित् वस्तु वर्त्तते तत् कदाचित् स्वसम्बद्धमन्यद् वस्तु ग्राहयति। सा च सम्बद्धता न सम्बन्धं विना भवितुमर्हति। यथा उच्चरितः घटः कम्बग्रीवादिमद् वस्तु ग्राहयति। तेन ज्ञायते यद् घटशब्देन कम्बुग्रीवादिमतो वस्तुनः कश्चित् सम्बन्धो वर्त्तते तदैव घटः तद्वस्तु ग्राहयति नैव पटवस्तु। अतः सम्बन्धविषये भवत्येव जिज्ञासा सिद्धान्तजिज्ञासूनां मतिमताम्। तस्य सम्बन्धस्य ज्ञानं षष्ठीविभक्त्यन्तपदेन शाब्दबोधे दृश्यते। स च सम्बन्धः कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिरूपः शेषत्वेन विवक्षितः तस्य सम्बन्धस्य यः प्रतियोगी तस्मात् प्रातिपदिकात् विहिता षष्ठीविभक्तिः तादृशषष्ठ्यन्तेन पदेन बोध्यते। यथा राज्ञः पुरुषः इत्यत्र राजपुरुषयोः स्वस्वामिभावसम्बन्धः, तस्य सम्बन्धस्य प्रतियोगी राजन् शब्दः तस्मात् षष्ठी शेषे।।२/३/५०।। इति सूत्रेण षष्ठी विभक्तिर्नियम्यते तदा षष्ठ्यन्तात् राज्ञः इति पदात् षष्ठ्या राजप्रतियोगिक स्वस्वामिभावसम्बन्धः पुरुषानुयोगिको ज्ञायते। अयं षष्ठ्यर्थः तत्तद्तद्रूपेण स्वस्वामिभावादिः सम्बन्धः, सम्बन्धत्वेन च क्रियाकारकभावश्च ज्ञायते। अतोऽनेकसम्बन्धानां प्रतीतिसत्त्वेऽपि स्वत्वादि सम्बन्धमादाय "नेदं चैत्रस्य गृहम्" इति वाक्यप्रयोगो भवति। कति षष्ठ्यर्थाः सम्बन्धाः? इति विषये "षष्ठीस्थाने योगा"[5] इति सूत्रभाष्ये भगवान् पतञ्जलिः कथयति "नियमार्थोऽयमारम्भः। एकशतं षष्ठ्यर्थाः, यावन्तो वा। ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्ति" इति। अनेन ज्ञायते यदनेके षष्ठ्यर्थाः सन्ति। अत्रैकशतषष्ठ्यर्थविषये कैयटो लिखति यत् कश्चित् षष्ठीदण्डपाठनामको ग्रन्थः तत्रस्थपाठमाश्रित्य भगवान् पतञ्जलिरेक-शतं षष्ठ्यर्था इत्याह। एतच्च षष्ठ्यर्थानां शतत्वमर्थसिद्धं बोध्यमिति।

"आदेशप्रत्यययोः" इति सूत्रेऽपि भाष्यकारः "एकापि षष्ठी विषयभेदात् भिद्यते"[६] इत्युक्तवान्। अनेन षष्ठ्यर्थानां बहुत्वं सिध्यति। द्वितीयादिविभक्तिभिः क्रियाकारकभावस्य सम्बन्धस्य बोधस्तु तत्तद्रूपेणैव सम्बन्धेन भवति। यत्र च कर्मादीनां सम्बन्धत्वेन विवक्षामाश्रित्य प्रतिपदविधाना षष्ठी सम्पन्ना मातुः स्मरतीत्यादौ तत्र च कर्मत्वादिसम्बन्धेन न भानमपितु सामान्यसम्बन्धेनैव बोधो भवति-मातृसम्बन्धिस्मरणमिति, न तु मातृकर्मकस्मरणमिति नवीनाः समादधति। प्राचीनास्त्वेतस्मिन् विषये क्रियाकारकभावमूलकं विशेषणत्वरूपं विषयत्वमेव अथवा निमित्तमेव तत्तत्सम्बन्धविशेषेण सामान्यसम्बन्धेन वा विवक्षितं भवति इति मन्यन्ते। प्रतिपादियति च तथा भर्तृहरिः-

"सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः।
श्रुतायामश्रुतायां वा क्रियायामभिधीयते।।"[७]

अस्यां कारिकायां सम्बन्धः क्रियाकारकभावपूर्वकः कथितः। तत्र हेतुः क्रियाकारकसम्बन्धः, शेषसम्बन्धस्तु फलितः। यथा देवदत्तस्य गृहमत्र देवदत्तगृहशब्दौ कर्त्रधिकरणरूपौ स्तः। देवदतः गृहे निवसति तदाधारेणोभयोः स्वस्वामिभावस्य भावात् कर्त्रादेर्न विशेषरूपेण ज्ञानं भवति। भर्तृहरिकारिकायां हि कारकशब्देन करणत्वादिकारकशक्तयः कथ्यन्ते। अत्र श्रवणगोचरा अधिकरणभवनादिक्रिया सम्बन्धरूपकार्यासिद्ध्या अनुमानेन ज्ञाता सती उपस्थिता भवतीति तद्द्वारैव समन्वयो भवति। सिद्धद्रव्याणां तां विना न परस्वं सम्बन्धो भवितुमर्हति। यतो हि क्रिया निःश्रयणीव सम्बद्धयते। एवं हि सम्बन्धिनौ अनुमीयमानक्रियानिमित्तरूपकारके भवतः।

'मातुः स्मरति' इत्यत्रापि क्रियाकारकभावमूलकः सम्बन्धः सामीप्यादिः बुद्धिस्थैकदेशाधिकरणस्थितिक्रियाकर्तृत्वनिमित्तक इति ज्ञातव्यः। राज्ञः पुरुष इत्यादौ स्वस्वामिभावः षष्ठ्यर्थः स्वत्वस्वामित्वसमूहरूपः अखण्डोपाधिः। ये च स्वत्वं स्वामित्वं वा अत्र षष्ठ्यर्थसम्बन्धत्वेनाङ्गीकुर्वन्ति, तन्न समीचीनं, स्वत्वस्वामित्वादीनामेकमात्रव्यक्तिवृत्तित्वेन सम्बन्धत्वाभावात्। यतो हि सम्बन्धः सम्बन्धिभ्यां भिन्नः उभयाश्रितश्च भवति। चेदुच्यते एकत्राश्रयतया परत्र निरूपकत्वेन विद्यमानत्वाद् भवति द्विष्ठत्वं, तन्न, आधारता वृत्तिनियामकसम्बन्धेन भवति। न च निरूपकत्वेनाश्रयताप्रतीतिः। अतः उभयाश्रयताया अभावात् न तस्य सम्बन्धत्वं जायते। आचार्यौं भर्तृहरिः कथयति च-

"द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते।
तत्राभिधीयमानश्च प्रधानेऽप्युपयुज्यते।।"[८]

अर्थात् सम्बन्धःप्रतियोगिनि अनुयोगिनि च यद्यपि विद्यते, तथापि गुणाः परार्थाः भवन्ति। ते च विशेषणत्वेन विवक्षिताः विशेष्यं प्रति अन्वियन्ति। सम्बन्धं विना विशेषणत्वेन विवक्षा न सम्भवति। अतो विशेषणविशेष्यभावस्याकाङ्क्षित-त्वादत्रसम्बन्ध उद्भूततया प्रतीयते। तदा विशेषणवाचकात् शब्दात् सर्वत्र षष्ठी नियम्यते। विशेष्ये च पदान्तरसमभिव्याहाराभावे स्वार्थनिरूपितविशेष्यतया प्रतीयमानत्वरूपस्वामिनिष्ठत्वादेव विशेष्यतानियामकसम्बन्धस्याकाङ्क्षा न भवति। तत्र विशेषणे षष्ठ्यन्तेन शब्देन षष्ठ्यादिना अंशतःप्रतीयमानः सः सम्बन्धः विशेष्ये प्रधानेऽपि तस्य द्विष्ठत्वलक्षणत्वाद् उपयुज्यते। राजनिरूपितविशेष्यताया राजादिपदसन्निधाने भासमानायाः सम्बन्धोऽप्युपकारको भवति। राज्ञ इत्यत्र पदान्तरप्रयोगं विनापि विशेषणत्वप्रतीतिः कर्तुं शक्यते। राज्ञः इत्यत्र स्वामित्वं पुरुषे स्वत्वं ज्ञात्वैव भवति। अतः सम्बन्धस्य बहिरङ्गत्वात् पुरुषादन्तरङ्गा प्रथमैव न तु षष्ठी, राजनि च षष्ठ्येव। एवं सर्वत्र सम्बन्धस्थले सम्बन्धिनोर्भेदे सम्बन्धिद्वयवृत्तिधर्मसमूहो भवति। "यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी" इति भाष्ये लिखितमस्ति "यस्य चेश्वरवचनमिति कर्तृनिर्देशश्चेदन्तरेण वचनं सिद्धम्। अधिब्रह्मदत्ते पाञ्चालाः। आधृतास्ते तस्मिन् भवन्ति। प्रथमाऽनुपपत्तिः। प्रथमा नोपपद्यते। पञ्चालेभ्यः। का तर्हि स्यात्? षष्ठी-सप्तम्यौ स्वामीश्वराधि-पतीति। द्वितीया तर्हि प्राप्नोति 'कर्मप्रवचनीययुक्ते द्वितीयेति'[९] इत्यादि।

अत्र भाष्यस्थे 'अधि बह्मदत्ते पञ्चालाः' इति प्रयोगे ब्रह्मदते सप्तम्यां पञ्चालाद् द्वितीया प्राप्नोति। यतो हि अधेर्द्योत्यस्य पाञ्चालनिष्ठसम्बन्धस्य सप्तमीविभक्त्या अभिहितत्वेऽपि तद्द्योत्यस्य पाञ्चालवृत्तिसम्बन्धस्य तया अज्ञानात्। 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति परिभाषया अग्रे भाष्ये समाहितं, तेन ब्रह्मदत्ते सप्तमी सिध्यति।

इत्थं यत्र विशेष्यपदात् षष्ठी सम्भाव्यते तत्र षष्ठीवारकयुक्त्या समाधानं करणीयम्। अत एव लोकव्यवहारे शास्त्रे च स्वस्वामिभावः, अवयवावयविभावः, आधाराधेयभावः. प्रतियोग्यनुयोगिभावः विशेषणविशेष्यभाव इत्यादीनां भूयसां सम्बन्धानां व्यवहारो भवति। अभावस्थले हि अभावं प्रति प्रतियोग्यनुयोगित्वसमूहः सम्बन्धः, घटाभावभूतलयोस्तु आश्रयाश्रयिभावः सम्बन्धो ज्ञेयः। इत्थमेव कालिकादिविषयेऽपि ज्ञातव्यम्।

इत्थं च षष्ठ्याः सम्बन्धो, विशेषणत्वमिति चार्थद्वयम्। षष्ठी च विशेषणादेव। तत्रैका जिज्ञासोदेति यत् यथा पित्रा सह पुत्रस्य जन्यजनकभाव-सम्बन्धो भवति तर्हि उभयोः भ्रात्रोर्मिथः कः सम्बन्धः यथा देवदत्तस्य भ्राता इत्यत्र? एतस्मिन् विषये महाभाष्यकारः "अनेकमन्यपदार्थे" इति सूत्रभाष्ये[१०]

"इदं तावदयं प्रष्टव्यः-अथेह देवदत्तस्य भ्राता इति कः षष्ठ्यर्थः? तत्रैतत् स्यात् एकस्मात् प्रादुर्भाव इति। एतच्च वार्त्तम्। तद्यथा- सार्थिकानामेकप्रतिश्रये उषितानां प्रातरुत्थाय प्रतिष्ठमानानां न कश्चित् परस्परमभिसम्बन्धो भवति। एवं जातीयकं भातृत्वं नाम। अत्र चेद् युक्तः षष्ठ्यर्थो दृश्यते, इहापि दृश्यताम्" इत्युक्तवान्। कैयटः[11] "परस्परोपकाराऽभावेऽपि यदि समानोदरशायित्वमात्रेण काल्पनिकः सम्बन्धस्तदार्द्धस्य द्वाभ्यामेकप्रदेशावस्थानादिनिमित्तः सम्बन्धो युक्त इत्यर्थः" इत्युक्तवान्। भाष्यप्रदीपग्रन्थेऽत्र सम्बन्धविशेषविषये न स्फुटतया कैयटेनोक्तम्। नागेशश्चात्र "सर्वत्र सम्बन्धस्य क्रियाकारकपूर्वकत्वमित्युभयत्रापि काल्पनिकोऽवयवावयविभावो व्यवहारनियामक इति भावः। यद्वा सम्बन्धत्वेन सम्बन्धोऽसन्नपि विकल्पात्मकज्ञानविषयः पुरुषस्य चैतन्यमिति विकलपात्मकज्ञान-विषयो वा कश्चित् सम्बन्धः कथितः।[12]

वस्तुतस्तु 'देवदत्तस्य भ्राता' इत्यत्र 'स्वजनकजन्यत्वभावसम्बन्धोऽत्र समाश्रयणीयः। यतो ह्यत्र 'वाक्यार्थबोधानुकूलःसम्बन्धः कल्पनीय इति भाष्यतात्पर्यम् "अत्र चेद् युक्तः षष्ठ्यर्थो दृश्यते, इहापि युक्तो दृश्यताम्" इत्युक्त्या ज्ञायते। यतो हि कल्पनापि तादृशी एव भवति यत्र तादृशी योग्यता स्यात् स्वभ्रातरि न कदाचित् अवयवावयविभावसम्बन्धयोग्यता भवति। विकल्पात्मक-ज्ञानविषयः सम्बन्धोऽपि कश्चित् तादृशो न स्फुटः। एवमेव 'पुरुषस्य चैतन्यम्' इत्यत्र 'आत्मात्मीयभावसम्बन्धोऽङ्गीकरणीयः। यतोहि तत्र तादृशी सम्बन्धयोग्यता वर्त्तते अतस्तत्र तादृशः सम्बन्धः कल्प्यते। अतो देवदत्तस्य भ्राता इत्यत्र पूर्वोक्तसम्बन्ध एव योग्यतां लभते। एवमेव 'अन्नस्य हेतोर्वसति' इत्यत्र हेतुहेतुमद्भावः षष्ठ्यर्थः हेतुशब्दश्चात्र तात्पर्यग्राहको भवति। कृष्णस्य कृतिरित्यत्र कर्त्ता, जगतः कर्त्ता कृष्णइत्यत्र च कर्म एव षष्ठ्यर्थः। कश्चिदत्र कर्त्तृकर्मणोः षष्ठ्याः लक्षणेति उक्तवान्। तन्नोचितम्। "कर्तृकर्मणोः कृति"[13] इत्यादिसूत्राणां शक्तिग्राहकाणां सत्त्वात्। लक्षणायाः कल्पना तत्र नाङ्गीकरणीया भवति।

'ग्रामस्य दक्षिणतः पुरः उपरि वा अस्ति 'इत्यादौ अवयवावयविभावसम्बन्ध-विशिष्टदक्षिणदेशाधिकरणत्वम्, तद्विशिष्टाग्रिमदेशाधिकरणत्वम्, तद्विशिष्टोर्ध्व-देशाधिकरणत्वम् इति बोधः। सर्वत्र एतद्विषयेऽवयवाययविभावश्चात्र सम्बन्धः षष्ठ्यर्थोज्ञेयः।

"अग्नये छागस्य वपाया हविषो मेदसः प्रेष्ये' इति वाक्ये मेदस इत्यस्य प्रेषणक्रियायां कर्मत्वसम्बन्धेनान्वयः। अतोऽत्र कर्मणि षष्ठी। छागस्य अवयवावयविभावसम्बन्धेन वपायामन्वयः तेनैव सम्बन्धेन छागस्य मेदसि अन्वयो, हविषो मेदसि तादात्म्यसम्बन्धेन अन्वयो हविषो मेदसश्च कर्मत्वसम्बन्धेन

प्रेषणक्रियायामन्वयः। इत्थमत्र अग्न्युद्देश्यकछागावयवावयविभावविशिष्ट-वपासम्बन्धिहविर्भूतमेदःकर्मकप्रेषणानुकूलव्यापारः इति बोधो भवति।

इत्थं राहोः शिर इत्यादौ अनेकावस्थाप्रयुक्तशिरसः इदमेकावस्थायुक्तोमवयव इत्येवं भेदमारोप्य अवयवावयविभावसम्बन्धोऽत्र शाब्दिकैः स्वीक्रियते।

**वैयाकरणा अभेदे, संयोगे, समवाये च सम्बन्धत्वं नाङ्गीकुर्वन्ति।**

आचार्योगदाधरो व्युत्पत्तिवादे सम्बन्धविषये कथयति यत् "शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते। स च सम्बन्धः क्वचिदभेदः तदतिरिक्त एवाधाराधेयप्रतियोग्यनुयोगिविषयविषयिभावादिसम्बन्धः। अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्त्तिना च पदेनोपस्थापितस्यैव संसर्गमर्यादया (आकाङ्क्षया) भासते। यथा-नीलो घटः इति (व्यस्तस्थले), नीलघटमानय इत्यादौ (समस्तस्थले) च। नीलस्य घट इत्यादौ नीलघटाभेदान्वय-बोधस्य सर्वानुभवविरुद्धत्वात्"[१४] इत्याह। अग्रे विचारप्रसङ्गे भवति जिज्ञासा यत् अभेदपदार्थः कः? विषयेऽस्मिन् गदाधरः कथयति "अभेदस्तादात्म्यम्। तच्च स्ववृत्त्यसाधारणो धर्मः। असाधारण्यं चैकमात्रवृत्तित्वम्। तच्च स्वसामानाधिकरण्य, स्वप्रतियोगित्वोभसम्बन्धेन भेदविशिष्टं यत्तदन्यत्वमित्येक मात्रवृत्तिधर्म एव विशेषणविभक्तेरर्थः" इति।[१५] इत्थमभेदसम्बन्धं तादात्म्यत्वेन अङ्गीकृतवान् गदाधरः। तत्रोक्ततादात्म्यलक्षणस्य समन्वयश्चेत्थम् नीलतादात्म्यं घटे विद्यते। तत्र स्वं- घटेऽन्यघटस्य भेदः, तत्सामानाधिकरण्यं घटत्वे, तत्रैव भेदप्रतियोगिवृत्तित्वमपि विद्यते। इत्येवं भेदविशिष्टमेव घटत्वादिसर्वो धर्मो भवति तदन्यत्वं तद्व्यक्तित्वे एव। एवं 'नीलो घट' इत्यादौ स्ववृत्तिनीलत्वादि सम्बन्धेन घटाद्यंशे नीलपदार्थस्यान्वयबोधो भवति। इत्येवं तत्र विषयोऽयं विचारितोऽस्ति।

शाब्दिकास्तावदभेदस्य कथमपि सम्बन्धत्वं नाङ्गीकुर्वन्ति। कथयन्ति च ते यदि तत्र सम्बन्धत्वं स्यात् तर्हि नीलो घटः इत्यादौ नीलस्याभेदसम्बन्धेन घटेऽन्वये स्वीकारे विशेषणे नीलपदे सम्बन्धप्रतियोगिवाचकात् शब्दात् "षष्ठी शेषे"[१६] इति षष्ठीविधानात् तत्र षष्ठी स्यात्। अतो 'नीलो घट' इति प्रयोगोच्छेदापत्तिः स्यात्। समानाधिकरणाधिकारे समासविधानानुपपत्तिरिति तन्न समीचीनं, विशेषणवाचकप्रातिपदिकात् षष्ठीसत्त्वेऽपि विरुद्धविभक्त्यर्थानवरुद्धत्वे सत्येकविशेष्यप्रतीतिजनकत्वरूपसामानधिकरण्योपपादनसम्भवेन तस्य सार्थकता भवति। अत एव 'तक्षकस्य सर्पस्य' इति प्रयोगे सामानाधिकरण्येन षष्ठी समासो निषिध्यते। किञ्चाभेदस्य सम्बन्धत्वे "कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानम् भावप्रत्ययेन" इति सिद्धान्ताद् 'राजपौरुष्यम्' इत्यादौ भावप्रत्ययेन सम्बन्धस्येव

नीलोत्पलत्वमिति स्थले सम्बन्धाभिधानापत्तिः स्यात्। प्रथमाविभक्तिवाच्योऽभेद-सम्बन्धो नेत्येवं भ्रमितव्यम्, 'धान्येन धनवान्' 'नीलं घटं पश्य' इत्यत्रापि तथाभिधानदर्शनात्। अतो यत्राभेदसंसर्गस्तत्र विशेषणतायाः सम्बन्धानवच्छिन्नाया सम्बन्धघटकतया भानेन सम्बन्धानवच्छिन्नविशेषणविशेष्यभाव एव पदार्थयोः संसर्गत्वेन व्यवहारः। अयमपि विशेषणतावच्छेदकविशेष्यतावच्छेदक-धर्ममूलकारोपित आश्रययोर्भेदो यस्मिन् तस्मिन्नेव सम्बन्धत्वेन प्रतीयते। अत एव 'घटो घट' इत्येवं प्रयोगो न भवति। अतोऽत्र अभेदस्थले इतरसम्बन्धान-वच्छिन्नविशेषणविशेष्यभाव एव भासते। अत एव 'नीलो घट' इत्यादौ न षष्ठ्याद्यनुपपत्तिरिति बोध्यम्। यत्र च भेदसम्बन्धो भवति तत्रैव विशेषणवाचकात् षष्ठीविभक्तिर्नियम्यते।

एवमेव संयोगसमवायावपि न सम्बन्धौ भवतः। यतो हि पारतन्त्र्यं सम्बन्धस्य स्वरूपं विद्यते। भर्तृहरिः कथयति–

"नाभिधानं स्वधर्मेण सम्बन्धस्यास्ति वाचकम्।
अत्यन्तपरतन्त्रत्वाद् रूपं नास्यापदिश्यते।।"[१७]

स्वेनासाधारणेन धर्मेण स्वभावेनोपलक्षितस्य प्रत्यायकम् अभिधानं षष्ठीव्यतिरिक्तं न विद्यते। यथा-गुणा द्रव्याधीना अपि प्राधान्येन शुक्लादिशब्देन कदाचित् कथ्यन्ते, किन्तु सम्बन्धो न तथा। स हि नित्यपरतन्त्रः परोपाधिस्वरूपः सम्बन्धिनोः परस्परौन्मुख्यस्वरूपो धर्ममात्रस्वभावोऽस्ति। अतो निष्कृष्य सम्बन्धशब्देन स्वप्रधानः सम्बन्धिरूपतयोच्चमानो न साक्षाद् बोद्धुं शक्यते। अपि च–

"उपकारात् स यत्रास्ति धर्मस्तत्रानुगम्यते।
शक्तीनामपि सा शक्तिर्गुणानामप्यसौ गुणः।।"[१८]

यत्र उपकार्योपकारकभावात् सम्बन्धिनोर्मिथः स धर्मोऽस्ति तत्र स धर्मः सम्बन्धरूपः सम्बन्धिद्वयानुगतत्वेन ज्ञायते। न तु धर्मिरूपतया स्वप्राधान्येन ज्ञायते। सा च सम्बन्धरूपा शक्तिः शक्तीनामपि आधारपारतन्त्र्ये नियतकार्यजनने च नियामिका, गुणानामपि द्रव्याश्रितत्वनियामिका विद्यते। परतन्त्राणामपि उपकारकत्वादयं सम्बन्धः सर्वत्रानुमीयमानस्वरूपो नित्यपरतन्त्रो विद्यते।

संयोगः समवायश्च यद्यपि न्यायशास्त्रे सम्बन्धत्वेन प्रतिपादितौ तथापि संयोगोगुणत्वेन पदार्थत्वात् स्वतन्त्रोऽपि भवति। तथैव समवायोऽपि स्वतन्त्रपदार्थत्वात् प्राधान्येन प्रतिपादनीयो भवति। अतोऽनयोः स्वतन्त्रपदार्थत्वात् पारतन्त्र्याभावात् सम्बन्धत्वं नास्ति। प्रतिपादयति च सम्बन्धसमुद्देशे भर्तृहरिर्वाक्यपदीये–

"तद्धर्मणोस्तु ताच्छब्द्यं संयोगसमवाययोः।
तयोरप्युपकारार्था नियतास्तदुपाधयः।।"[१९]

अर्थात् संयोगसमवययोः पारतन्त्र्यरूपसम्बन्धलक्षणस्यापि सत्त्वात् तयोः पृथक्पदार्थत्वेन स्वातन्त्र्यस्य सत्त्वेऽपि सम्बन्धपदव्यवहार्यता विद्यते, तादर्थ्ये ताच्छब्दव्यवहारवत्। स्वरूपमात्रेण हि तौ सम्बन्धानुकरणं कुरुतः। अतो गौणः सम्बन्धशब्दः संयोगसमवाययोः व्यवह्रियते न तु मुख्यः। फलतस्तयोः सम्बन्धशब्द-व्यवहार्यता गौणैव मन्यव्या।

यतो हि स्वतन्त्रपदार्थत्वेनाङ्गीकारेऽन्यपदार्थसदृशी तयोरपि स्वगतोपाधि-विवक्षा क्रियते तदा तदुपक्रियमाणत्वात् स्वातन्त्र्ये सति पारतन्त्र्याभावात् स्वतन्त्रपदार्थ इव सम्बन्धरूपत्वाभावः। यतो हि तत्र उपकारप्रयोजना असाधरणाः सम्बन्धोपाधयः सन्ति। इत्थमुपाधियुक्तौ यौ स्वतन्त्रपदार्थौ संयोगसमवायौ उपाध्यवच्छेदे सम्बन्ध उपयोगी तौ संयोगसमवायौ कथमुपाधिरूपेण परतन्त्रेण सम्बन्धेन ऐकात्म्यं लभेतामिति स्वाश्रये सम्बन्धिप्रतीतिकारणात् सम्बन्धधर्मवन्तौ तौ भवतः। यतो हि संयोगो यैरुपाधिभिः सम्बन्धत्वं लभते त उपाधयो भर्तृहरिणोद्घाट्यन्ते-

"काचिदेव हि सावस्था कार्यप्रसवसूचिता।
कस्यचित् केनचिद् यस्यां संयोग उपजायते।।"[२०]

कारिकामिमां व्याख्याति च हेलाराजः[२१]- "परस्परसंयोगेनावयवानामुप-सर्पणप्रत्ययाहितेनावयविद्रव्यं जायत इत्यसमवायिकारणं संयोगोऽवयवान्यथानुप-पत्त्यावसीयते। तथा च द्रव्यैकनियतत्वं गुणत्वेन सत्ता सम्बन्धः संयोगस्योपाधिरिति तत्रोपकारः सम्बन्धेन तस्यावच्छिद्यते। यत् परतन्त्रश्च संयोगस्तेनोपाधिना सम्बन्धानुगृहीतेनावच्छिद्यत इति। पारतन्त्र्यं नाम सम्बन्धसामान्यरूपमस्यान्वयि, न तु तदेकजीवितं पारतन्त्र्यम्। अस्य पारतन्त्र्यस्य गुणकर्मसामान्यादावपि भावादस्य (संयोगस्य) च द्रव्यैकनियतत्वात्" इत्याद्युक्तवान्। अर्थात् नित्यपारतन्त्र्यलक्षणः सम्बन्धः द्रव्यगुणसामान्येषु जायते। संयोगश्च द्रव्यमात्रवृत्तिः। अत एव द्रव्यद्रव्ययोः संयोगसम्बन्धो भवति। अन्नम्भट्टोऽपि[२२] "संयुक्तव्यवहार हेतुः संयोगः। सर्वद्रव्यवृत्तिः" इति संयोगलक्षणं लक्षितवान्। अवयवानां (परमाण्वादीनां) परस्परं प्रति यदुपसर्पणं तद्रूपहेतुजनितेन परस्परसंयोगेनावय-विद्रव्यं घटपटादिरूपं समुत्पद्यते।" इत्थमवयविरूपघटपटादिजन्मनोऽन्यथानुपपत्त्या अर्थापत्त्या द्रव्यस्यासमवायिकारणत्वेन संयोगः कल्प्यते। तेन द्रव्यमात्रवृत्तिता गुणे संयोगे आयाति। गुणत्वेन सत्तासम्बन्धश्च संयोगोपाधिरिति संयोगे

पूर्वोक्तोपाधिकृत उपकार इतरव्यवच्छेदरूप उपाधिसम्बन्धेनान्योपकाराद् व्यावर्त्यते। नह्युपाधिसम्बन्धं विना उपाधेरुपकारसामर्थ्यम्। इत्थं पारतन्त्र्यस्य सम्बन्धैक जीवितस्य सत्त्वात् तत्र गौणः सम्बन्धव्यवहारो भवति संयोगे, न तु मुख्यः।

एवमेव समवायेऽपि पारतन्त्र्यलक्षणोपाधेः सम्बन्धस्य सत्त्वात् गौणः सम्बन्धव्यवहारो भवति, न तु मुख्यः। प्रतिपादयति च तथा भर्तृहरिः--

"निरात्मकानामुत्पत्तौ नियमः क्वचिदेव यः।
तेनैवाव्यपवर्गश्च प्राप्त्यभेदे स यत्कृतः।।
आत्मान्तरस्य येनात्मा तदात्मेवावधार्यते।
यतश्चैकस्य नानात्वं तत्त्वं नाध्यवसीयते।।
तां शक्तिं समवायाख्यं शक्तीनामुपकारिणीम्।
भेदाभेदावतिक्रान्तामन्यथैव व्यवस्थिताम्।।
धर्मं सर्वपदार्थानामतीतः सर्वलक्षणः।
अनुगृह्णाति सम्बन्ध इति पूर्वेभ्य आगमः।।"[२३]

अर्थात् सत्कार्यवादे सांख्यसिद्धान्ते कारणमेव कार्यं भवतीति प्रतिनियतैः साधनैस्तत्कार्यं जन्यते, इति तत्रैव तत्कार्योपलम्भः सिद्धान्तसम्मतः। असत्कार्यवादे नैयायिकादिसिद्धान्ते तु कार्योत्पत्तौ ततः प्राक् निरात्मकानां-असतां घटपटादीनां पदार्थानामुत्पत्तौ स्वस्वकारणेषु तन्तुकपालादिष्वेवोत्पत्तिविषयको नियमोऽस्ति। घटस्य कपालद्वयं समवायिकारणं कपालद्वयसंयोगोऽसमवायिकारणं तन्तुवायतुरीवेमादिकं निमित्तकारणमिति व्यवस्था वर्त्तते। सम्बन्धरूपतायाः समवायगतायाः संयोगेन सहाभेदोऽपि नियतेन स्वकारणेन कार्यस्य देशकाल-भेदेऽप्यवियोगश्च यत्प्रयुक्तो विद्यते। कारणापेक्षयाऽन्यस्य भावस्यैकस्य समवायिकारणदभिन्नस्य कार्यस्य नानात्वं निश्चीयते तत्र कारणादभेदो न निश्चीयते। तत्र च स्वाश्रयगतानां शक्तीनां कार्यजनने सहायभूतां समवायनाम्नीं तां शक्तिं स्वाश्रयेण सहभेदाभेदाभ्यामनिर्वाच्यामत एव अन्यथैव परमार्थपदार्थ-वैलक्ष्येणाकथनीयत्वेन व्यवस्थितां सर्वपदार्थानां धर्मं स्वातन्त्र्यं विभक्तिवाच्यतादशायामनतीतः प्रातिपदिकवाच्ये च सर्वपदार्थलक्षणसम्पन्नः सम्बन्धोऽनुगृह्णति। अयं सिद्धान्तः पूर्वाचार्येभ्यः सम्प्राप्तः। अत्र च संयोगात् समवायस्य भेदः कथितोऽस्ति। अत एव कार्यकारणयोरवयवावयविनोर्धर्म-धर्मिणोर्जातिव्यक्त्योर्गुणगुणिनोः पदार्थान्तरत्वेऽपि तादात्म्येनावभासो भवति। अत्र समवायः सम्बन्धत्वेनाङ्गीकृतः। अनेन चायुतसिद्धिः समवायस्योपाधिः कथितः। अतः समवायोऽयुतसिद्धानामिह प्रत्ययहेतुर्नान्येषामिति नियमः सम्बन्धेन समवायस्य कथ्यते। यत्रैव हि समवायस्य पारतन्त्र्यं तथैवात्र बुद्धिमभेदमिव च

प्रकल्पयति द्रव्यगुणकर्मसामान्येषु शक्तयोऽपि च सम्बन्धेनैवाधारपारतन्त्र्येण नियम्यन्ते। समवायिष्विव समवायस्यापि भेदः समवायिप्रतियोगिभ्यो न निश्चीयते, नीरक्षीरवत् सम्मूच्छिततो रूपत्वेनावभासात्। अत्र प्रत्ययरूपस्वकार्यवशात् स्वरूपतः सम्बन्धिभिन्नत्वेन समवायोऽनुमीयते न तु धर्मत इत्येवमेतत् सर्वं समवायविषयकं प्रागुक्तं नैयायिकसिद्धान्तप्रसिद्धं विद्यते।

नैयायिकाः वैशेषिकाश्च पदार्थपरिगणनप्रसङ्गे गुणपदार्थे संयोगं पठन्ति। वैशेषिकैर्नव्यनैयायिकैश्च समवायः स्वतन्त्रपदार्थत्वेन स्वीकृतः। किन्तु पारतन्त्र्याच्छक्तिरूपोऽपदार्थोऽपि पदार्थः कृत इव तद्रूपसमारोपात् संयोगे समवाये च सम्बन्ध इति व्यवहारो भवति। अनेन ज्ञायते संयोगसमवाययोर्न सम्बन्धस्य मुख्यव्यवहारो भवतीति निश्चीयते। आरोपितसम्बन्धव्यवहार एवोभयत्र विद्यते।

सम्बन्धः कतिविध इति विषये भवति जिज्ञासा। व्युत्पत्तिवादे तु सम्बन्धो द्विधा भेदोऽभेदश्च इत्येवं रूपेण विहितोऽस्ति।

किन्तु न्यायशास्त्रेऽन्येषु च शास्त्रेष्वपि वृत्तिनियामकवृत्त्यनियामकभेदेन सम्बन्धो द्विविधो विद्यते। तत्र वृत्तिर्नाम आधाराधेयभावेन वस्तुद्वयस्य बोधः। तस्य बोधस्य नियामकः = प्रयोजकः वृत्तिनियामकः। अर्थात् येन सम्बन्धेन वस्तुद्वयस्य आधाराधेयभावेनान्वयबोधो भवति स सम्बन्धश्च तस्य प्रयोजको भवति। अतः स सम्बन्धो वृत्तिनियामको भवति। यश्च सम्बन्ध आधाराधेयभावेन वस्तुद्वयस्य बोधं नैव प्रयोजयति सः सम्बन्धो वृत्त्यनियामकः कथ्यते। कथम्भूतः सम्बन्धो वस्तुद्वयस्य आधाराधेयभावेनान्वयबोधस्य प्रयोजको भवतीति जिज्ञासायां दृश्यते यत् द्रव्यद्रव्ययोः यः सम्बन्धः यथा भूतले घटः इत्यादौ यत्र भूतले आधारे घटः आधेयः संयोगेन भवति। अतः संयोगसम्बन्धो वृत्तिनियामको भवति। एवञ्च वृत्तितावच्छेकसम्बन्धो भवति वृत्तिनियामकः। संयोगस्तथा वर्त्तते एव। एवं द्रव्ययोरव-यवावयविभिन्नयोः संयोग एव सम्बन्धो भवति। एवमेव घटे नीलरूपं विद्यतेऽत्र घटो द्रव्यं नीलरूपं गुणः। गुणो नील आधेयः आधारे द्रव्ये घटे समवायसम्बन्धेन विद्यते गुणगुणिनोः समवायस्य सत्त्वात्। अतोऽत्र नीलघटयोराधाराधेयभावेना-न्वयबोधं प्रति समवायसम्बन्धः प्रयोजको भवति। तेन समवायसम्बन्धोऽपि भवति वृत्तिनियामकः।

अयं संयोगसम्बन्धोऽनित्यद्रव्यसंयोगे यत्र पतनविरोधी संयोगसम्बन्धो भवति स एव वृत्तिनियामकः। यश्च नित्यद्रव्ययोः संयोगो यथा परमाणुद्वयसंयोगः, आत्ममनःसंयोगः स च नास्ति पतनविरोधी, अतो न भवति वृत्तिनियामकः।

तृतीयो भवति कालिकः सम्बन्धः। सर्वस्य पदार्थस्य काले वर्त्तमानत्वे

कालिकः सम्बन्धो भवति। यतो हि सर्वाधारो भवति कालोऽतो भवति वृत्तिनियामकः। जन्ये पदार्थसत्त्वेऽपि कालिक एव सम्बन्धः तत्र जन्यानां कालोपाधिर्भवति इति नियमो नियामकः। नित्यपदार्थेषु न कोऽपि पदार्थः कालिकसम्बन्धेन भवति। विभिन्नकालीनयोः विषयत्वान्यसम्बन्धेन आधाराधेयभावविरह इति नियमेन जन्येष्वपि भिन्नकालिकाः पदार्था न कालिकसम्बन्धेन वर्त्तन्ते भिन्नकालिकयोरपि आधाराधेयभावः आगमिपंदार्थविषयकज्ञानानुरोधेन अङ्गीक्रियते।

चतुर्थो वृत्तिनियामकः सम्बन्धः स्वरूपसम्बन्धो विद्यते। सम्बन्धान्तरेण विशिष्टप्रतीतिजनानायोग्यत्वं स्वरूपसम्बन्धत्वमिति स्वरूपसम्बन्धस्य लक्षणं विद्यते। यत्र कश्चन पदार्थोऽन्यसम्बन्धमगृहीत्वैव पदार्थान्तरेण सह सम्बद्ध्यते, तत्र भवति पदार्थयोर्मिथः स्वरूपसम्बन्धो यथा घटघटत्वयोर्मध्ये समवायसम्बन्धः घटघटत्वे समवायिनी (समवायोऽस्ति अनयोस्ते), तयोः समवायसम्बन्धः प्रवियोग्यनुयोगिनोः सम्बन्धिनोः स्वरूपेणैव विद्यते न तु सम्बन्धान्तरेण। अतः समवायसमवायिनोः यः सम्बन्धः सः स्वरूपसम्बन्धो भवति।

स्वरूपसम्बन्धो द्विविधः। दैशिकविशेषणतारूपः, कालिकविशेषणतारूपश्च। दैशिकविशेषणतासम्बन्धोऽपि द्विविधः। भावीयदैशिकविशेषणतासम्बन्धः, अभावीयदैशिकविशेषणतासम्बन्धश्च। प्रथमो यथा तद्घटत्वं तद्घटे भावीयदैशिक-कविशेषणतासम्बन्धेन तिष्ठति। अभावेऽभावत्वञ्चाभावीयदैशिकविशेषणता-सम्बन्धेन तिष्ठति। इत्थं जातिभिन्ना समेऽपि धर्माः धर्मिणि (भावीयदैशिक-विशेषणतारूपेण) स्वरूपसम्बन्धेन तिष्ठन्ति। एवमेव सर्वेऽप्यभावाः स्वीयाधिकरणे (अभावीयदैशिकविशेषणतारूपेण) स्वरूपसम्बन्धेनैव विद्यन्ते। यथा 'घटाभाववद् गृहम्' अत्र गृहं स्वरूपसम्बन्धेन घटप्रतियोगिकाभावस्याधिकरणं भवति। स्वरूप सम्बन्धस्यैवापरं नाम 'विशेषणता' इति विद्यते।

एवमेव स्वरूपसम्बन्धः कालिकविशेषणतारूपोऽपि विद्यते। यदा किञ्चिद् वस्तु कालमाश्रित्य आधाराधेयभावेन प्रतीयते तत्र कालतद्वस्तुनोर्मध्ये कालिकविशेषणतारूपः स्वरूपसम्बन्धो भवति। यथा- गृहे चतुर्वादने घट आसीत्। अत्र यद्यपि गृहं घटस्य संयोगसम्बन्धेनाधारो भवति। किन्तु चतुर्वादनकालः कालिकविशेषणतारूपस्वरूपसम्बन्धेनाधारो भवति। अयं कालिकविशेषणतारूप-स्वरूपसम्बन्धः कालिकसम्बन्धोऽपि कथ्यते यस्य चर्चा पूर्वं कृतास्ति। तर्हि स्वरूपसम्बन्धेन के स्वस्मिन्नाधारे तिष्ठान्तीति जिज्ञासायां नैयायिकवरिष्ठाः कथयन्ति यत् द्रव्यादि पञ्चकभिन्नानामाश्रयेषु वर्त्तमानत्वे स्वरूपसम्बन्ध एव भवति।

उभयत्वत्रित्वादिपरार्धपर्यन्ताः संख्याः अवच्छेदकताश्च पर्याप्ति सम्बन्धेनाप्याश्रयेषु वर्तन्ते। उभयत्वादिव्यासज्यवृत्तिधर्माःउभयत्वाद्यवच्छेदेनैव पर्याप्तिसम्बन्धेन आश्रयेषूभयादिषु वर्त्तन्ते। अवच्छेदकतास्तु उभयत्वाद्यवच्छेदे-नैकत्वावच्छेदेन चाश्रयेषु वर्त्तन्त इतीयान् भेद उभयत्वादीनामवच्छेदकतानां च वर्त्तते। अयमपि पर्याप्तिसम्बन्धो वृत्तिनियामकः कथ्यते।

ये सम्बन्धा न आधाराधेयभावरूपवृत्तिनियामकास्ते वृत्त्यनियामकाः सम्बन्धाः कथ्यन्ते। एतादृशाः सम्बन्धा भूयांसः सन्ति। यथां तादात्म्यसम्बन्धः। स्ववृत्त्यसाधारणधर्मो हि तादात्म्यं कथ्यते। असाधारणञ्च एकमात्रवृत्तित्वम्। एकमात्रवृत्तित्वं नाम भेदविशिष्टं यत् तदन्यत्वम्। वैशिष्ट्यं च स्वसामानाधिकरण्यं स्वप्रतियोगिवृत्तित्वमित्युभयसम्बन्धेन। लक्षणसमन्वयश्चेत्थं-स्वं-नीलघटव्यक्तिभेदः तत्प्रतियोगिनी नीलघटव्यक्तिः तत् प्रतियोगिवृत्तित्वं द्रव्यत्वे, इत्युभयसम्बन्धेन भेदविशिष्टं द्रव्यत्वमेव तदन्यत्वं तद्व्यक्तित्वे-तन्नीलघटव्यक्तिवृत्तितद्व्यक्तित्वे आयाति। अत्र केवलस्य स्वप्रतियोगिवृत्तित्वस्यैव भेदविशिष्टनियामकसम्बन्धस्य निवेशे तु नेष्टसिद्धिः यतो हि स्वं - नीलव्यक्तिभेदः तत्प्रतियोगिनी- नीलघटव्यक्तिः तद्वृत्तित्वं तद्व्यक्तित्वे इत्यनेन सम्बन्धेन भेदविशिष्टमेव भवति तद्व्यक्तित्वम्। अतः स्वसामानाधिकरण्येति सम्बन्धस्यापि निवेशः करणीयः। तथा च स्वं - नीलव्यक्तिभेदः तत् सामानाधिकरण्यं तत्तद्व्यक्तित्वे नास्ति नीलघटव्यक्तिभेदवति घटे तत्तद्व्यक्तित्वस्याभावात्। एवमेव केवलस्य स्वसामानाधिकरण्यस्यैव सम्बन्धत्वे तु स्वपदेन पटादिभेदः तत् सामानाधिकरण्यं तद् व्यक्तित्वे इति भेदविशिष्टमेव भवति। अतः स्वप्रतियोगिवृत्तित्वस्यापि निवेशो विहितः। इत्थं स्वं-परादिभेदः तत् प्रतियोगी पटादिः तद्वृत्तित्वं-तद्व्यक्तित्वे नास्तीति। तथा चोभयसम्बन्धेन तद्व्यक्तित्वं विना भेदविशिष्ट एव सर्वो घटत्वादिधर्मो भवति। तदन्यत्वं तद् व्यक्तित्वे प्राप्यते।

अस्य तादात्म्यस्य सम्बन्धत्वं तु 'रूपवान् घटः', 'जातिमान् घटः' इत्यादिषु स्थलेषु आश्रयताबुद्धिनियामकत्वात् प्रसिद्धमस्ति। इदमेव तादात्म्यं भेदाभेद-घटितं नैयायिकाः समवायसम्बन्धेन व्यवहरन्ति। केचन वैयाकरणा अपि तादात्म्ये समवायसम्बन्धमन्तर्भावयन्ति। यद्यपि अभेदस्य सम्बन्धत्वं नाङ्गीकुर्वन्ति वैयाकरणाः पतञ्जलिप्रभृतयः तथापि 'राहोः शिरः' इत्यत्रौपाधिकभेदमादाय षष्ठ्युपपादनपरभाष्यप्रमाण्यात् केवलस्याभेदस्य न सम्बन्धत्वम् भेदाभेदघटितस्य तादात्म्यस्य तु सम्बन्धत्वमङ्गीकुर्वन्ति।

अन्यथा राहोः शिरः इत्यत्र भाष्यकृता षष्ठ्युपपादनमसङ्गतं स्यात्। नागेशश्चोद्योते[२५] "सिद्धे शब्दार्थ सम्बन्धे" इति वार्त्तिके कथयति "शब्दार्थयोः

सम्बन्धः शक्तिरूपं तादात्म्यमेवेत्यन्यत्र प्रपञ्चितम्" इति। स एव नागेशः शक्तिप्रकरणे लघुमञ्जूषायां लिखति "तस्मात् पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः वाच्यवाचकभावापरपर्याया। तद्ग्राहकं चेतरेतराध्यासमूलं तादात्म्यम्। तच्च सङ्केतः तस्यापि पदनिष्ठशक्त्युपकारकत्वाच्छक्तिरिति व्यवहारः, तस्य सम्बन्धत्वाभावात्। भेदाभेदरूपस्य तस्य तत्त्वासम्भवात्। तद्घटकभेदस्याभेदस्य वा तत्त्वादर्शनात्। अभेदस्यापि तत्त्वं खण्डयिष्यते।" इति। एवमेव सुबर्थप्रकरणेऽभेद रूपतादात्म्यस्य खण्डनं नैपुण्येन करोति- "यदपि 'वीरः पुरुष' इत्यादौ गुणभेदेनैकस्यापि द्रव्यस्य भेदारोपेण भेदाद् भेदगर्भतादात्म्यं सम्बन्ध इति तदपि न। वास्तवभेदमूलक इवारोपितभेदमूलकसम्बन्धेऽपि षष्ठ्यापत्तेः। तत्र विभक्तिवाच्यस्यापि सम्बन्धस्य संसर्गतयैव मानम्"।[२५] इत्थमत्रापि अभेदस्य भेदाभेदरूपतादात्म्यस्य च सम्बन्धत्वं खण्डयति। अतो नागेशस्य स्थलद्वये विरोधात् वदतोव्यवघातदोषो दृश्यते। एतस्मिन् इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावरूप एवैतेषु विषयेषु सम्बन्धस्वीकारे न दोषो भवति। अत्रत्यशेखरमञ्जूषाग्रन्थौ चोचितौ वर्त्तते। किन्तु नवीना आचार्यरामप्रसादत्रिपाठिचरणानुयायिनस्स्वयञ्च तेऽपि शब्दार्थयोः शक्तिः तादात्म्यसम्बन्धरूपा इत्येवं स्वीकुर्वन्ति। मम मतेतु नागेश इव तत्र वाच्यवाचकभावसम्बन्धरूपैव शब्दार्थयोः शक्तिः स्वीकरणीया तत्र तादात्म्यं च तादृशसम्बन्धग्राहकमेव मन्तव्यम्।

यतोहि तादात्म्यस्य तद् वृत्त्यसाधारणधर्मरूपत्वात् तद्रूपार्थयौगिकेन तादात्म्यशब्देन शक्त्या तदर्थस्य लाभो न सम्भवः। चेद् रूढ्या तदर्थलाभः क्रियते तदा गौरवम् क्लृप्तकल्पना च। भेदाभेदरूपयोर्विरूद्धयोर्नैकत्रोपस्थितिः सम्भवा। चेदुच्यते भेदो वास्तविकोऽभेदश्चारोपित इति न तयोर्विरोधस्तदपि न, अभेदस्य व्यवहारनियामकत्वानापत्तेः। अपि च भेदाभावस्य प्रतियोगितावच्छेदक-स्वरूपत्वेन रूपादौ तदारोपे तव सिद्धान्तभङ्गः, अतिरिक्तत्वे च गौरवमायाति।

यत्र च शब्दशास्त्रप्रक्रियानिर्वाहाय तादात्म्यस्य सम्बन्धत्वमङ्गीक्रियते तत्र परमतवासनया आरोपितसम्बन्धत्वामादायैवैति बोध्यम्। एवमेवान्येऽपि व्याकरणप्रक्रियोपयोगिनः सम्बन्धाः सन्ति वृत्यनियामकाः वृत्तिनियामकाश्च। यथा ज्ञाप्यज्ञापकभावः, लक्ष्यलक्षणभावः, प्रात्याय्यप्रत्यायकभावः, उत्सर्गापवाद-भावः, बाध्यबाधकभावः, सामान्यविशेषभावः, परिच्छेद्यपरिच्छेदकभावः, अनुवत्त्यनु-वर्तकभावः, संख्यासंख्येयभावः, व्याप्यव्यापकभावः, ग्राह्यग्राहकभावः, विषयविषयिभावः उपमानोपमेयभावः, विशेषणविशेष्यभावः, गुणगुणिभावः कैमर्थक्यभावश्च। सामान्येनैषां विवेचनं विधीयते–

(१) ज्ञाप्यज्ञापकभावसम्बन्धः– अयं सम्बन्धः पदपदार्थोभयवृत्तिः स्वरूपसम्बन्धविशेषोवृत्तिनियामकः साक्षात् सम्बन्धत्वेन परिगण्यते। "तुमुण्ण्वुलौ क्रियायां क्रियार्थायाम्"[२६] इति सूत्रभाष्ये सम्बन्धोऽयं समर्थितः। यथा "ण्वुलः क्रियार्थोपपदस्य पुनर्विधानं क्रियते। किमर्थम्? ज्ञापकार्थम्। किं ज्ञाप्यम्? एतज्ज्ञाप यत्याचार्यः क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्ति इति। ण्वुलपि तृजादिः...[२७] इति। भाष्येऽस्मिन् ण्वुलप्रत्ययस्य पुनर्विधानं ज्ञापकम्, क्रियार्थः क्रियोपपदे सति तृजादिप्रत्ययाभावे ज्ञाप्यः। इत्थमनयोर्ज्ञाप्यज्ञापक-भावसम्बन्धो भाष्यसमर्थितो भवति। अयं सम्बन्धो द्विविधः। दैशिकज्ञाप्यज्ञापक-भावसम्बन्धः, कालिकज्ञाप्यज्ञापकभावसम्बन्धश्च। यथा 'सति गुणे द्रव्यत्वमस्ति' इति नियमो भवति। अत्र द्रव्यत्वकर्त्तृका सत्ता ज्ञाप्या, गुणकर्त्तृकसत्ताज्ञापिका भवति। एवमत्र दैशिकज्ञाप्यज्ञापकभावसम्बन्धो जायते। इत्थमेव 'देवदत्तो गोषु दुह्यमानासु गतः' इति वाक्ये देवदत्तकर्तृका तन्निष्ठा गमनक्रिया ज्ञाप्या गोकर्मकदोहनक्रिया ज्ञापिका। इत्येवमत्र कालिकज्ञाप्यज्ञापकभावसम्बन्धो निष्पद्यते। अत्र हि देवदत्तः कदा गतः इति गमनाश्रयकालजिज्ञासायां यस्मिन् समये गावो दुह्यन्ते तदा गतः इत्युत्तरे सति ज्ञाप्यज्ञापकयोः कालाधारेण कालिकज्ञाप्यज्ञापक-भावसम्बन्धो भवति।

(२) लक्ष्यलक्षणभावसम्बन्धः– कर्मप्रवचनीयसंज्ञाबोधकसूत्रेषु लक्षणविषये प्रादयः कर्मप्रवचनीयसंज्ञाः भवन्ति। तत्र लक्ष्यलक्षणे समाश्रित्य सम्बन्धोऽयं लक्षितः। "अनुर्लक्षणे[२८], लक्षणेत्थं भूताख्यानभागवीप्सासु प्रतिपर्यनवः।[२९] यस्य च भावेन भावलक्षणम्"[३०] इत्यादिसूत्रेषु यथा स लक्ष्यलक्षणभावसम्बन्धो दृश्यते। प्रतिपादयति च 'अनुर्लक्षणे' इति भाष्यकारः[३१] "लक्षणं हि नाम तद्भवति येन पुनः लक्ष्यते" इत्यादिनो लक्षणस्वरूपं विज्ञाप्य "शाकल्येन सुकृतां संहितामनुनिशम्य देवः प्रावर्षत्" इति वाक्ये देवकर्त्तृकवर्षणं संहिताकर्मकं श्रवणं लक्षणमुक्तवान्। तेनात्र लक्ष्यलक्षणभावसम्बन्धो ज्ञायते। अयं सम्बन्धः पदपदार्थोभयवृत्तिः वृत्त्यनियामको भेदव्याप्यः साक्षात्त्वविशिष्टश्च।

(३) प्रत्याय्यप्रत्यायकभावसम्बन्धः– सम्बन्धोऽयं "मतौ छः सूक्तसाम्नोः ५/२/५९।। इति सूत्रभाष्ये प्रदर्शितोऽस्ति। तत्र शब्दः प्रत्यायकः अर्थविशिष्टशब्द-स्वरूपं प्रत्याय्यम्" इत्येवमनयोः प्रत्याय्यप्रत्यायकभावसम्बन्धो भवति। अयं वाच्यवाचकभावबोध्यबोधकभावशब्दाभ्यामपि बोध्यते। किन्तु नायं सम्बन्धो वृत्तिनियामकः।

(४) उत्सर्गापवादभावसम्बन्धः– सम्बन्धमिमं "दयतेर्दिगि लिटि" इति सूत्रस्थभाष्यव्याख्याने कैयटो विवृतवान्। तद्यथा "अयं दोषो नोत्सर्गापवादपक्षे

उपात्तो भूभावस्यावकाशदर्शनेन उपसर्गापवादनिराकरणात्। द्वयोस्तु सावकाशयोः परत्त्वाद् द्विर्वचने कृते बभूव इति न सिध्यति" इति।[३२] एतत् सन्दर्भस्थविवेचनेन द्विर्वचनस्योत्सर्गत्वम्, अस्तेर्भूविधानस्य चापवादत्वं सूच्यते। इत्थमत्रोत्सर्गापवाद भावसम्बन्धो ज्ञायते। अयमपि सम्बन्धो वृत्त्यनियामके बाध्यबाधकभावपदेनापि व्यवह्रियते।

**(५) बाध्यबाधकभावसम्बन्धः–** सम्बन्धोऽयं महाभाष्ये प्रथमतया हयवरट् इति सूत्रे भाष्यकारेण कैयटेन[३३] च स्पष्टतया प्रतिपादितः। तत्र हि 'नेमौ रहौ कार्यिणौ'। अत्र हकारवद् रेफोऽपि न कार्यी इत्यर्थः। तत्रैकवाक्यतायां सामान्यविशेषविध्योर्लोकव्यवहारादेव शब्दार्थसम्बन्धपरिज्ञानवत् सामान्यविधेर्विशेषविधिःर्बाधकः। प्रत्यक्षश्च विशेषविधिः सामान्यविधिस्त्वनुमेय इति रेफस्य कार्यित्वं निमित्तत्वेन बाध्यते। अत्र निमित्ततया विषयता बाधिता विशेषविहितत्वात्। कार्यित्वरूपा विषयता हि बाध्या भवति सामान्यशास्त्रविहितत्वात्। इत्थमनयोः बाध्यबाधकभावसम्बन्धो भवति। अयमपि वृत्त्यनियामको भेदव्याप्यः पदपदार्थोभयवृत्तिकः सम्बन्धो विद्यते।

**(६) सामान्यविशेषभावसम्बन्धः–** अयं सम्बन्धः "तस्मिन्निति निर्दिष्टे पूर्वस्य"[३४] इत्यत्र "किं पुनरिति। सामान्यविशेषभावस्यानवस्थानात् प्रश्नः। तत्र 'गौः सामान्यं कृष्णो विशेषः' इत्याद्यग्रिमेण भाष्येण सामान्यविशेषयोर्नियता स्थितिर्न प्रकल्पत इति कथनेन विवक्षयैव सामान्यविशेषभावः सिद्धान्तितः। अयमपि वृत्त्यनियामकोऽभेदव्याप्यः पदपदार्थोभयवृत्तिको भवति।

**(७) परिच्छेद्यपरिच्छेदकभावसम्बन्धः–** सम्बन्धोऽयं "समर्थः पदविधिरिति सूत्रभाष्ये उद्योतग्रन्थे च प्रतिपादितः। तत्र प्रदीपकारः परिच्छेद्यपरिच्छेदकभावं विशेषणविशेष्यभावरूपेण प्रतिपादयति, नागेशश्च विशेषणविशेष्यभावनिबन्धनं राज्ञः पुरुष इत्यत्र, अभेदनिबन्धनं नीलो घट इत्यत्र, परिच्छेद्यपरिच्छेदकभावं च द्रोणो व्रीहिरित्यत्र स्वीकरोति।[३५]

वस्तुतस्तु सम्बन्धोऽयं परिच्छेद्यपरिच्छेदकभावो भेद्यभेदकभावो विशेषणविशेष्यभावो वा इत्येवं प्रकारेण शब्दभेदेऽपि तात्पर्याभेदात् समानरूपतयैव स्वीकर्तुं शक्यते। सम्बन्धोऽयं भेदाभेदोभयव्याप्यो वृत्तिनियामको वृत्त्यनियामकश्च विद्यते। इत्थमेव **(८) अनुवर्त्त्यानुवर्त्तकभावसम्बन्धो** "लः कर्मणि च भावे चाकर्मकेभ्यः"३/४/६९ इत्यत्र, **(९) संख्यासंख्येयभावसम्बन्धः** "संख्यायाः संज्ञासंघसूत्राध्ययनेषु ५/१/५८।। इति सूत्रभाष्यप्रदीपग्रन्थे चर्चितोऽस्ति। एतावुभावपि सम्बन्धौ वृत्त्यनियामकौ स्तः। एवमेव **(१०) व्याप्यव्यापकभाव-**

सम्बन्धः (११) ग्राह्यग्राहक भावश्चैतौ सम्बन्धौ क्रमशः "कालाध्वनोरत्यन्तसंयोगे ५/२/४५ इति सूत्र भाष्यप्रदीपग्रन्थे, अस्य च्वौ।।७/४/३२।। इति सूत्रभाष्यादौ च प्रकीर्तितौ वृत्त्यनियामकौ स्तः। एवमेव (१२) विषयविषयिभावसम्बन्धो वृत्त्यनियामकः "प्रतिलक्षणं लक्षणभेदादस्ति विषयविषयिभावः" इति चिणोलुक ।।६/४/१०४।। सूत्रस्थ भाष्यप्रदीपग्रन्थादङ्गीक्रियते। एवमेव (१३) उपमानोपमेय-भावसम्बन्धः "आद्यन्तवदेकस्मिन् ।।१/१/२१।। इत्येतत् सूत्रीयभाष्यप्रदीपग्रन्थे प्रतिपादितः। अयं हि वृत्त्यनियामकः समानविभक्तिस्थले च व्यवह्रियते।

(१४) विशेषणविशेष्यभावसम्बन्धः– विशेषणविशेष्ययोर्विषये भर्तृहरिः कथयति यत् 'अनिर्ज्ञातं विशेष्यं 'निर्ज्ञातोऽर्थो' विशेषणं भवति। विशेषणं परार्थत्वात् सर्वेषामुपकारिणां शेषत्वं भवति–

"विशेष्यं स्यादनिर्ज्ञातं निर्ज्ञातोऽर्थो विशेषणम्।
परार्थत्वेन शेषत्वं सर्वेषामुपकारिणाम्।।"[३६]

इत्येवं भर्तृहरिः वाक्यपदीये प्रतिपादयति। यद्यपि नैयायिकाः एतस्मिन् विषयेऽभेदसम्बन्धमन्ये च तादात्म्यसम्बन्धमङ्गीकुर्वन्ति। सम्बन्धोऽयं सामान्येन 'नीलो घटः' इत्यादिषु स्वीक्रियते। अयं भेदस्थले 'राज्ञः पुरुष' इत्यत्र स्वस्वामिभावा-वच्छिन्न विशेषणविशेष्यभावसम्बन्धोऽङ्गीक्रियते। अयमपि वृत्यनियामकः सम्बन्धो भवति, इको गुणवृद्धी।।१/१/३।। इति सूत्रभाष्ये तच्छेषशब्देन च सूचितोऽस्ति।

(१५) गुणगुणिभावसम्बन्धः– इको गुणवृद्धी।।१/१/३।। अलोऽन्त्यस्य ।।१/१/५२।। इत्यनयोः शेषशेषिभावेन गुणगुणिभावसम्बन्धः 'इको गुणवृद्धी' ।।१/१/३।। इति सूत्रभाष्ये सङ्केतितः। अयमपि सम्बन्धो वृत्त्यनियामकः पदपदार्थोभयवृत्तिः भेदाभेदोभयव्याप्यः साक्षात्त्वविशिष्टश्च विद्यते।

(१६) कैमर्थक्यसम्बन्धः– 'यू स्त्र्याख्यौ नदी' ।।१/४/३।। इति सूत्रस्थं कैमर्थक्यान्नियमो भवतीति भाष्यमङ्गीकृत्य कैयटः[३७] "कोऽर्थोऽस्य किमर्थकम्, तस्य भावः कैमर्थक्यम् प्रश्नविषयविषयिणोः सम्बन्धो भावप्रत्ययेनोच्यते" इत्युक्तवान्। अत्र नागेशश्च[३८] "सम्बन्धो विषयविषयिभावः। समासकृत्तद्धितोत्तर-त्वादित्यर्थ" इति कथितवान्। इत्थं प्रश्नविषयः प्रयोजनं, विषयी सूत्रम्। इत्येवं प्रश्नविषये विषयविषयिभावसम्बन्धः कैमर्थक्यसम्बन्धः कथ्यते। अयमपि वृत्त्यनियामको विद्यते।

शब्दशास्त्रप्रक्रियानिर्वाहायापरेऽपि केचन सम्बन्धाः स्वीकृताः सन्ति। यदा "यस्मात् प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम् ।।१/४/१३।। इति सूत्रभाष्यप्रदीपोद्योते नागेशः[३९] "यद्यप्यवयवावयविभावस्य षष्ठ्यर्थस्याभावात् कथं तेनापि सिद्धिः?

तथापि यदन्त्यवर्णनिरूपितमुपधात्वं संयोगस्य' इति निरूपकत्वलक्षणे षष्ठ्यर्थे बहुव्रीहिरित्यभिमानः" इत्याह। इत्येवमत्र वर्णस्य निरूपकत्वमुपधाया निरूप्यत्वमित्युभयोः (१७) निरूप्यनिरूपकभावसम्बन्धः– सिध्यति। इत्थमेव हलन्ताच्च ।।१/२/१०।। इति सूत्रभाष्येऽन्तशब्दस्य समीपार्थकत्वमूरीकृत्य हल् चासौ अन्तश्चेति विग्रहे हलन्त इत्यत्र कर्मधारयसमासो विहितः। तत्र इको झल् ।।१/२/९।। इति सूत्रात् इक् इत्यनुवर्त्त्य षष्ठ्यन्तत्वेन विपरिणमय्यान्तपदार्थेन समीपेन सह (१८) अवध्यवधिमद्भावसम्बन्धोऽङ्गीकृतः। एतेषु अवयवावयविभावः, निरूप्यनिरूपकभावः, अवध्यवधिमद्भावः इति त्रिषु सम्बन्धेषु प्रथमो वृत्तिनियामकः शेषौ वृत्यनियामकौ स्तः।

प्रत्यय.।।३/१/१।। इति सूत्रस्य भाष्ये[७०] "निर्ज्ञातोऽर्थोनिमित्तम् अनिर्ज्ञातोऽर्थो निमित्ती। इह च प्रत्ययोऽनिर्ज्ञातार्थः प्रकृत्युपपदोपाधयो निर्ज्ञाताः" इत्याद्याह "निमित्तस्य निमित्तिकार्यार्थत्वादन्यत्रापि" इति वार्त्तिकव्याख्याप्रसङ्गे। अनेन भाष्येण (१९) निमित्तनिमित्तिभावसम्बन्धः सिध्यति। सम्बन्धोऽयमपि वृत्त्यनियामकः।

एवमेव 'विप्रतिषेधे परं कार्यम्'।।१/४/२।। एतत् सूत्रे नागेशः "पूर्वपरप्राप्त-रिति। पूर्वस्य परस्य च प्राप्तेरित्यर्थः वचनद्वयप्रामाण्यादिति यावत्। भगवता तु धर्मधर्मिणोरभेदमाश्रित्य प्राप्तिशब्देन पूर्वपरशब्दयोः सामानाधिकरण्यमाश्रितम्। पूर्वस्याश्च परस्याश्च प्राप्तेरिति अनेन महाभाष्योद्योतग्रन्थसन्दर्भेण धर्मधर्मिणो-र्भेदाभेदौ प्रामाणिकौ भवतः। तत्र भेदपक्षे षष्ठी, अभेदपक्षे च सामानाविभक्ति-र्भवति। एवञ्चात्र पूर्वस्य परस्य च शास्त्रस्य प्राप्तिव्यवहारे प्राप्तिरूपधर्मस्य योगरूपेण धर्मिण्या (२०) धर्मधर्मिभावसम्बन्धः सामान्यतया बोद्धुं शक्यते। सम्बन्धोऽयं वृत्तिनियामकत्वेनाङ्गीकृतोऽस्ति।

व्याकरणशास्त्रे बहुषु स्थलेषु आगमा आदेशाः प्रत्ययादिविधेयाश्च विधीयन्ते। तत्रागमस्य यदुद्देश्यं तेन सह आगमस्य (२१) आगमागमिभावसम्बन्धो भवति। यथा 'ह्रस्वनद्यापोनुट् ७/१/५४ इति सूत्रे ह्रस्वनद्यापः आगमिनः नुट् चागमः। अत्रोभयोरागमागमिभावसम्बन्धोऽङ्गीक्रियते। अयं सम्बन्धो वृत्तिनियामको भवति स्वरूपसम्बन्धविशेषरूपत्वात्।

इत्थमेव यत्र किञ्चिदुद्दिश्य तस्य स्थाने किञ्चिद् विधीयते तत्र (२२) स्थान्यादेशभावसम्बन्धो जायते। यथा 'इको यणचि ।।६/१/७।। स्तोः श्चुना श्चुः।।८/४/४०।। इत्यादिषु स्थलेषु इकः स्थानी यण् आदेशः, स्तोः

स्थायी श्नुः आदेशः इत्येवमत्र स्थान्यादेशभावसम्बन्धो बोध्यते। एवमेव "संख्याया गुणस्य निमाने मयट्।।५/२/४७।। इति सूत्रे भाष्यप्रदीपे (२३) निमाननिमेय-भावसम्बन्धः स्पष्टतया व्याख्यातो विद्यते। एवमेव "चतुर्थी सम्प्रदाने।।२/२/२३।। इति सूत्रभाष्यप्रदीपव्याख्यानेन (२४) कार्यकारणभावसम्बन्धोऽपि गृह्यते। तथा च प्रदीपग्रन्थः[५१] "तच्छब्देन कार्यं निर्दिश्यते। तस्मादिदं तदर्थमिति समासेन विशिष्टकार्यप्रयोजनं कारणमभिधीयते। तदर्थस्य भावः तादर्थ्यम् इति कार्यकारणसम्बन्ध उच्यते, समासकृत्तद्धितेषु भावप्रत्ययेन सम्बन्धाभिधानमिति वचनात्।" इति विद्यते। अत्र च स्पष्टतया कार्यकारणभावसम्बन्धो निर्दिष्टः। अयं सम्बन्धो भेदाभेदान्यतरव्याप्यो वृत्तिनियामकः पदपदार्थोभयवृत्तिश्च विद्यते। सम्बन्धोऽयं शाब्दिकप्रक्रियायां बहुत्र समाश्रितोऽस्ति।

सर्वेषां कारकाणां कारकत्वेनाविवक्षायां सम्बन्धत्वेन विवक्षायां च तत्र तत्र सामान्यसम्बन्धाः स्वीकृताः सन्ति। यथा 'शम्भोश्चरणौ भजे' इति वाक्ये चरणौ इति शब्दनिष्ठकर्मत्वस्य सामान्यसम्बन्धत्वेन विवक्षायां शम्भुशरीरावयवचरणद्वयसम्बन्धि भजनमिति बोधो जायते। इत्थमेवान्यत्रापि कारकत्वेनाविवक्षाया सम्बन्धत्वेन विवक्षया च सम्बन्धसामान्यस्य ज्ञानं जायते।

यत्र यत्र चोपपदविभक्तयः सन्ति, तत्रापि सम्बन्ध एव विवक्षितो भवति, षष्ठीविभक्तेश्च तत्र प्राप्तिर्भवति, किन्तु स्वस्मिन् विषये तत्तदुपपदविभक्ति-नियामकानि सूत्राणि षष्ठीं प्रबाध्य, द्वितीयादिविभक्तीः नियमयन्ति। यथा 'कालाध्वनोरत्यन्तसंयोगे'।।२/३/५।। इत्यत्र अनुर्लक्षणे।।१/४/२४।। इति सूत्रविहितकर्मप्रवचनीयसंज्ञाश्रयणे लक्ष्यलक्षकभावसम्बन्धः, उभसर्वतसोः कार्या. इत्यादिषु चावध्यवधिमद्भावसम्बन्धो भवति। इत्थं सर्वत्रोपपदविभक्तिषु कश्चन सम्बन्धविशेषोऽवश्यमेव वक्तव्यो भवति।

पूर्वं सम्बन्धलक्षणं प्रसङ्गादाचार्यनागेशेन प्रदर्शितो भर्तृहरिणा च संकेतितो विद्यते। आचार्यभर्तृहरिः सम्बन्धविषये कथयति-

"द्विष्ठोऽप्यसौ पदार्थत्वाद् गुणेषु व्यतिरिच्यते।
तत्राभिधीयमानश्च प्रधानेऽप्युपयुज्यते।।"[५२]

सम्बन्धोऽयं द्विष्ठः परार्थत्वाद् गुणेषु व्यतिरिच्यत इति कथनात् सम्बन्धिभिन्नः परार्थत्वाद् गुणानां परं-विशेष्यं प्रधानं प्रति विशेषणत्वेन विवक्षितत्वाद् उद्भूततया प्रतीयते। तत्राभिधीयमानश्चेत्युत्तरार्धेन आश्रयतया विशिष्ठप्रतीति-नियामकश्चेति लभ्यते। तेन सम्बन्धिभिन्नत्वे सति द्विष्ठत्वे सति आश्रयतया विशिष्टप्रतीतिनियामकत्वमिति भवति सम्बन्धलक्षणम्। इत्थमेव वृह-मञ्जूषायां लघुमञ्जूषायां परमलघुमञ्जूषायां सम्बन्धलक्षणं नागेशः प्रतिपादितवान्।

नैयायिकवैशेषिकादयः केचन आचार्याः लक्षणेमतन्नैवाङ्गीकुर्वन्ति। कथयन्ति लक्षणे यह द्विष्ठत्वमित्युक्तमस्ति तद् बहुषु सम्बन्धेषु नैव संघटते। यतो हि द्विष्ठत्वमपि सम्बन्धस्य सम्बन्धिनोः केनापि सम्बन्धेन स्यात् न हि कश्चन सम्बन्धः एकेनैव सम्बन्धेन क्वचिद् द्वयोराश्रययोस्तिष्ठति। यद्यपि संयोगसमवायादयः सम्बन्धिद्वयभिन्नाः द्विष्ठाः विशिष्टप्रतीतिनियामकाः दृश्यन्ते। यथा घटो भूतले संयोगसम्बन्धेन वर्त्तन्ते संयोगसम्बन्धश्च घटभूतलभिन्नः घटभूतलरूपसम्बन्धिद्वयनिष्ठो विद्यते। स च संयोगसम्बन्धः भूतलानुयोगिकसंयोगविशिष्टो घटः इति विशिष्टप्रतीतिनियामकश्च भवति। तथापि सूक्ष्मविचारे संयोगे द्विष्ठत्वं नैव प्रतीयते। यतो हि संयोगसम्बन्धो न ह्येकेन सम्बन्धेन भूतले घटे च तिष्ठति। स च भूतलेऽनुयोगित्वसम्बन्धेन, घटे च प्रतियोगित्वसम्बन्धेन विद्यते। अतो न तस्य द्विष्ठत्वं सिध्यति। चेद् येन केनचित् सम्बन्धेन द्विष्ठत्वमङ्गीक्रियते तर्हि न केवलं द्विष्ठता सम्बन्धानामपित्वनेकनिष्ठता सिध्येत्। कालिकादिसम्बन्धेनानेकत्र तस्य विद्यमानत्वात्। अतः सम्बन्धलक्षणे द्विष्ठत्वमनादेयमेव।

एवमेव सम्बन्धिभिन्नत्वे सतीत्यपि सत्यन्तं विशेषणं सम्बन्धलक्षणेऽनादेयमेव। सम्बन्धिपदघटतया सम्बन्धस्य प्रवेशात् आत्माश्रयदोष आयाति। स्वज्ञाने स्वज्ञानापेक्षात्वमात्माश्रयत्वमिति लक्षणस्य सत्त्वात्। प्रकृतसम्बन्धलक्षणे हिं सम्बन्ध्यवच्छेदकतया सम्बन्धस्य प्रवेशात् सम्बन्धिज्ञाने सम्बन्धज्ञानापेक्षत्वाद् आत्माश्रयदोषो दृश्यत एव। चेदत्र तद्दोषवारणाय प्रतियोग्यनुयोगिभिन्नत्वे सतीति परिष्क्रियते तर्हि लक्षणे यद्यपि सम्बन्धिपदाभावात् स दोषो न भवति तथापि स्वरूपसम्बन्धे दोष आपतति। स्वरूपसम्बन्धो हि प्रतियोग्यनुयोगिरूप एव भवति। तत्रसम्बन्धलक्षणस्यास्याव्याप्तिः स्यात्। तेन विशिष्टप्रतीतिनियामकत्वं सम्बन्धत्वमित्येव सम्बन्धलक्षणं सिध्यति। गंगेशोपाध्यायः[४३] इत्येवं लक्षणं किञ्चित् परिष्कृत्य "सम्बन्धश्चाविशिष्टव्यावृत्तविशिष्टधीनियामक" इति सम्बन्धलक्षणमाह। किन्तु रुचिदत्तमिश्रः 'प्रमेयवान् घटः' इत्यत्र प्रमेये अविशिष्टव्यावृत्तेति विशेषणस्याप्रसिद्ध त्वाल्लक्षणमेतत् न स्वीचकार। केवलं विशिष्टप्रतीतिविषयत्वमितिलक्षणस्वीकारेऽपि न दोषाभावः अतीन्द्रियसंयोगे अर्थात् परमाणुद्वयसंयोगे आकाशपरमाणुसंयोगादौ च न लक्षणमेतत् संघटेत अतीन्द्रियाणां परमाणुद्वयसंयोगाकाशपरमाणुसंयोगदीनां प्रत्यक्षतया अगृहीतत्त्वात्। यतो हि विशिष्टप्रतीतिविषयता जनकतारूपा, सा च प्रत्यक्षतया प्रतीयते तदैव तस्याः ज्ञानं स्यात्। प्रत्यक्षं प्रति विषयस्य कारणत्वात्।

न चानुमानादिकं प्रति विषयस्य कारणता स्वीक्रियते। परमाणवः आकाशं च प्रत्यक्षायोग्यमतो न प्रत्यक्षं प्रति तेषां संयोगः कारणं भवत्ति। फलतः तत्र तत्र संयोगसम्बन्धे विशिष्टप्रतीतिंविषयत्वाभावात् सम्बन्धलक्षणं तत्र न संघटेत

अतोऽत्राव्याप्तिः स्यात्। तथैवानुमानसिद्धे स्वरूपसम्बन्धेऽपि विशिष्टप्रतीतिविषयत्वाभावात् अव्याप्तिदोषः स्यात्। एवमेव कालिकसम्बन्धेऽपि बोध्यम्। एवमेव विशेषणधीजन्यज्ञानासाधारणविषयत्वरूपसम्बन्धलक्षणस्वीकारेऽपि दोषो भवति तत्र लक्षणघटकविशेषणज्ञानं सम्बन्धज्ञानं विना असम्भवि विद्यते। अतस्तत्रान्योऽन्याश्रयदोष आपतति। अन्ते सर्वाणि सम्बन्धलक्षणविषयकमतानि विमृश्य गदाधारमिश्रपादः तत्प्रतियोगित्वविशेषः तदनुयोगित्वविशेषो वा सम्बन्ध इत्येव निर्दुष्टं सम्बन्धलक्षणं कृतवान्।

अत्रोच्यते। सम्बन्धलक्षणविषयेऽभियुक्तैः सम्बन्धिभिन्नत्वे सति द्विष्ठत्वे सति आश्रयतया विशिष्टप्रतीतिनियामकत्वम् इत्येव लक्षणं सम्बन्धस्य लक्षितम्। तत्रैते पूर्वोक्तदोषास्तेषां मनीषिणां बुद्धौ नासन् इति वक्तुं न शक्यते। तेषां त्रिकालज्ञत्वात्। अत एव महर्षिपाणिनिकात्यायनपतञ्जलीनां कृते महर्षिरिति मुनिरिति भगवानिति विशेषणपदैर्व्यवहारो दृश्यते। पाणिनिश्च 'षष्ठी शेषे'।।२/३/५०।। प्रभृतिषष्ठीविभक्तिनियामकसूत्रेषु एतस्यैव लक्षणस्यानुकूलानि सूत्राणि रचितानि। यथा षष्ठीहेतु प्रयोगे।।२/३/२६।। इत्यत्र कार्यकारणभावसम्बन्धस्तथैव सूचितः। एवमेव षष्ठ्यतसर्थप्रत्ययेन।।२/३/३०, एनपा द्वितीया।।२/३/३१।। दुरान्तिकार्थैः षष्ठ्यन्यतरस्याम्।।२/३/३४।। इत्यादौ दैशिकविशेषणतासम्बन्धः स्वीकृतः। एवमेव महर्षिः वररुचिरपि "सिद्धे शब्दार्थसम्बन्धे" इति वार्त्तिके सम्बन्धस्य नित्यत्वं स्वीकरोति। तथैव षष्ठीविभक्तिनिरूपणप्रसङ्गे च "निमित्तपर्यायप्रयोगे सर्वेषां प्रायदर्शनम्" इति वार्त्तिके कार्यकारणभावसम्बन्धं सूचयति। महर्षिः पतञ्जलिश्च "यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी"।।२/३/९।। इति सूत्रे सम्बन्धिभिन्नत्वे सति द्विष्ठत्वे सति" इति सम्बन्धलक्षणस्य विशेषणद्वये स्वसम्मतिं प्रस्तौति- "द्वितीया तर्हि प्राप्नोति 'कर्मप्रवचनीये द्वितीया" अत्रैव अधिब्रह्मदत्ते पञ्चाला इति प्रयोगो दत्तः। तत्र कैयटः "ब्रह्मदत्तशब्दादनेन द्वितीयापवादेन विधीयमानया सप्तम्या उभयमतस्य सम्बन्धस्याभिधानात् पञ्चालशब्दाद् द्वितीया न भविष्यति" इत्युक्तवान्। नागेशश्च "परस्परप्रतियोगिकसम्बन्धस्य परस्परनिष्ठस्य तेन द्योतनादस्त्येव तत्प्राप्तिरिति भावः"इत्युक्तवान्।[४४] एतैः ग्रन्थैः सम्बन्धस्य सम्बन्ध्याश्रितत्वं सम्बन्धिभिन्नत्वं च समर्थयते। भर्तृहरिस्तु स्पष्टतया "द्विष्ठोऽप्यसो परार्थत्वाद् गुणेषु व्यतिरच्यिते। तत्राभिधीयमानश्च प्रधानेऽप्युपयुज्यते।।"[४५] इत्याह नामार्थनिरूपणे कौण्डभट्टोऽपि "सम्बन्धस्योभयनिरूप्यत्वात् पदादर्थस्यैव तद्बोधकत्वेन स्वस्यापि ज्ञानसम्भवाच्च" इत्युक्त्या लक्षणमेतत् समर्थयति। अतः सम्बन्धलक्षणे सर्वाण्यपि विशेषणानि सार्थकानि सन्ति। तैर्न कुत्रापि अव्याप्त्यतिव्याप्त्यात्माश्रयेत्यादिदोषाणां सम्भावना, व्याख्यानेन तेषां समाधानात्। अत एव भाष्यकारो लिखति "व्याख्यानतो विशेषप्रतिपत्तिर्नहि

संदेहादलक्षणम्''[४८] इति। सम्बन्धलक्षणेऽस्मिन् सम्बन्धस्य द्विष्ठत्वविषये यो विचारो विद्यते तत्र नैयायिकवरेण्यैः सर्वाधिको दोषः प्रकटितो यत् न कस्यापि सम्बन्धस्य द्विष्ठत्वं भवितुमर्हतीति। यतो हि तत्र संयोगादिसम्बन्धेषु यथा संयोगः अनुयोगित्वसम्बन्धेन भूतले प्रतियोगित्वसम्बन्धेन च घटे तिष्ठति नत्वेकेन सम्बन्धेन। येन केनापि सम्बन्धेन द्विष्ठत्वस्वीकारे तस्यानेकनिष्ठत्वापत्तिः स्यात्। तत्रैवं बोध्यम्, येन सम्बन्धेन यद् वस्तु, सम्बन्धो वा यस्मिन् विद्यते तेनैव सम्बन्धेन तन्निष्ठत्वं तस्य भवतीति सिद्धान्तः। यथा संयोगः सम्बन्धः सन् गुणोऽपि भवति गुणगुणिनोश्च भवति नैयायिकमते समवायसम्बन्धः। अतः घटभूतलयोः द्रव्ययोः संयोगः समवायसम्न्धेनैव स्थास्यति, न तु तद्भिन्नेन केनचित् सम्बन्धेन। तर्हि एकेनैव समवायसम्बन्धेन तयोः सत्त्वात् द्विष्ठत्वं तस्य भवति। एवमेव समवायसम्बन्धो भवति अवयवावयविनोः गुणगुणिनोः जातिव्यक्त्योस्तत्र समवायः एकेनैव स्वरूपसम्बन्धेनोभयत्र तिष्ठति। यत्र च स्वरूपसम्बन्धो विद्यते सोऽपि तेनैव सम्बन्धेन सम्बन्धिनोः तिष्ठति। एवमेव स्वस्वामिभावादिसम्बन्धा अपि अखण्डोपाधिरूपाः सम्बन्धिनोस्तिष्ठन्ति। अतो न कुत्रपि दोषः। चेदुच्यते तादात्म्यसम्बन्धे अभेदसम्बन्धे एवमेव केषुचित् वृत्यनियामकेषु सम्बन्धेषु द्विष्ठत्वं नैव भवितुमर्हति तत्राव्याप्तिः स्यात् तर्हि द्विष्ठत्वमत्र परिष्क्रियते। द्वित्वविशिष्टत्वं द्विष्ठत्वम्। वैशिष्टयं च स्वसामानाधिकरण्यं स्वाश्रयसामानाधिकरण्यमेतदन्यतरसम्बन्धेन। लक्षणसमन्वयश्चेत्थम्- 'नीलघट' इत्यत्र तादात्म्यसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधो भवति। अत्र स्वं-द्वित्वं तदधिकरणं नीलघटोभयमिति तत्रैव तादात्म्यमपि विद्यते। इत्येवं द्वित्वसामानाधिकरण्यमिति प्रथमसम्बन्धः तादात्म्ये संघटते। अनेन सम्बन्धेन द्विष्ठत्वं संयोगसमवायदिष्वपि गच्छति। द्वितीयद्विष्ठत्वनियामकसम्बन्धसमन्वयः- स्वं-द्वित्वं तदाश्रयौ नीलघटवृत्तिनीलत्वघटत्वधर्मौ तदधिकरणे नीलघटौ तत्रैव तादात्म्यमपि विद्यते अतः द्वित्वाश्रयसामानाधिकरण्यं तादात्म्ये आयाति। इत्थं परिष्कृतं द्विष्ठत्वं सर्वेषु सम्बन्धेषु तिष्ठति। द्वितीया विप्रतिपत्तिर्वरेण्यानामस्ति यतः सम्बन्धलक्षणे सम्बन्धिभिन्नत्वे सतीति विशेषणनिवेशे सत्यनेके दोषा भवन्ति। यथा तद्घटकतया सम्बन्धस्य सत्त्वात् आत्माश्रयदोषो भवति। स्वज्ञाने स्वज्ञानापेक्षात्वमात्माश्रयत्वमिति लक्षणमात्माश्रयदोषस्य विद्यते। अत्र सम्बन्धज्ञाने सम्बन्धज्ञानापेक्षायाः सत्त्वाद् भवत्यात्माश्रदोषः। चेत् तद् दोषवारणाय प्रतियोग्यनुयोगिभिन्नत्वे सतीति परिष्क्रियते तर्हि स्वरूपसम्बन्धे दोष आपतति। तस्य प्रतियोग्यनुयोगिरूपेणैव ग्रहणात् तत्र प्रतियोग्यनुयोगिभिन्नत्वे सतीति विशेषण स्वीकारे स्वरूपसम्बन्धेऽव्याप्तिः स्यात्। तदपि न समीचीनम् यतोहि सम्बन्धिद्वय-

भिन्नत्वं प्रतियोग्यनुयोगिभिन्नत्वं वा न मुख्यविशेषणत्वेन प्रविष्टमपि तु विशेष्यताभिन्नत्वे सति प्रकारताभिन्नत्वपरम्। तच्च विशिष्टप्रतीतिविषयत्वार्थक विशिष्टप्रतीतिजनकत्वमिति विशेष्ये विशेषणम्। तेन विशेष्यताभिन्नत्वे सति प्रकारताभिन्ना या विशिष्टप्रतीतिविषयता तदाश्रयत्वे सति द्विष्ठत्वमिति सम्बन्ध सामान्यलक्षणं पर्यवस्यति। विशिष्टप्रतीतौ तिस्रो विषयताः भवन्तीति व्याख्याति जगदीशभट्टा चार्य्यः[५०], प्रकारता, विशेष्यता, संसर्गता च। प्रकरताभिन्ना विशेष्यताभिन्ना च विषयता संसर्गताख्या भवति। तदाश्रयत्वं च प्रकारताद्याश्रयेऽपि सम्बन्धिनि विद्यत एव। यथा घटाभाववद् भूतलमित्यत्र तत्तत्कालिकं तत्तद्भूतलं घटाभाववद् भवति। अत्र घटाभावस्य भूतलेन सह यः सम्बन्धः सः स्वरूपसम्बन्धो व्यवह्रियते इत्येवं भूतले संसर्गता विशेष्यता चेति द्वयमप्यस्ति। भिन्नेऽपि ते द्वे प्रकारताख्या विशेष्यताख्या इति विषयते विद्येते। तयोरन्तराभासनत्वेऽपि भेद एवाङ्गीकर्त्तव्यः। ये यान्तराभासमानविषयत्वयोरभिन्नत्वमङ्गीकुर्वन्ति तेऽपि प्रकारता-विशेष्यतयोरेवाभेदमूरीकुर्वन्ति. न तु संसर्गतायाः। इत्येवं तादृशसंसर्गताख्य-विषयताश्रयत्वस्य स्वरूपसम्बन्धेऽपि सत्त्वाल्लक्षणसमन्वयो भवति। इत्येवं स्वरूपसम्बन्धलक्षणस्य सम्बन्धिभिन्नत्वे सति द्विष्ठत्वे सतीति विशेषणद्वयं संघटते। एवं कालिकादिसम्बन्धेष्वपि लक्षणं संघटते। अथवा सम्बन्धिभिन्नत्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदद्वयवत्त्वम् इत्येवं परिष्करणीयम्। तेन स्वरूपसम्बन्धे सामान्येन प्रतियोग्यनुयोगिभिन्नताया अभावेऽपि तत्तद्व्यक्ति-त्वावच्छिन्नप्रतियोगिताभेदद्वयस्य स्वीकारे न तत्र दोषो भवति।

या च विशिष्टप्रतीतिनियामकत्वविषये गदाधरस्योक्तिः, यत् नियामकत्वस्य (अथ च विशिष्टप्रतीतिविषयत्वमित्यत्र विषयातायाश्च) जनकत्वरूपत्वात् अतीन्द्रियद्रव्ययोः संयोगादिसम्बन्धे जनकत्वरूपं नियामकत्वं (जनकत्वरूपं विषयत्वं च) न सम्भवम्। यतोहि प्रत्यक्षं प्रति विषयस्य कारणतास्वीकारात् अतीन्द्रिसंयोगे परमाणुद्वयसंयोगे, आकाशपरमाणुसंयोगे च प्रत्यक्षत्वाभावात् विशिष्टप्रतीति-नियामकत्वरूपं विशिष्टप्रतीतिविषयत्वरूपं वा सम्बन्धलक्षणं न गच्छेत्। परमाणोराकाशस्य च प्रत्यक्षायोग्यतया परमाणद्वयसंयोगस्याकाशपरमाणु-संयोगस्य च नैव प्रत्यक्षं भविष्यति। अतस्तत्र संयोगे विशिष्टप्रतीतिनियामकत्त्वा-भावात् सम्बन्धलक्षणेऽव्याप्तिदोषः स्यात्। तत्रैवं समाधेयमस्ति यत् विशिष्ट-नियामकत्वं नाम विशिष्टप्रतीतिजनकतावच्छेदकजातिमत्त्वम्। परमाणद्वयसंयोगे आकाशपरमाणुसंयोगे च अतीन्द्रियत्वात् विशिष्टप्रतीतिनियामकत्वाभावेऽपि विशिष्टप्रतीतिजनकतावच्छेदकजातिमत्वस्य तत्र सत्त्वात् सम्बन्धलक्षणं तस्मिन्नपि संयोगे संघटत एव। अतोऽव्याप्तिदोषो न भवति। यथा विशिष्टप्रतीतिजनकता यथा भूतलघटसंयोगे विद्यते न तथा परमाणुद्वयसंयोगे किन्तु विशिष्टप्रतीति-

जनकतावच्छदेकजातिः संयोगत्वजातिः सा च परमाणुद्वयसंयोगेऽपि विद्यत एव फलतः तादृशजातिमत्वस्य तादृशसंयोगसम्बन्धे सत्त्वात् लक्षणसमन्वयो जायते। वस्तुतस्तु विशिष्टप्रतीतिर्निाम प्रत्यक्षनुमानोपमानशब्दप्रमाणजन्यप्रतीतिः। तादृश प्रतीतिविषयता यथा प्रत्यक्षप्रमाणजन्यप्रतीतिविषये घटभूतलसंयोगे वर्त्तते। तथैवानुमानप्रमाणजन्यप्रतीतिविषये परमाणुद्वयसंयोगे आकाशपरमाणुसंयोगे चापि विद्यते। यतोहि परमाणुद्वयाकाशपरमाणुद्वयसंयोगाः अनुमानप्रमाणजन्याः सन्ति। अतस्तत्र संयोगेष्वपि विशिष्टप्रतीतिविषयत्वस्य सत्त्वात् लक्षणसमन्वयो भवति।

यत्तु तत्रैव गदाधरभट्टाचार्यः यत्र संयोगसंसर्गकद्रव्यत्वप्रकारकभ्रमात्मकं ज्ञानं जातं तस्मिन् भ्रमात्मके ज्ञाने संयोगस्य द्रव्यत्वसंसर्गतापत्तिः स्यात्। तत्र को दोष? इति प्रश्ने कथयति यत् संयोगे द्रव्यत्ववान् इति प्रतीतेः प्रमात्वापत्तिः स्यात्। तत् संसर्गेण तद्वत्ताबुद्धिः प्रमेति व्यवहारात्।

अत्रोच्यते। संयोगेन द्रव्यत्ववान् घटः इति बुद्धेः प्रमात्वापत्तिः येन भवति सा संयोगस्य द्रव्यत्वसंसर्गता नैवाङ्गीकरणीया। यतोहि उक्तबुद्धौ संयोगस्य संसर्गकत्वे न किञ्चिद्बाधकम्। तत्र संयोगस्यासंसर्गकत्वे द्रव्यत्वप्रकारकसंयोगसंसर्गक-बुद्धिरप्रमेति व्यवहारो न भवेत् उक्तबुद्धेः संयोगसम्बन्धकत्वे तादृशव्यंवहारस्य सिद्धत्वात्। यतो हि अप्रसिद्धत्त्वादुक्तबुद्धौ द्रव्यत्वप्रतियोगिकसंसर्गस्य संसर्गता नास्ति। न च संयोगसम्बन्धांशे द्रव्यत्वप्रतियोगिकत्वस्य भ्रमः, भ्रमत्वस्य तत्प्रकारकत्वादिघटितत्वेन संसर्गभागे भ्रमस्यास्वीकारात्। किन्तु संयोगसामान्य-स्यैव सम्बन्धत्वमङ्गीक्रियते। तेन सम्बन्धेन तद्विशेष्यकस्य तेन सम्बन्धेन तत्प्रकारकस्य ज्ञानस्य प्रमात्वात्, पूर्वोक्तज्ञानस्य च संयोगसम्बन्धेन द्रव्यत्व-प्रकारकत्वेऽपि संयोगसम्बन्धेन द्रव्यत्ववद् विशेष्यताया अभावेन भ्रमत्वमायाति। संयोगेन गुणो नास्ति इत्यत्रापि संयोगसम्बन्ध एव प्रतियोगितावच्छेदकसम्बन्धः न तु गुणप्रतियोगिकसंयोगः। तस्य व्यवहारेऽप्रसिद्धत्वात्। तस्मात् सम्बन्धिभिन्नत्वे सति (तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदवत्वे सति) द्विष्ठत्वे सति विशिष्टप्रतीतिजनकतावच्छेदकजातिमत्वं सम्बन्धत्वमिति लक्षणं सम्पद्यते वैयाकरणमतेन पूर्वाग्रहशून्यान्यदार्शनिकमतेन च भवितुमर्हति।

केचन नैयायिकवरिष्ठा ये पूर्वोक्तद्विष्ठत्वपरिष्कारं कथञ्चिन्नाङ्गीकुर्वन्ति तर्हि विशेष्यताभिन्नत्वे सति प्रकारताभिन्ना या विशिष्टप्रतीतिविषयता विशिष्टप्रतीति जनकतावच्छेदकजात्यवच्छिन्नारूपा तदाश्रयत्वं सम्बन्धत्वमिति सम्बन्धलक्षणमङ्गी-कुर्वन्ति तदपि समीचीनम्। भर्तृहरिस्तु सम्बन्धविषये किञ्चिद्भिन्नं स्व सिद्धान्तं मन्यते। तस्य मते असाधारणेन धर्मेणोपलक्षितस्य सम्बन्धस्य प्रत्यायकम् अभिधानं षष्ठीव्यक्तिरिक्तं नास्ति इदंतया स्वरूपानवधारणात्। नित्यपरतन्त्रो हि सम्बन्धः परोपाधिस्वरूपः सम्बन्धिनोः परस्परौन्मुख्यस्वभावो धर्ममात्रस्वरूपकः। ततो

निष्कृष्य सम्बन्धशब्देन स्वप्रधानः सम्बन्धिरूपतयाभिधीयमानः साक्षात् स्प्रष्टुं न शक्यते। अतः सम्बन्धाः पदेन संविज्ञातुमशक्याः षष्ठीरूपकार्यमात्रानुमेया विद्यते–

नाभिधानं स्वधर्मेण सम्बन्धस्यास्ति वाचकम्।
अत्यन्तपरतन्त्रत्वाद् रूपं नास्यापदिश्यते।।[५१]

अनेन षष्ठ्या प्रत्यायकत्वे सति नित्यपरतन्त्रत्वे सति परोपाधिस्वरूप सम्बन्धिद्वयपरस्परौन्मुख्यस्वभाववत्वे सति धर्ममात्रलक्षणत्वं सम्बन्धत्वमिति सम्बन्धस्य स्वरूपलक्षणं भवितुमर्हतीति बोध्यम्।

## संदर्भ सूत्री–


१. म.भा. पस्पशाह्निके
२. म.भा. पस्पशाह्निके
३. म.भा. प्रदीपे उद्योते च सिद्धे सम्बन्धे इति वार्त्तिके पस्पशाह्निके
४. वा.प.ब्र.काण्ड का.सं.
५. म.भा. १/१/४००.
६. म.भा. ८/५/५९.
७. वा.प. सम्बन्धसमुद्देश
८. वा.प. सम्बन्धसमुद्देश का.सं.
९. म.भा. २/३/९.
१०. म.भा. २/२/२४.
११. म.भा. प्रदीप २/२/२४.
१२. म.भा. प्रदीपोद्योत २/२/२४.
१३. पा.सू. २/३/६५.
१४. व्युत्पत्तिवादः प्रारम्भे
१५. व्युत्पत्तिवादे 'नीलो घट' इति विचारे
१६. पा.सू. २/३/५०.
१७. वाक्यपदीयसम्बन्ध समु. का. ४.
१८. वा.प. सम्ब.समु. का. ५.
१९. वा.प. सम्ब.स.का. सं. ६.
२०. वा.प.सम्ब.स.का.७.
२१. तत्रैव
२२. तर्कसंग्रहप्रत्यक्षखण्डे

२३. वा.प.सम्ब.स.का.८-११.
२४. पस्पशाह्निके सिद्धे शाब्दार्थसम्बन्धे इत्यत्र।
२५. सि.ल.मञ्जूषा श.प्र.
२६. पा.सू. ३/३/१०.
२७. म.भा.३/३/१०.
२८. पा.सू.१/४/८४.
२९. पा.सू.१/४/९०.
३०. पा.सू.२/३/३७.
३१. म.भा.१/४/८४.
३२. म.भा.प्रदीप ७/४/९.
३३. म.भा.प्र. हयवरट्सूत्रे
३४. म.भा. १/१/६६.
३५. म.भा.प्र. उद्योत. २/१/१.
३६. वा.प. ३/१४/७.
३७. म.भा.प्र. उद्योत १/५/३.
३८. म.भा.प्र. उद्योत १/५/३.
३९. म.भा.प्र.उ. १/४/३.
४०. म.भा. ३/१/१.
४१. म.भा. प्रदीप २/३/२३.
४२. वा.प. ३/७/१५७.
४३. शक्तिप्रकरणे
४४. तत्त्वचिन्तामणिः प्रत्यक्षखण्डः
४५. पा.सू.२/३/९.
४६. म.भाष्यं २/३/९, अत्रत्यः प्रदीपग्रन्थः उद्योतग्रन्थश्च
४७. वा.प. १३/७/१५७.
४८. वै.भू.सा. नामार्थ
४९. म.भा.मा.सूत्र १.
५०. सिद्धान्तलक्षणग्रन्थे
५१. वा.प.सम्बन्ध समु.का.४.

# शाब्दिकदृष्ट्या शब्दार्थसम्बन्धविचारः

शब्दश्च अर्थश्च इति शब्दार्थौ, तयोः यः सम्बन्धः सः शब्दार्थसम्बन्धः, तस्य विचारः विवेचना मीमांसा स्वरुपबोधकसङ्केतग्राहकः इति सः शब्दार्थसम्बन्धविचारः। तत्रोच्यते-

नागृहीतविशेषणा बुद्धिः विशेष्यमवगाहते। इति सिद्धान्तात् शब्दार्थसम्बन्धविचारघटको यः शब्दः तस्य किं स्वरुपम् इति प्रस्तूयते तथा हि-

इह खलु जगति अनुभूतेरभिव्यक्तेश्च प्राणिषु स्वाभाविकी प्रवृतिः सन्तिष्ठते। चक्षुषा रसनया त्वचा घ्राणेन एतैः साधनैः प्रतिपत्तारोऽनुभूतिमधिगच्छन्ति। तत्र सर्वत्र अनुभूतिग्राहकेण साधनेन सह वक्तुः श्रोतुश्च मानसं साहय्यमपेक्ष्यते। अर्थतत्त्वमनुभूय प्राणिनः तदभिव्यक्तये नानाविधं प्रयतमाना दृश्यन्ते। सर्वेष्वपि अभिव्यक्तिप्रकारेषु चाक्षुषः त्वाचः शाब्दश्च प्रकारोऽभिव्यक्तौ श्रेयानिति वक्तुं शक्यते अभिनयादिस्थले अक्षिनिकोचैः पाणिविहारैरन्यैश्च इङ्गितादिभिरभिनेतारः स्वाभिप्रायं प्रकटयन्ति। मूकाः प्राणिनश्चापि चेष्टितेनैव साधनेन नैजामाशयं प्रकाशयन्ति। परमेभिः साधनैः न तावद् विशदम् अभिप्रायोऽभिव्यज्यते, यावच्छाब्दैः साधनैः कृत्स्नोऽभिप्रायो विशदम् नोपस्थाप्यते। शाब्दं साधनमिदं प्रयोक्तारो लोकात् समधिगच्छन्ति। भाषा हि खलु सामाजिकी सम्पदुच्यते। यः शब्दसङ्केतः समाजे यत्रार्थे विनिश्चीयते तेन शाब्देन सङ्केतेन स एवार्थोऽभिधीयते। अतो लोकव्यवहारादेव प्रयोक्ता शब्दप्रयोगे समर्थो भवति। किमधिकं कथयामः? समोऽपि लौकिको वैदिको वा व्यवहारः शब्दानां माध्यमेनैव प्रचलति। सर्वे प्राणिनः स्वाभिप्रायं परस्परं विज्ञापयितुं शाब्दमेवाश्रयन्ति। एतस्मिन् विषये शब्दाः कथं व्यवहारे आवश्यकाः तत्राज्ञानमयत्वात् पशुपक्ष्यादिजीवा विचारयितुमसमर्थाः परञ्च ज्ञानवन्तो मानवा प्रतिक्षणं व्यवहारमार्गे साधनीभूतं शब्दं कथमुपेक्षितुमर्हन्ति इति विचारपराणां विदुषां मनसि शब्दज्ञानविषयिणी जिज्ञासा नैसर्गिकी एव। तदपनयनार्थं शब्दो विचार्यते। तथाहि-शपन्ति व्यपदिशन्ति आह्वयन्ति वाऽनेन वाग्व्यापारेण स खलु शब्द उच्यते। अयं तु शब्दः द्विविधः-लौकिकालौकिकभेदेन। तत्र प्रथमः लौकिकः स च ध्वन्यात्मक। अयञ्च महाभाष्यकारेण स्वमुखेनैव प्रतिपादितः, तथा हि- "अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते तद्यथा-शब्दं कुरु, मा शब्दं कार्षीः शब्दकार्ययं माणवक इति ध्वनिं कुर्वन्नेवमुच्यते।

तस्माद् ध्वनिः शब्दः।[१] एतेन इदमागतं यत् शाब्दिकै ध्वन्यात्मकः शब्दः अनुमोदितः यतो हि- प्रवक्तुः प्रतिपत्तुश्च परस्परं व्यवहारसम्पादनार्थं शब्दाः प्रयुज्यन्ते। प्रयोक्ता स्वकीयामन्तःस्थां भावनां प्रकटयितुं शब्दभावनां कुरुते। सा शब्दभावना एव प्रतीतपदार्थकेन ध्वन्यात्मकेन शब्दरुपेण प्रवर्तते लोके शब्दानां ध्वन्यात्मकं रुपं व्यवहारिकस्वरुपं भवति तथा च शाब्दिकैः शब्दशास्त्रीयप्रक्रियां सम्पादयितुं ध्वन्यात्मकं व्यवहारिकं शब्दस्वरुपं समाश्रितम्। अयं च ध्वनिः द्विविधःप्राकृतो वैकृतश्च तत्र प्राकृतो नाम स्फोटग्रहणहेतुः, वैकृतो नामशब्दाभिव्यक्तेरुत्तरजायमानो ध्वनिः वैकृतो ध्वनिः। तथाचोक्तं-

"स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।
शब्दस्योर्ध्वमभिव्यक्तेवृत्तिभेदे तु वैकृताः।।[२]

अयं सर्वोऽपि ध्वनिः आकाशदेशस्थः शब्दः इति वक्तुं शक्यते तथा च शब्दपरिभाषमाणेन भगवता पतञ्जलिना प्रोक्तं श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः-प्रयोगेणाभिज्वलित आकाशदेशः शब्दः"[३] इति लक्षणेनानेन शब्दे तथ्यत्रयम् आगतम् भाति-

(१) श्रोत्रोपलब्धिः, (२) बुद्धिनिर्ग्राह्यः, (३) प्रयोगेणाऽभिज्वलितश्चेति।

(१) श्रोत्रोपलब्धिः- शब्दस्योपलब्धिर्हि श्रवणेन्द्रियेण भवति। श्रोत्रमात्र-विषयत्वाच्छब्दस्य श्रोत्रमन्तरा तस्योपलब्धिरसम्भविनी। शब्दस्य व्यावहारिक-स्वरुपावगतये श्रोत्रेण शब्दप्रत्यक्षमावश्यकं भवति देशः कर्णशष्कुलीवर्ती आकाशमुच्यते श्रोत्रम्। "शब्दस्य, आश्रयश्च भवत्याकाशम्, गौतमः कणादश्च-आकाशगुणत्वं शब्दस्य कथितवन्तौ। इन्द्रियाणां विषय अर्थपदेनाप्यभिधीयते। अत एव श्रोत्रस्यार्थः शब्द इत्यपि कैश्चिद् व्याख्यातः।

(२) बुद्धिनिर्ग्राह्याः- कण्ठताल्वाद्यभिघातेन ध्वनयः क्रमश उत्पद्यन्ते उच्चरिताश्च पुनः क्रमशो ध्वस्ता भवन्ति। एवञ्च एकत्र एकदा च ध्वनिसमुदाय उपलब्धुं न शक्यते। उच्चरितप्रध्वंसशीलैः पूर्वपूर्वध्वनिभिः बुद्धौ तच्छब्दसंस्कारः संस्थाप्यते। स क्रमप्राप्तः बौद्धः शब्दसंस्कार एव अन्त्येन ध्वनिना अभिव्यक्तो भवति। इत्थं हि अन्त्यवर्णश्रवणानन्तरं बुद्ध्या व्यावहारिकं शब्दस्वरुपं सुविज्ञातं भवति। इदमेव तथ्यं कैयटः अन्त्यबुद्धिनिर्ग्राह्यपदेन प्रत्यपादयत। ध्वन्यात्मके नादे शब्दसंस्कारो वक्तृभावनाऽनुसारेण प्रवर्वते सन्तिष्ठते च। प्रतिपत्तुः शब्दग्रहणे शाब्दबोधे च शब्दसंस्कारो भवति आवश्यकः अत एवोक्तं हरिणा-

नादैराहितबीजायामन्त्येन ध्वनिना सह।
आवृत्तिपरिकायां बुद्धौ शब्दोऽवधार्यते।।[४]

**(३) प्रयोगेणाभिज्वलितः-** प्रयोगपदमत्र ध्वन्यार्थकम्। तद्यथोक्तं महाभाष्यकारेण- "प्रयुज्यते इति प्रयोगे ध्वनिः तेनाऽभिव्यक्तः इति। ध्वनिरेव भवति शब्दस्य व्यावहारिकत्वप्रयोजकम्। शब्दस्य प्रायोगिकं रूपं भवति ध्वनिः। पतञ्जलिः स्फोटलक्षणस्य ध्वनिं गुणं समाचष्ट। तथा हि-एव तर्हि शब्दः ध्वनिः शब्दगुणः इति कश्चनापि वस्तुत्त्वस्योपकारको ग्राहको व तद्गतो गुण एव भवति। अयमेव प्रयोगेणाभिज्वलितः शब्द उच्यते।

**अलौकिकः शब्दः** = लोके प्रयोगार्हः लौकिकः न लोके प्रयोगार्ह अलौकिक अर्थात् लौकिकव्यवहारतः प्रतीतिमात्रविषयः। ध्वनिव्यंग्य इति यावत्। अयं शब्दः व्याकरणशास्त्रे स्फोटपदेनोच्यते एतस्यायं भावः-स्फुटति अर्थो अस्मात् अनेन वा इति स्फोटः। करणे अपादाने व "अकर्तरि च कारके संज्ञायाम्" इति घञि साधुः। स एव स्फोट स्तत्तदर्थनिरुपिततत्तच्छक्तिमान् अर्थात् कत्वादि-विशिष्टवर्णातिरिक्तः पूर्वपूर्ववर्णानुभवसहकृतान्त्यवर्णानुभवव्यङ्ग्योऽर्थप्रत्यायाकः शब्दः इति यावत्। तत्तदर्थनिष्ठविषयतानिरुपितशक्तिमत्त्वं स्फोटत्वम्। अपरत्रापि तथा स्फुटति अभिव्यक्तिर्भवति अस्मात् अर्थ इत्यर्थवाचकत्वं यावदर्थप्रकाशकत्वं तत्तदर्थनिष्ठविषयताप्रयोजकशक्तिमत्वं स्फोटत्वम्। एवञ्च स्फोटपदस्य व्युत्पत्तिः कर्मकरणोभयार्थे घञ्प्रत्यये सति द्विविधा भवति। एषा द्वयी अपि उपयुज्यते। तथा हि "स्फुटत्यर्थो येन स स्फोटः" अर्थविषयप्रमाजनक इत्यर्थः। अथवा स्फुट्यते ध्वनिना अभिव्यज्यते इति स्फोटः, ध्वनिव्यङ्ग्यः इत्यर्थः। तथा च "ध्वनिव्यङ्ग्यत्वे सति अर्थविषयकप्रमाजनकत्वं स्फोटस्य लक्षणं पर्यवसितम्। एतादृशी व्युत्पत्तौ मानं, तु "येनोच्चरितेन इति भाष्यमेव। इमौ व्युत्पत्तिलभ्यौ अर्थौ अत्र लक्षणे निवेशनीयौ इति आयाति। अत्र लक्षणे विशेषणांशाभावे प्रत्यक्षादावतिव्याप्तिः तस्यापि घटपटादिस्वार्थप्रमाजनकत्वात्। लक्षणे विशेष्यदलाभावे तु चुटचुटादिध्वनिना अभिव्यक्ते अतो अपसरणीयम् इत्याद्यर्थे विशेषे अतिव्याप्तिः स्यात्। अतस्तद्वारणाय विशेष्यदलं लक्षणे निवेशितम्। यदा ध्वनिपदेनाभिव्यक्तिः एव ध्वनिर्गृह्यते, तदा ध्वनिजन्यश्रावण-प्रत्यक्ष-विषयध्वनौ, एवातिप्रसंगः स्यात्। अतः उभयोपादानाम् अपि च स्फुटति प्रकाशते यस्मादिति बाहुलकाद् अपादानघञीति व्युत्पत्तेः स्फोटत्वम् अर्थप्रकाशकशब्दत्वम् अत्रार्थे स्फोटशब्दस्य योगरुढिरिति ध्येयम्। शाब्दिकसिद्धान्ते स्फोट एव मूलभूतः तथा च तस्याभिव्यक्तौ अनुभूतये चैव शब्दानुशासने प्रक्रियाभेदः समाश्रितो वर्तते। वाग् विकाराणां प्रकृतिः स्फोटो विद्यते। एवञ्च शब्दस्य स्वरूपनिर्धारणप्रसङ्गे भगवान् पतञ्जलिः तत्त्वतः स्फोटमेव शब्दं व्याचष्ट। तथाहि-स्फोटः शब्दः ध्वनिः

शब्दः गुणः तथा च वैखरीरूपः सर्वोऽपि वाग्व्यवहारः स्फोटस्यैवाभिव्यञ्जको भवति तथा चोक्तं-

हरिणा-

"ग्रहणग्राह्ययोः सिद्धा नियता योग्यता यथा।
व्यङ्ग्यव्यञ्जकभावेन तथैव स्फोटनादयोः।।[६]

भाष्येप्युक्तम्-

"ध्वनि स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।
अल्पो महांश्च केषाञ्चिदुभयं तत्स्वभावतः।।[७]

कैयटः-

ध्वनिः स्फोटश्च व्यङ्ग्यो व्यञ्जकश्च स्तः इति शेषः। शब्दानां व्यङ्ग्यानां सम्बन्धी व्यञ्जको यो ध्वनिः स एव महान् अल्पश्च लक्ष्यते व्यङ्ग्यत्वभिन्नकाल एव उभयं व्यङ्ग्यो व्यञ्जकश्च प्रमाणेन स्वभावतः केषाञ्चित् व्यक्तानामुभयं गृह्येत, अव्यक्तानां तु ध्वनिरेव, इति एतदेव एवं तर्हि स्फोटः शब्दः ध्वनिः शब्दगुणः इति भाष्येणाप्युक्तम्। शब्दगुणः उपकारको व्यञ्जकत्वेनेत्यर्थः। तथा च-उद्योतकारः=ध्वनिः वर्णाः वैकृतध्वनिश्च वैकृतध्वनेरप्युलब्धिमानः पुण्यकारणत्वात्-व्यञ्जकत्वम् व्यञ्जकत्वेनेतिस्फोटोपलब्धिप्रतिबन्धकरस्तिमितवाय्वपसारणद्वारा स्वधर्मरुषिते तदुपलब्धिहेतु वेत्यर्थः। ध्वनिपदेन वैखरी स्फोटपदेनाभिव्यक्तक-त्वादिकम् अन्तरः शब्दः। ध्वनिस्तु इत्यस्य वैकृतध्वनिस्तु इत्यर्थः। एतत् सर्वं संगृह्य संभवतः उक्तं हरिणा- "अतो नादस्यावाचकत्वमयुक्तमेव।"[८]

तथा च करणस्थवाचां जनकोऽयं बुद्धिस्थस्फोट एव। तथा च स्वाभिप्रायं प्रकटयितुं प्रयुक्तासु वाक्षु शाब्दिकाः वाक्यानि वाक्येषु पदानि, पदेषु च वर्णान् स्फोटस्य अभिव्यक्तये एव प्रकल्पयन्ति। तथा चोक्तं-नागेशेन- "तत्र प्रतिवाक्यं संकेतग्रहासम्भवाद् वाक्यान्वाख्यानस्य लघूपायेनाशक्यत्वाच्च कल्पनया पदानि प्रविभज्य पदे प्रकृतिप्रत्ययभागान् प्रविभज्य कल्पिताभ्यामन्वव्यतिरेकाभ्यां तत्तदर्थ-विभागं शास्त्रमात्रविषयं परिकल्पयन्ति स्माचार्याः।"[९] स्फोटनादयोः परस्परं व्यंग्य-व्यञ्जकभावाख्यप्रकाश्यप्रकाशकाख्यो वा सम्बन्धः व्याख्यातो हरिणा तथा हि-

ग्रहणग्राह्ययोः सिद्धा नियता योग्यता यथा।
व्यङ्ग्यव्यञ्जकभावेन तथैव स्फोटनादयोः।।

" प्रतिबिम्बं यथान्यत्र स्थितं तोयक्रियावशात्।
तत्प्रवृत्तिमिवान्वेति स धर्मः स्फोटनादयोः।।[१०]

श्रीमद्भागवतेऽपि विषयो दृश्यते -

श्रृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृग्।
येन वाग् व्यंग्यो यस्य व्यक्तिराकाश आत्मनः।।

स्वधाम्नो ब्रह्मणः साक्षाद् वाचकः परमात्मनः।
स सर्वबीजमन्त्रोपनिषद् बीजं सनातनम् ।।[११]

दिशा त्वमाकाशोऽसि दिशः एवं स्फोट आश्रयः।
नादो वर्णस्त्वोंकार आकृतीनां पृथक् कृतिः।।[१२]

।।अर्थविचारः।।

अर्थ याच्ञायाम् इत्यस्माद्धातोः धातुनामनेकार्थत्वादिति राद्धान्तात् कर्मणि घञि प्रत्यये कृते अर्थशब्दः निष्पद्यते तदर्थः बोधविषयः शब्दार्थः तस्यार्थः शब्दजन्यबोधविषये यो भवति स एव शब्दार्थः पदार्थः इत्युच्यते। वैयाकरणनिकाये शब्दस्यार्थौ जातिव्यक्ती स्वीक्रियेते तथा हिं- भाष्यम् "न हि आकृतिपदार्थकस्य द्रव्यं न पदार्थः, द्रव्यपदार्थकस्य चाकृतिर्न पदार्थः"[१३] इति भाष्यात् जातिश्च व्यक्तिः पर्यवासितौ अत्र जातिर्नाम नित्यत्वे सति अनेकसमवेतत्वं,[१४] तत्र नित्यत्वन्नाम-ध्वंसभिन्नत्वे सति ध्वंसाऽप्रतियोगित्वं नित्यत्वम्।

भगवता पतञ्जलिना नित्यस्य लक्षणं भाष्ये-उक्तं- "ध्रुवं कूटस्थमविचाल्यनपायोजनविकार्यनुत्पत्त्यवृद्धव्ययोगि यत् तन्नित्यमिति।"[१५] इयञ्च नित्यता त्रिविधा तथा हि- (१) प्रवाहनित्यता (२) व्यवहारिकनित्यता (३) पारमार्थिकनित्यता। **प्रवाहनित्यता-** तत्र प्रवाहनित्यतास्वरूपो भवति यो हि नित्यप्रतिपरिवर्तमानोऽपि अपरिवर्तमानः प्रतीयते। तद्यथा-गङ्गा प्रवाहेण नित्यं परिवर्तमाना दृश्यते तथापि वयं ब्रूमं स एव गङ्गा या भागिरथेनानीतासीत् परन्तु तज्जलं समुद्रे संगतमपि तस्य प्रवाहः इदानीं यावदास्ते। अतः गंगा नित्या लोकशास्त्रादिषु ख्यायते। **व्यवहारिकनित्यता =** यदा जगज्जातः तत् - कालात् जगत्प्रलयं यावत् यस्य व्यवहारो भवति तदुत्तरकाले न भवति सा व्यवहारिकनित्यता आकाशदीनां वेदान्तशास्त्रे उच्यते। तत्र जगत् पदं जायमानमात्रस्योपलक्षणम्। एवं चात्र घटपटादिषु व्यवहारिकनित्यता वर्तते।

**पारमार्थिकनित्यता-** त्रिकालाबाधित्वं पारमार्थिकनित्यत्वं काले बोधो न भवति पदार्थान्तरेण केनाऽपि तस्मिन् पदार्थे पारमार्थिकनित्यता तिष्ठति। यथा वेदान्तशास्त्रे ब्रह्मणः तथैव शाब्दिकशास्त्रे जातिस्फोटस्य बोध्यः। तदेव एतेषां

मते ब्रह्म इत्युच्यते। जातिस्फोटस्य वर्तते सा च जातिः ब्रह्मरूपा वर्तते। अनेकव्यक्तिव्यङ्ग्या जातिस्फोटः स्मृतः[१६] इति एतादृक् नित्यत्वे सति अनेकसमवेतत्वघटकं नित्यत्वम्। केषाञ्चिन्मते व्यवहारिकनित्यत्वं जातौ इतरेषां पारमार्थिकनित्यत्वम् दर्शनशास्त्रपर्यालोचनेन प्रतिभाति। तथा च अनेकसमवेततत्वमिति विशेष्यांशस्य अनेकेषु पदार्थेषु समवायसम्बन्धेन वृतित्वमिति अनेकसमवेतत्वम् एवञ्च नित्यत्वसमानाधिकरणानेकनिरुपितसमवाय-सम्बन्धावच्छिन्नवृत्तिताऽश्रयत्वम् इति लक्षणं पर्यवसितं भवति, परन्तु एतादृशी शब्दवाच्या जाति स्वीक्रियते तदा आकाशत्वमभवात्वमित्यादयः कथं वाच्याः भविष्यन्ति यतो हि उक्तलक्षणस्याऽत्राऽभावात् तस्माज्जातिव्यक्तिवाच्यौ शब्दार्थौ इत्यत्र जातिपदेन प्रवृत्तिनिमित्तस्य ग्रहणम्। तेनाकशत्वाभावत्वादीनां जातित्वाभावेऽपि न क्षतिः। प्रवृतिनिमित्तत्वञ्च वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारतावत्वरूपम्। घटत्वरुपे घटशब्दस्य प्रवृत्तिनिमित्ते वाच्यत्वस्य, वाच्यो यो घटस्तद्वृत्तित्वस्य, समवायेन घटत्वविशिष्टघटोपस्थितौ उपस्थितीय-प्रकारतावत्वस्य च सत्वेन लक्षणसमन्वय इति एवम्पटादिष्वपि बोध्यम् परन्तु भगवता भाष्यकारेण जातेः स्वरुपमित्थमुक्तं तथा हि-

आकृतिग्राहणा जातिः-लिङ्गानाञ्च न सर्वभाक् ।[१७]
प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद् गुणैः।
असर्वलिङ्गं बह्वर्थां तां जातिं कवयो विदुः।[१८]

एतस्यायम्भावः आक्रियते व्यज्यतेऽनयेत्याकृतिः संस्थानमुच्यते। तथा हि-दुराकृतिः दुःसंस्थानमुच्यते, स्वाकृतिश्च सुसंस्थानम्। गृह्यतेऽनेनेति ग्रहणम् करणे ल्युट्। आकृतिर्ग्रहणं यस्या साऽऽकृतिर्ग्रहणा, संस्थानव्यङ्ग्याः, तदाश्रयस्य संस्थानस्याभिन्नत्वात्। यादृशं हि संस्थानं-ब्राह्मणस्य, क्षत्रियादेः संस्थानमपि तादृशमेवेत्यतो द्वितीयं लक्षणमाह-लिङ्गानाञ्चेत्यादि। यापि सर्वाणि लिङ्गानि न भजति साप्यसंस्थानव्यङ्ग्यापि जातिः यथा ब्राह्मणत्वादिः। अयञ्च वाच्यः जातिविशेषः भाष्येषु चतुभिः प्रकारेरैः प्रतिपादितः (१) प्राख्याऽविशेषात् (२) अव्यपवर्गतेश्च (३) ज्ञायते चैकोपदिष्टम् (४) धर्मशास्त्रञ्च तथा एकैकमत्र विविच्यते

## (१) प्रख्याऽविशेषात्-

प्रख्या नाम बुद्धिरुच्यते। अनेकासु व्यक्तिषु बुद्धेरेकरूपवत्वात् प्रतीयते जातिः शब्दार्थ इति। गुणप्रमाणादिभिन्नेष्वपि गोपिण्डादिषु गौगौरित्येकाकारा

प्रतीतिरुत्पद्यते। एकरूपमेव सास्नादिमर्थरूपं प्रवृतिनिमित्तं सञ्जायते तस्मादाचार्यो वाजप्यायनो जाति शब्दार्थत्वं प्रत्यपादययमेवाऽभिप्रायो भर्तृहरिणेत्थमनूदितः-

"स्वा जातिः प्रथमं शब्दैः सर्वैरेवाऽभिधीयते।
ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना।।"[१९]

(२) *अव्यपवर्गगतेश्च[२०]- जातिजातिमतोरविशेषाऽवगतेरुभयोर-भेदोपचाराद्वा मनुते। जातावभिधीयमानायां द्रव्यद्वारका वाहदोहादयो लौकिकाः व्यवहाराः सम्पाद्यन्ते। गौः रक्तः इति सामानाधिकरण्यादिकार्यमपि समुपद्यते। प्रतिव्यक्तिर्तद्गता जातिः विच्छन्नैव समुपलभ्यते। गौरित्युक्ते कश्चिद व्यपवर्गो नोपलभ्यते-नीला शुक्लेति वा। शब्दैः श्रुते एकाकाराया बुद्धेरुपलम्भाज्जातिः शब्दार्थ इति वाजप्यायनस्याशयः।

(३) *ज्ञायते चैकोपदिष्टम्- एकस्यां व्यक्तावुपदिष्टायां सर्वा अपि विज्ञाता भवन्ति। व्यक्तौ पदार्थेऽभ्युपगते एतन्न सम्भवति व्यक्तीनाम् आनन्त्यात्। जातेरेकत्वादेतत् सुष्ठु समुपद्यते। महानसे कस्यचिद् धूम उपदिष्टो भवति। अन्यस्मिन् पर्वतादिदेशे, यस्मिन् काले अन्यदीयञ्च तं धूमं दृष्ट्वा प्रतिपत्ता जानाति यदयं धूम इति। पतञ्जलिनाऽस्यां हेतुनिरूपणायां गोपदार्थः समाश्रितः। प्रयोजकवृद्धेन प्रयोज्यवृद्धाय कदाचिद् गौरुपदिष्टो भवति स तं गोपदार्थमन्य-स्यामपि व्यक्तावस्थायामन्यस्मिन् देशेऽन्यस्मिन् काले चाऽपि दृष्टवाऽवगन्तुं समर्थो भवति। जातेः पदार्थत्वाऽभावे व्यक्तिनामानन्त्यादेकत्र गृहीतशक्तित्वेऽपि अन्यत्रागृहीतत्वादुपदिष्टादन्यं गोपदार्थमवगन्तुं समर्थो न भवेत्। अतो जातेः पदार्थत्वेऽयमपि हेतुः।

### (४) धर्मशास्त्रञ्च तथा -

जातेः शब्दार्थत्वे स्वीकृते धर्मशास्त्रमपि सङ्गतम् इति वाजय्यानस्याऽऽ-चार्यस्याऽत्र विषयेऽन्तिमस्तर्कोऽस्ति। सुरा न पेया इति स्मर्यते। अत्र सुरापानस्यैक-त्वेन उद्येश्यत्वेऽपि जातेः पदार्थत्वात् सुरामात्रं पातुं निषिध्यते अन्यथा व्यक्तेः पदार्थत्वे एकां सुरामपीत्वैव शास्त्रं चरितार्थं भवेत् तथा न भवति। अतो जातिः शब्दार्थः सिध्यति। सा जातिर्ज्ञातैव वाचिका, न तु स्वरुपसतीत्यर्थ एवञ्चोक्तम्-

विषयत्वमापन्नैः शब्दैर्नार्थः प्रकाश्यते।
न सत्तयैव तेऽर्थानामगृहीताः प्रकाशकाः।।

अतोऽनिर्ज्ञातरूपत्वात्किमाहेत्यभिधीयते।
नेन्द्रियाणां प्रकाश्येऽर्थे स्वरूपं गृह्यते तथा।।[२१]

तदेवं जातिः सर्वातिशायिगौरवाधायकपदं धत्ते। भर्तृहरिणा वाक्यपदीयस्य तृतीयकाण्डस्य जातिसमुद्देशे बहुधा विचारितैषा। तत्र पूर्वं जातिपरकसिद्धान्तानां समीचीनैका समीक्षा दृष्टिपथमायाति शब्दजातिः सत्ताजातिश्चेति वैयाकरणैः समाद्रियते।

शब्दजातिः-केषाञ्चिदाचार्याणाम्मतेषु शब्दस्य-वाच्यं हि शब्दस्वरुपं भवति। इदमेव स्वरुपं दर्शनभेदेन स्वा जातिरिति कथ्यते। तद्यथोक्तं हरिणा-

"स्वा जातिः प्रथमं शब्दैः सर्वैरेवाऽभिधीयते
ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना।।"[२२]

स्वरूपमेव जातिपदेन कथ्यते, सैव शब्दजातिपदेन व्यवह्रियते। यथा गोशब्देन वाच्या गोशब्दे च स्थिता गोशब्दत्वजातिः न तु सा गोत्वे दृश्यते। जातिपदार्थवादिनाम्मतानुसारं शब्देन जात्य एव वाचका भवन्ति तदाह- जातौ पदार्थे जातिर्वा विशेषो वापि जातिवत्। शब्दैरपेक्ष्यते यस्मादतस्ते जातिवाचनः।।

पदार्थस्य प्राणप्रदो हि जातिर्विद्यते। जातौ खलु शब्दस्यान्तरङ्गभूता शक्तिः सन्तिष्ठते व्यक्त्यादिषु च बहिरग्र। प्रत्यङ्गवर्तिनी लोकेऽस्मिन् बहिरङ्गमुपेक्ष्य पूर्वमन्तरङ्गे प्रवृत्तिर्लक्ष्यते। लौकिकाः प्रातरुत्थाय यान्येषां प्रतिशरीरं कार्याणि, तानि तावत् पूर्वं कुर्वन्ति ततः सुहृदादीनाम्। तथा शब्दोऽपि प्राक् सामान्यभूतमन्तरङ्गम् अर्थं बोधयति ततो व्यक्त्यादि बहिरङ्गम्

तद्यथोक्तम् -

"व्यक्ति शक्तिश्च पदार्थः उभयपरत्वेन लौकिकैः शब्दाः प्रयुज्यन्ते।"[२४]
एवं हि शब्दः स्वजातावेव स्वं संनिविशते, तद्वदेव शब्दः अव्यपदेशस्य व्यक्तेः प्रत्याय्यो भवति। सर्वे शब्दा जात्या व्यक्तेः प्रत्यायको भवन्ति। सर्वे शब्दा जात्या अभिधानं कुर्वन्ति। तदेवं स्वजातिरेव शब्दानाम्-असधारणरूपमस्ति। वार्तिकारेणापि नवा शब्दपूर्वको ह्यर्थसम्प्रत्यय इत्युक्त्व्या शब्दपूर्वकार्थपरिज्ञानस्य समर्थनं कृतमस्तीति। सर्वत्र भावपदार्थे तत्त्वद्वयं नियमेन भवति सत्यांशः असत्यांशश्च। यथा सुवर्णाभूषणेषु मूलतत्वं सत्यांशो वा सुवर्णम् असत्यांशश्च तस्य कुण्डलादयः सन्ति। तत्र यः सत्यांशः स जातिः, असत्यांशश्च व्यक्तिः कथ्यते।

तद्यथोक्तम् -

सत्यासत्यौ तु यौ भावौ प्रतिभावं व्यवस्थितौ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयः स्मृताः।।[२५]

सत्ताजातिः- अद्वैतवादानुसारं हि परमार्थसत्यं परब्रह्म एव जातिर्विद्यते। तस्या एवापरन्नाम सत्ता महासत्ता वेति विद्यते। सर्वे हि सांसारिकपदार्थाः तस्या

एव विवर्तरुपाः सन्ति। सा (सत्ता) एव भिन्नभिन्नपदार्थेभ्यः भिन्ना-भिन्ना सती सम्बन्धिभेदाधारेण जातिः कथ्यते नान्या काचिज्जातिरितिभावः। अश्वस्य सत्ता अश्वत्वे, गोः गोत्वे डित्थस्य डित्थत्वे एव सत्ता नान्यत्र। सर्वे शब्दाः सत्ता मात्रवाचकाः। हेलाजेनाप्युक्तञ्चैतत् यथाहि-

सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः।।[२६]

जात्याश्रयो व्यक्तिः भवति सा च व्यक्तिः नाना तत्तु जातिलक्षणेनैव प्रतिभाति यदि व्यक्तयः अनन्ताः न स्युः तर्हिं अनेकसमवेतत्वम् इदं जातेः विशेष्यांशस्य का गतिः तस्माद् व्यक्तयः नाना जातिस्तु एक एव। यद्यपि प्रत्येकं व्यक्तिः एका एव तथापि प्रत्येकं पृथग् पृथग् सन्ति तस्मात् तेषां प्रत्येकं पृथग् पृथग् आकाराद् व्यक्तयः नाना सन्ति। तेऽपि शब्दार्थाः यतो हि घटम् उच्चार्य कस्मै कश्चन बोधयति तस्मिन् व्यवहारे घटत्वविशिष्टघटार्थः उपस्थितो भवति। तस्मात् घटत्वविशिष्टघटः घटशब्दार्थः। एतेन घटव्यक्तिरपि शब्दार्थस्ज्जातिस्तु वर्तते एव तस्याः स्वरूपत्वं पूर्वं प्रतिपादितम्।

सम्प्रति व्यक्तेः स्वरुपं तत्र किम्मानमिति प्रतिपाद्यते तथा हिं- व्यक्तित्वन्नाम-तद्वृतित्वे सति तदितरावृतित्वम् अर्थात् एकमावृत्तिधर्मः व्यक्तित्वं शास्त्रे निरुपितं वर्तते। उक्तञ्च व्युत्पत्तिवादे-एकमात्रवृत्तित्वं तच्च "स्वसमानाधिकरण्यस्वप्रतियोगि-वृत्तित्वोभयसम्बन्धेन भेदविशिष्टं यत् तदन्यत्वमित्येकमात्रवृत्तिधर्मः।"[२७] तथा च समन्वयः यथा नीलो घटः इत्यत्र नीलघटो व्यक्तिः व्यक्तिभेदः स्वपदेन स्वीक्रियते तदधिकरणपीतघटे भेदाधिकरणं तत्रैव घटत्वं वर्तते तथात्र भेदसामानधिकरण्यं घटत्वे तिष्ठति तथा स्वनीलघटव्यक्तिभेदः तस्य प्रतियोगी नीलघटः तस्मिन् घटत्वं वर्तते। तस्मात् स्वप्रतियोतिवृत्तिः घटत्वं स्वसामानाधि-करण्यमपि घटत्वे वर्तते। एवं स्वसामानाधिकरण्य स्वप्रतियोगिवृत्तित्वोभय-सम्बन्धेऽभेदविशिष्टं यत् घटत्वं जातं तदन्यत्व घटवृत्तिव्यक्तौ इति लक्षणसमन्वयः व्यक्तिःपदार्थः इत्यत्र व्याडिना तर्कचतुष्ट्यं प्रदर्शितं तदेवात्र समुपस्थाप्यते तथाहि-

(अ) तथा च लिङ्गवचनसिद्धिः
(इ) चोदनासु च तस्यारम्भात्।
(उ) न चैकमनेकाऽधिकरणस्थम्।
(ऋ) विनाशे प्रादुर्भावे च सर्व तथा स्यात्।[२८]

पतञ्जलिनेमे हेतवः सम्यक् समुपबृंहिताः नागेशवर्धिताः किञ्चिदत्र विविच्यन्ते।

(अ) तथा च लिङ्गवचनसिद्धिः- व्याकरणतन्त्रे लिङ्गानुशासनं वचनाऽनुशासनञ्च विधीयते। यदि शब्दानां जातिरर्थः स्वीक्रियेत तदेतन्नोपपद्यते। जातेरेकत्वादयमजः इयमजा इत्यादिको व्यपवर्गव्यवहारो नोपपद्यते। व्यक्तेः पदार्थत्वे तु तस्या अनेकत्वाद् व्याडिमते लिङ्गवचनसिद्धिः विजायते। जातेः पदार्थत्वस्वीकारे "स्त्रियाम्"[२९] सरुपाणमेकशेष एकविभक्तौ[३०] इत्यादिविधिशास्त्राणां वैयर्थ्यं सुस्पष्टमेव। पतञ्जलिप्रामाण्याद् द्रव्याश्रित एवार्थे द्विवचनबहुवचनानि भवन्ति। वक्तुरभिधेयरूपः अर्थो द्रव्याश्रितो भवति तस्य भेदाद् वचनभेदो भवति।

(इ) चोदनासु च तस्यारम्भात्- आकृतौ चोदितायाम् आरम्भणाऽऽ-लम्भनादीनि द्रव्येऽनुष्ठीयन्ते। न हि जात्या कश्चित् कार्यसमारम्भो दृश्यते। अतो द्रव्यमेव शब्दार्थ इति व्याडिराचार्यः स्वीकुरुते। गामानयेत्युक्ते न हि गोमात्रमानीयते अपि तु कश्चिदेको गौः। न वा देवदत्त भुङ्क्ष्व सक्तुमित्यत्र सक्तुमात्रं भोक्तुमादिश्यते। वाहदोहादयो व्यवसाया द्रव्य एव सम्पद्यन्ते। अतो द्रव्यमेव शब्दवाच्यं विद्यते।

(उ) न चैकमनेकाऽधिकरणस्य युगपत्- एकोऽयं देवदत्तो युगपत् पाटलिपुत्रे प्रयागे चावस्थातुं नार्हति। यदि जातिः शब्दानामर्थः तर्हि तस्या एकत्वादनेकत्र युगपदुलब्धिः भवेत्। लोके च तथा व्यवहारः प्रतीतिश्च दृश्यते जातौ चेत्तन्न सम्भवति। अतो द्रव्यं पदार्थ इति ज्ञायते । यत एकेनोच्चारितेन एकस्यैव बोधो भवति।

(ऋ) विनाशे प्रादुर्भावे च सर्व तथा स्यात्- एका सर्वत्रगा च जातिः भवति यदि सैव पदार्थः स्यात्तदा एकस्मिन् पदार्थे प्रादुर्भूते सर्वोऽपि पदार्थः प्रादुर्भूतः स्यात्। एकस्मिन् विनष्टे च सर्वो विनष्टः स्यात् श्वा मृत इत्यवगते श्वा नाम लोके न प्रचरेत्। गौर्जात इति वोक्ते च सर्वमपि गोजातम नवकाशमाप्नुयात्। द्रव्ये च पदार्थे यदुत्पन्नं तदतिरिक्तं सर्वमनुत्पन्नमेव। यद् वा द्रव्यं विनष्टं तदतिरिक्तं सर्वविनष्टमेवेति व्यवहारः सम्पद्यते। द्रव्यपदेनात्र सत्त्वभावमापन्नो विशेष्यभूतो वस्तुविशेष उच्यते। तेनोक्तव्यवहारेषु काचित् क्षतिर्न जायते।

## निष्कर्षः-

यद्यपि "न हि आकृतिपदार्थकस्य द्रव्यं न पदार्थो, द्रव्यपदार्थकस्य चाकृतिर्न पदार्थ इत्युभयोरुभयं पदार्थ"[३१] इति भाष्याद्विशकलितयोरेवाकृतिव्यक्त्योः शक्तिग्रहविषयता लभ्यते तथापि "कस्यचित् किञ्चिद् गुणभूतं किञ्चित्प्रधानम्"[३२] इति सरूपसूत्रभाष्यपर्यालोचनया तत एव विशिष्टे शक्त्यावधारणात्

तयोरुपादानमविरुद्धमन्यथा तृतीयोपात्तैकत्वकरणत्वयोरिव विशेष्यविशेषणभावापन्नजातिव्यक्त्योः शक्यत्वे गोर्यद् गोत्वं व्यक्तिश्चेति समूहालम्बनबोधापत्तेः शक्तिज्ञानपदार्थोपस्थितिः शाब्दबोधानां समानप्रकारकत्वनियमात् कस्यचिद् किञ्चित् गुणभूतं किञ्चित्प्रधानमिति भाष्येण नेदमायाति यज्जातिविशिष्टो व्यक्तिरेव पदार्थः अपि तु गुणभूतमिति शब्दप्राधान्येन व्यक्तेश्च प्रकारतया भानम्। एवमपि विशिष्टे शक्तिग्रहः। जातेः प्राधान्ये द्रव्यसंख्यामादाय तत्र द्विवचनाद्युपपतिर्बोध्या। तदुक्तं कैयटेन यथा भवतः इत्यादौ क्रियाप्राधान्येऽपि साधनकृतो इत्यदोष इति। द्रव्यप्राधान्येऽपि क्वचिज्जातिसंख्यामादाय वचनं "ब्राह्मणं न हन्यात्" इत्यादौ यथा जातेः प्राधान्ये या निरवच्छिन्नाया एवं व्यक्तेः प्राकरता विशेष्यीभूतजात्या च तदनुगमः। न हि प्रकारीभूतमेवानुगमकमिति नियम इत्येकः पक्षः। वस्तुतस्तु जातिविशिष्टव्यक्तिरेव शक्या। गवादिपदाद् गोविशिष्टगोत्वस्याननुभवेनोक्तकल्पस्याऽसम्भवाज्जात्यातिरिक्तपदार्थस्य किञ्चिद्धर्मावच्छिन्नत्वमिति नियमेन निरवच्छिन्नायाः तस्याः व्यक्तेर्जातिविशेष्यीभूते सति मानायोगात्। एवञ्च व्यक्तिविशेष्यकशक्तिग्रहमन्तरेणासम्भवाद् गवादिपदानां जातिविशिष्टव्यक्तावेव शक्तिरिति सिद्धान्तः।

शब्दार्थविचारे सुसम्पन्ने संप्रति तयोः सम्बन्धः कः इति विचार्यते यतो हि-

स्वरूपतः कश्चिच्छब्दोऽर्थस्याऽभिधायको न भवति। विषये प्रणिहितमेव चक्षुर्यथा चाक्षुषं प्रत्ययं जनयति तथा गृहीतः शब्दोऽपि अभ्यासाऽऽदिना जातसंस्कार एवार्थं बोधयति। अश्रुतपूर्वैः अगृहीतसम्बधैश्च शब्दैरार्थाऽवगतिर्नावलोक्यते। अतः शब्दार्थयोः कश्चित् सम्बन्धोऽनुसन्धेय इति सम्बन्धविषये भाषाशास्त्रिणां प्रवृत्तिनिमित्तमस्ति। शब्दार्थयोः मध्ये कीदृशः सम्बन्धो भवितुमर्हति ज्ञातुम् इति जिज्ञासा- प्राणिनां स्वाभाविकी। तत् परिपोषकसम्बन्धस्य स्वरूपं किं भवति इति विचार्यते।

तथाहि-विशिष्टधीनियामकत्वं सम्बन्धत्वमिति यथा-"घटवद् भूतलम्" इत्यत्र घटविशिष्टं-भूतलमिति विशिष्टबुद्धिः तत्र घटः संयोगसम्बन्धेन भूतले विशेषणतयाऽवभासते यत्र विशेष्यविशेषणभावस्य प्रतीतिर्भवति स विशिष्टबुद्धिः उच्यते तत्र वैशिष्ट्यनियमनाय कश्चन नियन्त्रकः भवति स एव नियन्त्रकः सम्बन्धः उच्यते। यदि नियामकः न स्यात्तर्हि घटस्य भूतले एव न प्रतीतिः स्यात् अपितु अन्यत्रऽपि स्यात् तन्नियमनाय घटभूतलेभ्यः व्यतिरिक्तः सम्बन्धः कल्प्यते तस्मात् विशिष्टबुद्धिनियामकत्वं सम्बन्धत्वमित्यनेन सम्बन्धिभ्यां भिन्नत्वे सति विशिष्टबुद्धिनियामकत्वमायाति अर्थात् "सम्बन्धो हि सम्बन्धिद्वयभिन्नत्वे सति

द्विष्ठत्वे सति आश्रयतया विशिष्टबुद्धिनियामक इत्यभ्युक्तव्यहारात्"[33] समन्वयोऽपि प्रदर्शितः मञ्जुषायां तथा हि- यथा घटवद् भूतलमित्यत्र संयोगरुपः सम्बन्धः सम्बन्धिभ्यां भिन्नो विशिष्टबुद्धिनियामकश्च, अत्र पदकृत्यम् प्रथमांशेन सम्बन्धिभ्यामित्यनेन अभेदस्य सम्बन्धत्वं निरासयति द्विष्ठत्वमित्यंशेन केवलं जन्यत्वं जनकत्वं वेति-आदेः सम्बन्धत्वं निरसितः न तेषु द्विष्ठत्वं वर्तते। अपितु स्वत्वस्वामीत्वसमुदाय एव सम्बन्धः तथा चोक्तं भट्टनागेशेन-"स्वत्वस्वामित्वसमूहः सम्बन्धः"[34] इति लघुशब्देन्दुशेखरे। तृतीयांशेन आश्रयतया इत्यादिना वृत्यनियामकविषयित्वादीनां सम्बन्धत्वं निरसितम्। तत्र-तत्र टीकादिषु लिखितं सम्बन्धिभ्याम्भिन्नत्वे सति इत्यंशो नैयायिकदृष्ट्या आयाति परञ्च भर्तृहरिणा सम्बन्धस्य स्वरुपं साधनसमुद्देशे प्रतिपादितं-"द्विष्ठोप्यसौ परार्थत्वात् गुणेषु व्यतिरिच्यते।" द्विष्ठ इत्यस्य द्विष्ठ एकःसम्बन्ध इति हेलराजः तत्र अम्बाकर्त्री-द्विष्ठोऽपि-प्रतियोग्यनुयोगिरूपसंम्बन्धिद्वयनिष्ठोऽपि इत्यर्थः।

परञ्चात्र विचार्यते सम्बन्धिभ्यां भिन्नत्वे सति द्विष्ठत्वे सति आश्रयतया विशिष्टबुद्धिनियामक इति नियामकः सम्बन्धः, अत्र लक्ष्यः सम्बन्धः, लक्षणं सम्बधिभ्यां भिन्नत्वे सति द्विष्ठत्वे सति आश्रयतया विशिष्टबुद्धिनियामकमिति लक्षणम्, इत्यस्मिन् लक्षणे सम्बन्धिभ्यामित्यस्मिन् सम्बन्धनिवेशात् तथा हि व्युत्पत्तिः-सम्बन्धः अस्ति ययोः तौ सम्बन्धिनौ ताभ्यां सम्बन्धिभ्यामिति निष्पद्यते। अत्र हि सम्बन्धलक्ष्यस्य सम्बन्धलक्षणे प्रवेशात् आत्माश्रयदोषः- "स्वस्य स्वापेक्षत्वमात्माश्रयत्वम् अर्थात् सम्बन्ध सम्बन्धमपेक्षेति अत्र तस्मादात्माश्रयदोष आयाति। दोषदूषितत्वेन इदं लक्षणं सम्बन्धस्य भवितुंर्नाहति आत्माश्रय दोषदूषितत्वात् इति केचित् आक्षेपं अभ्युक्तसिद्धलक्षणे नागेशफलितार्थवचने प्रदर्शयन्ति तन्न युक्तिवहः आक्षेपः तथा हि- सम्बन्धिभ्यामिति उपलक्षणं न सम्बन्धलक्षणे विशेषणम्।

उपलक्षणत्वेन अत्र कस्यचिद् प्रवेशो भवति तत्र उक्त दोषो न भवति यतो हि उपलक्षणस्य लक्षणं कृतं वर्तते दिनकरीटीकायां गुणनिरुपणावसरे पञ्च शतोत्तरैकशततमे श्लोके तथा हि उपलक्षणत्वञ्च "तत्पदजन्यबोधाविषत्वेन शक्तिविषयत्त्वम्" तस्मादत्र न दोषः।

अथ च इदं तटस्थलक्षणं न तु स्वरुपलक्षणं यथा-गन्धवत्वं पृथिव्याः लक्षणत्वमित्यत्र गन्धवत्वं तटस्थलक्षणं तथा चात्रापि आत्माश्रयदोषः तथा हि-गन्धवती का? पृथिवी, पृथिवी का ? गन्धवती, तस्मात् गन्धवतीं पृथिवीं गन्धवती वाञ्छति, पुनः गन्धवती पृथिवी गन्धवतीं वाञ्छति तस्मादत्र आत्माश्रयदोषः तथा च सास्नादिमती गौः, गौः का सास्नादिमती, सास्नादिमती का? गौः

अत्रापि स दोषः एवं कुत्रापि तटस्थलक्षणं क्रियते तत्र सर्वत्र प्रायश अयं दोषो भवत्येव अतः स दोषः अस्माभिः सोढव्य एव, अभियुक्तव्यवहारात्। अथवा तदुक्त-व्यवहारात् कल्पते तटस्थलक्षणे उक्तदोषो न भवति। तस्मात् सम्बन्धिभ्यां भिन्नत्वे सति द्विष्ठत्वे सति आश्रयतया विशिष्टबुद्धिनियामकमिदं तटस्थलक्षणं न तु स्वरुपलक्षणं तस्मादत्र तद्दोषस्य चर्चैवात्र न सम्भवति उक्तव्यहारात्।

स्वरूपलक्षणञ्चात्र सम्बन्धस्य-सम्बन्धपदवाच्यः सम्बन्धः, यथा-व्याप्तेः साध्याभाववदवृत्तिः तटस्थलक्षणं न तु स्वरूपलक्षणम्। व्याप्तिः व्याप्तपदवाच्या इति स्वरूपलक्षणम् तथैवात्राऽपि उक्तलक्षणं सम्बन्धस्योक्तम्। तस्मात् केषाञ्चिद् यो विवादः स विवाद एव न उक्तयुक्तेः।

अतः नागेशोक्तलक्षणे सन्देहो न विधेय इति परम्पराविदस्तु वदन्ति। सम्प्रति शब्दार्थयोः कः सम्बन्धः सम्भवतीति विचार्यते।

यद्यपि पदपदार्थयोः अथवा शब्दशब्दार्थयोः सम्बन्धोः नैयायिकवैशेषिक-वैयाकरण-प्रभृतिदार्शनिकानां सिद्धान्ते वृत्तिरुपः स्वीकृतो वर्ततो तथापि तद्व्यतिरिक्तः सम्बन्धः सम्भवति न वा स एव कथमिति विचार्यते।

तथा हि- "घटवद् भूतलम्" इत्यादौ घटभूतलयोः प्राप्तिरूपः संयोगसम्बन्ध इव संयोगरूप एव कथं नेति स्वीक्रियते। अथवा घटवत् कपालम् इत्यत्र घटकपालयोः समावायः इव सः समवायरूपः एव कथं न स्वीक्रियते अथवा वह्निमान् धूमात् इत्यादिस्थले वह्निधूमयोः व्याप्तिलक्षणः सम्बन्धः इव व्याप्तिरुप एव कथं न स्वीक्रियते?

कुतः स वाच्यवाचकभावात्मकशक्तिरुपः कथं व शक्यसम्बन्धात्मक-लक्षणारुपः कथं वा अयं शब्दोऽस्यार्थस्य व्यञ्जकः इति प्रतीति साक्षिकः स्वरूपविशेषात्मकव्यञ्जनारूपः स्वीक्रियते।

अयमत्र अवान्तरप्रश्नोऽपि समुदेति यत् पदपदाथर्योः वा कश्चन सम्बन्धः न स्वीक्रियताम्। का अवश्यकता तयोर्मध्ये सम्बन्धस्वीकारस्य? असम्बन्धौ एव तौ आस्ताम् असम्बन्धौ एव तौ शाब्दबोधात्मकं कार्यं स्वीयसर्वविधिव्यवस्था-संचालनञ्च कुरुताम् मास्तु अपेक्षा तयोः सम्बन्धस्य। अत्र महर्षिगौतमः "शब्दार्थव्यवस्थानाद् अप्रतिषेधः"[३४]

भाष्यं = "शब्दार्थप्रत्ययस्य व्यवस्थादर्शनात् अनुमीयते अस्ति शब्दार्थसम्बन्धो व्यवस्थाकारणम्।

असम्बन्धे हि शब्दमात्रादर्थमात्रे प्रत्ययप्रसर्गस्तस्मादप्रतिषेधः सम्बन्धस्येति।"

अयम्भावः-पुरोदृश्यमाने संसारे ये केचन पदार्थाः सन्ति ते सर्वेऽपि व्यवस्थिताः एव दृश्यन्ते। अर्थात् केभ्यश्चित् पदविशेष्ये केषाञ्चित्पदार्थविशेषाणामेव संप्रत्ययः प्रादुर्भवति न तु सर्वपदेभ्यः सर्वेषां पदार्थानां प्रत्ययो आमन्दबालादिषु जातु जायते। अस्याः व्यवस्थायाः कारणम् एकमात्र शब्दार्थसम्बन्ध एव भवितुमर्हतीति। यदि तत् तदसम्बद्धः एव शब्दः तत् तदर्थ बोधयेत् तदा सम्बन्ध विशेषात् सर्वः शब्दः सर्वान् अर्थान् निरन्तरमावेदयेत् आमन्दबालासु न तु घटशब्देन कम्बुग्रीवादिमतो घटव्यक्तिरूपस्यैवार्थस्य बोधो जायेत।

तस्मात् शब्दार्थयोः अस्याः व्यवस्थायाः उपपादकतया नूनं शब्दार्थयोः मिथः कश्चन सम्बन्धो वाच्यः तस्य निषेधोऽपलापो व नैव कर्तुं शक्यः। यतो हि यदि शब्दार्थयोः कश्चन सम्बन्धो न स्यात्तदा उक्ता व्यवस्था नैव सम्पादयितुं शक्यते अतोऽवश्यं सर्वशब्दैः सर्वेषां पदार्थानां बोधापत्तेः गले पतितायाः तथा असम्बन्धस्य लोके न भानं दृश्यते। तथा चोक्तं-

"असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितः "असत्वे नाऽस्ति सम्बन्धः कारणैः सत्वसंगिभिः"[३६] असम्बद्धस्य जन्यत्वे असम्बद्धत्वाविशेषणं सर्वं कार्यं जातं सर्वस्मात् भवेत्। न चैदस्ति। तस्मान्नासम्बद्धमसम्बद्धेन जन्यते अपितु सम्बद्धं सम्बद्धेन जन्यते। इति। एतस्यायम्भावः- असम्बद्धस्य जन्यत्वे असम्बद्धत्वाविशेषेण-

सर्वमपि कार्यजातं सर्वस्मात् कारणाद् भवेद् यस्य कारणस्य कारणता यत् कार्ये न विद्यते तस्मादपि कारणात् तत् कार्यं भवेत्। एतादृशं च न दृश्यते तस्मान्नासम्बद्धमसम्बद्धेन जन्यते अपितु सम्बद्धमेव सम्बद्धेन जन्यते इत्यवश्यं स्वीकर्तव्यं भवति।

शब्दः शाब्दबोधं वा अर्थोपस्थितं जनयति, अथवा पदं पदज्ञानं वा अर्थोपस्थितिं जनयति। तथा च सम्बन्धमन्तरा पदविशेषादर्थविशेषोपस्थितेः जननं यत् सर्वथासंभवदुक्तिम्। अतः शब्दार्थयोः सम्बन्धो अवश्यमपेक्षणीयः येन सम्बन्धेनार्थविशेषेण सम्बद्धं पदम् अर्थविशेषसम्बन्धवत्तया पदज्ञानं वा पदार्थोपस्थितिं जनयेत्। अत एवोक्तं नागेशेन "तद्धर्मावच्छिन्नविषयकशाब्द-बुद्धित्वाच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः इति।"[३७]

एतस्य पदकदम्बस्यायमाशयः = "यत् धर्मावच्छिन्नं लक्ष्यं स धर्मो लक्ष्यतावच्छेदकः तेन यो धर्मो यस्यावच्छेदकः स तद्धर्मावच्छिन्नो यथा घटः तद् विषयको यः शाब्दबोधः घटोऽयमिति तं प्रति तस्य घटस्य यो धर्मो घटत्वं

तेनावच्छिन्नो घटस्तेन निरूपिता या घटत्ववृत्तिः तस्याः विशिष्टज्ञानं कारणं भवति। अन्यथा वृत्तिविशिष्टज्ञानाभावेऽपि शाब्दबोधसम्भवे शब्दस्यैव प्रमाजनकत्वेन सर्वे सर्वेषामपि श्रोतृणां बोधापत्तिः स्यात्। न च तथा। तेन शाब्दबोधं प्रति वृत्ति प्रयोज्योपस्थितेरन्वयव्यतिरेकाभ्यां कारणं सुस्थिरं भवति। तथा च पदजन्यपदार्थोपस्थितेर्व्यापारवत्वं ब्रुवता विश्वनाथपञ्चाननभट्टाचार्येण उक्तम्। "तत्रापि वृत्या पदजन्यत्वं बोध्यम्"[३८] इति अत्र वृत्या इत्यस्य वृत्तिज्ञानेन इत्यर्थः तथा च वृत्या सहकृतपदज्ञाननिष्ठसम्बन्धिज्ञानत्वावच्छिन्नं जनकतानिरूपितजन्यताश्रयपदार्थज्ञानं व्यापारः इति फलितम् मूलेऽपि उक्तं **"शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी"**[३९] इति पदजन्यपदार्थोपस्थितिघटकं पदजन्यत्वं वृत्तिज्ञानसहकारेण शाब्दबोधं प्रति कारणं बोध्यमिति। अतः वृतिरुपः सम्बन्ध एव शब्दार्थयोः सिद्ध्यति, पदपदार्थयोः संयोगादिरूपः सम्बन्धः न सम्भवति" तथाहि यदिदं पूर्वमाशङ्कितं यत् पदपदार्थयोः सम्बंन्धः प्राप्तिलक्षणसंयोगात्मकम् एवास्तु घटवद्भूतलमिव अथवा घटकपालयोः इव समवाय एवास्ति। वह्निधूमयोरिव व्याप्तिलक्षण एव सम्बन्धोऽस्तु। किं वाच्यवाचकभावापन्नवृत्यात्मकशक्तिरुपः लक्षणारुपः व्यञ्जनारुपः वा तयोः सम्बन्धः कल्प्यते।

एतस्योत्तरं शास्त्रकारै रित्थं कथितम्। यत् प्राप्तिलक्षणस्तु शब्दार्थयोः सम्बन्धः प्रतिषिद्धः। कस्मात्? प्रमाणतोऽनुपलब्धेः प्रत्यक्षतस्तावत् शब्दार्थयोरतीन्द्रियत्वात् इत्येवं वात्सायन भाष्ये प्रतिपादितम्। वात्सायने भाष्यम् अस्यायं भावः = "शब्दार्थयोः पदपदार्थयोः वा सम्बन्धः संयोगः समवायादिर्वा न भवितुमर्हति कुतः प्रत्यक्षप्रमाणतः शब्दार्थयोस्तादृशसम्बन्ध उपलभ्यते। अयमस्ति तावत् सिद्धान्तः यत् द्वौ पदार्थौ येनेन्द्रियेण ग्राह्यौ भवतःतयोः-पदार्थयोः सम्बन्धोऽपि तेनेन्द्रियेण गृह्यते। यथा-घटभूतलयोः वह्निपर्वतयोः धूमपर्वतयोः संयोगसम्बन्धः घटभूतलयोर्ग्रहणं-चक्षुरिन्द्रियेण जायते अतः तयोः संयोगसम्बन्धोऽपि चक्षुरिन्द्रियेणैव ग्राह्यो भवति। परन्तु प्रकृते शब्दतदर्थौ पदतदर्थौ वा नैकेन्द्रियेण ग्राह्यो वर्तते। येन अनयोः संयोगसम्बन्धं वयं ग्राह्यं मन्यामहे। शब्दं पदं वा श्रोत्रेन्द्रियग्राह्यं सदपि अर्थस्य श्रवणेन्द्रियाग्राह्यत्वान्न शब्दार्थयोः संयोगसम्बन्धः इन्द्रियाग्राह्य उपपद्यते।

अपि चात्रेदमपि "प्रष्टव्यमापद्यते" यत् पदपदार्थयोः प्राप्तिलक्षणसंयोगात्मकसम्बन्धे-गृह्यमाणे किमर्थो घटपदादिशब्दान्तिके भवति किं वा शब्दः अर्थान्तिके भवति किं वा- उभयमुभयोरन्तिके भवति? एषु विकल्पेषु कतमश्चिन्नून अभ्युपेयः अन्यथा संयोगः दुर्घटः स्यात् दूरस्थयोः क्वापि तस्यादर्शनात्। परं नैकोऽपि विकल्प एतेषु शक्यः स्वीकर्तुम्। अतः शब्दार्थयोः संयोगसम्बन्धः सर्वथाऽनुपपन्न

एव। तथा हि यदि पदार्थो घटपटादिः शब्दसमीपे स्यात् तदा शब्दस्य मुखे जायमानत्वात् अन्नादिशब्दानामुच्चारणे मुखमन्नादिना पूरितं स्यात्। एवमग्निप्रभृति-शब्दानामुच्चारणे तत्राग्न्यादिरूपार्थस्यापि सत्वात् मुखस्य दाहः स्यात्। खड्गादि शब्दोच्चारणे च मुखस्य छेदनं भेदनं च स्यात्। न चैतत् सर्वं भवति तस्मान्नैव शब्दार्थयोः संयोगसम्बन्धोऽभ्युपगन्तुं शक्यः। शब्द इति द्वितीयपक्षोऽपि न युज्यते स्वीकर्तुं यतोहि-यत्र भूतलादौ घटादिपदार्थो भवति तत्र शब्दोच्चारण-साधनस्य शब्दस्य दुर्निवारणमनुच्चारणमापद्यते। अतः पदार्थदेशे शब्दस्य सत्ता नोपपद्यते। सर्वथा सुस्पष्टमेतत् यत् घटादिशब्दस्य स्थानं कण्ठादयः करणं च प्रयत्नविशेषः। पदार्थदेशे च तौ न-भवतामिति।

पदार्थदेशे शब्दशक्त्या असम्भवदसन्निहितयोः पदार्थयोः संयोगो नैव संगच्छत इति द्वितीयपक्षेऽपि नोपपद्यते। तृतीयकल्पस्तु प्रागुक्तोभयकल्पयोः समुच्चयरूपत्वादेव तदुभयकल्पयोरसम्भवादेव न सम्भवतीति विस्पष्टम् एवञ्च समवायोऽपि न भवति शब्दार्थयोः यतो हि घटरूपार्थस्योत्पत्तिः कपाले शब्दस्योकाशे कण्ठादिस्थाने वा भवति। अतः शब्दस्यार्थेन सह न समवाय समबन्धः, नाऽपि व्याप्तिसम्बन्धो यतो हि खपुष्पेत्यादीनां वह्निव्याप्तिग्राहासम्भवात्। अतः शब्दस्य संयोगसमवायव्याप्तिरूपः सम्बन्धः न सम्भवतीति। अतः अतिरिक्तः सम्बन्धः कल्प्यः। यद्यपि शाब्दिकैः शब्दस्यार्थः बौद्धः वर्तते तेन पूर्वोक्तदाहादिरूपापत्तिः वारितः भवति। तथापि अत्र केवलं संयोगसम्बन्धखण्डने तात्पर्यं बोध्यम्। तैरपि संयोगो न स्वीक्रियतेऽपितु वाच्यवाचकभावपरपर्यायः - तदात्म्यमङ्गीक्रियते। अतः शब्दार्थसम्प्रत्ययव्यवस्था न सामान्यतः सम्बन्धकृता वर्तते अपितु समवायात्मकवृत्तिरूपसम्बन्धकतैवास्तीति निर्विचिकित्समभ्युपेयम्। शब्दार्थयोः सम्बन्धः तत्कृतैव च शब्दार्थसम्प्रत्यव्यवस्थेत्यर्थः। घटशब्दस्य घटत्वावच्छिन्नं वाच्यमिति। अभिधानाभिधेयनियमस्य वाच्यवाचकभावनियमस्य उपदेश एव समया। यथा घटशब्दस्य कम्बुग्रीवादिमानेव, अर्थः एवं पटशब्दस्य आतानवितानभावापन्नः पटव्यक्तिरेवार्थः। गोः शब्दस्य सास्नादिमानैवार्थः। योऽयमीदृशो भगवतः परमेश्वरस्य सर्गादौ "सङ्केतः तेन समयः शक्तिः द्योत्यते"।[४०] एतस्मिन् समये इति सत्येव- शब्दार्थव्यवस्था भवति शब्दविशेषादर्थविशेषविषयक-बोधादयं नियमः कल्पते। उक्तसमयात्मकसंकेतज्ञानाभावे शब्दश्रवणे जातेऽपि पदार्थज्ञानं न भवति इत्यन्वयव्यतिरेकाभ्यां शब्दार्थव्यवस्थां प्रति तत्संकेतस्य कारणत्त्वं सिद्धयति। न शब्दार्थव्यवस्था संयोगसमवायादिरूपसम्बन्धैःकृता भवितुमर्हति। शब्दार्थयोः व्यधिकरणतया विभिन्नकालिकतया च तयोर्मिथः व्याप्यव्यापकभावलक्षणसम्बन्धानुपपत्या नोपपादयितुं शक्यम्।

शब्दस्य लिङ्गविधयापि बोधकत्वं नैवोपपादयितुं शक्यम्। इदमत्र विशेषावधेयं यत् शब्दात् तदर्थप्रतीत्युपपत्त्यर्थमेव शब्दार्थयोः सम्बन्धोऽपक्ष्यते अर्थविषयक-प्रतीत्युपपत्तिश्च वाच्यवाचकभवसम्बन्धादेवोपपद्यते। नान्यसम्बन्धाद् इत्यतो वाच्यवाचकभावात्मकवृत्तिरूपः एव सम्बन्धः शब्दार्थयोरस्तीति निर्विवादं वेदितव्यम्।

शब्दार्थयोः सम्बन्धनिर्धारणे इदमवश्यवमधेयं यत् पूर्वं वक्ता अर्थं परिकल्प्य शब्दे प्रवर्तते। श्रोता तु पूर्वं शब्दं संश्रुत्याऽर्थं निर्धारयति। अत एव कतिपये आचार्याः शब्दनिमित्तकमर्थं मन्वते, कतिपये चाऽऽचार्याः अर्थनिमित्तकं शब्दं स्वीकुर्वते। आचार्यपतञ्जलिना शब्दनिमित्तकाऽर्थवादिनां मतमुपस्थाप्य प्रत्याख्यातम् अर्थनिमित्तको भवति शब्दो न तु शब्दनिमित्तकोऽर्थ इति पतञ्जलिर्व्याचष्ट। भर्तृहरिणाऽचार्येण अर्थस्य कारणं शब्दं व्याख्याय शब्दनिमित्तकार्थवादिना मतमनूदितं स्वीकृतञ्च। अर्थाऽवगतये शब्दः प्रयुज्यते इति उभयसम्मतं मतम्, अर्थबोधनमात्रफलकः शब्दप्रयोग इति कात्यायनः पतञ्जलिश्च स्वीचकार। कस्याऽर्थस्याभिव्यक्तये कः शब्दः प्रयोक्तव्यः इत्येषः निर्णयः प्रयोक्तुरेवाधीनो भवति। केन वा शब्देन कोऽर्थोऽभिधेयः इति विनिश्चयोऽपि कश्चनाऽपौरुषेयो नास्ति। प्रवक्ता प्रतिपत्ता चैको हि शब्दस्य तदर्थस्य तयोश्चाऽभिसम्बन्धस्य भवति संस्थापकः। अहर्निशं प्रचयापचयशीलेऽर्थे नवे नवे चाऽर्थाभिधानसमर्थे शब्दे को नाम्ना पौरुषेयो नियमः सन्तिष्ठते अतः भाषातत्त्वदृष्ट्या एतत् सुस्पष्टम् अवधेयं यद् वाच्यवाचकविनिश्चयः तयोः सम्बन्धनिर्णयश्च व्यवहाराधीन एव-

प्रयोक्तैवाऽभिसन्धते साध्यसाधनरूपताम्।
अर्थस्य वाऽभिसम्बन्धकल्पनां प्रसमीहते।।

शब्दार्थयोः सम्बन्धनिर्धारणे एतदवधार्यैव किञ्चिदपि वक्तुं शक्यते। शब्दस्यार्थेन सम्बन्धद्वयं प्रत्यपादयत्।

(१) वाच्यवाचकभवाख्यः (२) योग्यतालक्षणश्च शाब्दिकैः वक्तृश्रोत्रोः मनः स्थितिमाधृत्यैव सम्बन्धद्वयमेतत् प्रतिपादितम्।

वाच्यवाचकभावः (अयमेव सम्बन्धः नागेशाभिप्रेतः) शब्दार्थयोः वाच्यवाचक-भावाख्य सम्बन्धः सन्तिष्ठते। शब्दार्थयोः वाच्यवाचकभावविषये मतद्वयमचर्चयत् प्राक्। मतद्वये कश्चिद् विरोधो नाशङ्क्यः। वक्तुः कृते कारणमर्थः शब्दस्य, श्रोतुश्च कृते शब्दः कारणमर्थस्य। एवञ्च उभयोर्मतेऽपि शब्दार्थयोः वाच्यवाचकभवाख्यापर पर्यायकार्यकारणभावः सम्बन्धः सम्पन्नः। अर्थं परिभाषमाणो भतृर्हरिः सम्प्रत्ययनिमित्तकं शब्दं व्याचष्ट। येनोच्चारितेन शब्देन यः सम्प्रत्ययो भवति

सोऽर्थ इति व्याचक्षाणस्य भर्तृहरेः शब्दार्थयोः कार्यकारणभावाऽपरपर्याय-वाच्यवाचकभावः सम्बन्धोऽभिप्रेतः। भर्तृहरिणा कण्ठतोऽपि अर्थस्य कारणं शब्दः प्रतिपादितः। सम्प्रत्ययनिमित्तया वाचोऽन्वख्यापकं खलु व्याकरणमिति पतञ्जलिः समुपादयत्।

किञ्च अर्थाऽवगतये शब्दप्रयोगं मनुते पतञ्जलिः। एवञ्च एतन्मतमास्थितस्य पतञ्जलेरपि शब्दार्थयोः वाच्यवाचकभावः सम्बन्धोऽभिमतः पाणिनेः। "तस्येदम्" इत्यादिनिर्देशः शब्दार्थयोः वाच्यवाचकभावसम्बन्धस्य विनिगमकः।

अस्यार्थस्याऽयं वाचकः अस्य वाचकस्य शब्दस्य चाऽयमिति प्रतीतेः विनिश्चायकं तत्वं सम्बन्ध एव भवति। असम्बद्धस्यार्थस्यासम्बद्धेन शब्देन वाच्यवाचकाभवात्। अयं कार्यकारणभावाऽऽख्यः सम्बन्ध एव वाच्यवाचकः। अयमेव नागेशाभिप्रेतः तथा चोक्तं "तस्मात् पदपदार्थयोः सम्बन्धान्तरमेव शक्तिर्वा वाच्यवाचकभावापरपर्याया तत् ग्राहकं चेतरेतराध्यासमूलकं तादात्म्यं। तदेव सम्बन्धः उभयनिरूपिततादात्म्यवानुभय इति अर्थपदयोर्व्यवहारात् शक्तेरपि कार्यजनकत्वं सम्बन्धस्यैव नियामकत्वात्।"[५१] एतेन कार्यकारणभावसम्बन्धः सिध्यति।

स एव प्रत्याप्यप्रत्यायको व सम्बन्धो व्यपदिश्यते। एकस्यैव तत्त्वस्य नामभेदेन व्याख्याभेदोऽयं बोध्यः। कार्यकरणभावाख्योऽयं सम्बन्धः शब्दस्य शब्दार्थेनैव न तु बहीरूपतयाऽवस्थीयमानेन वस्त्वर्थेन। अत्यन्तमतथाभूतस्यापि अर्थस्य शब्देन वाच्यत्वदर्शनात्। अयं तादात्म्यरूपः सम्बन्धः बौद्धार्थस्यैव ग्राह्यः तेन न कुत्रापि दोष अयं कार्यकारणभावः वाच्यवाचकपरपर्यायः नवीनाभिमतो वर्तते।

(२) योग्यातलक्षणः- (अयं प्राचीनै भट्टोजिदीक्षितादिभिः अभिमतः) व्याकरणाऽनुशासने योग्यतालक्षणः सम्बन्धोऽपि परिगणितः। तथा चोक्तम्-

इन्द्रियाणां स्वविषयेष्वानादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा।।[५२]

यथा चक्षुरादीन्द्रियाणां चाक्षुषप्रत्यक्षादिस्वविषयेषु-

अनादिर्योग्यता दृश्यते तथा शब्दानामपि अर्थैः सह अनादिः योग्यता सन्तिष्ठते। सा योग्यता एव च सम्बन्धः। स्वाभाविकं हि शब्दैः अर्थाः अभिधीयन्ते न तत्र वचनमपेक्षते किञ्चित्। कात्यायनेन पतञ्जिलना चापि शब्दैरर्थानां स्वाभाविकमभिधानं स्वीकृत्य शब्दार्थयोः योग्यतालक्षणाख्यः सम्बन्धोऽभिव्यक्तः। शब्दानाम् अर्थाभिधाने अकृत्रिमा योग्यता भवति। तत्र संयोगसमवायादिसम्बन्धो नापेक्षते। कैयटमते व्याकरणशास्त्रेऽपि पशुरपत्यं देवतेत्यादि सर्वगम्य लौकिकसम्प्रत्ययनिमित्तकैः शब्दैः योग्यतालक्षणसम्बधेन अर्थ एव गृह्यते।

अत्रेदमवधेयम्- विरलप्रयोगैः अस्पष्टशक्तिकैः नवैः शब्दैः कार्यकारणभावेनैव सम्बन्धेनाऽर्थोऽभिधीयते अनभ्यस्तत्वेन तत्र योग्यता लक्षणसम्बन्धस्याभावात् परम्परावृद्धव्यवहारदिसंकेतग्रहैः शब्दार्थनिर्धारणे-परिपुष्टसंस्कारेणैव विदुषा योग्यतालक्षणेन सम्बन्धेन शब्दार्थोऽवगन्तुं शक्यते। भर्तृहरिणाऽपि संकेतादेव योग्यतालक्षणसम्बन्धस्य सत्ता स्वीकृता। कोशादिसाहाय्येन प्रयत्नजन्यस्तु शब्दार्थः कार्यकारणभावात्मनैव। अन्यथा हि घटादिषु कार्यकारणभाव अन्यथा च शब्दव्यवहारे। अर्थक्रियार्थिभिः घटादयोऽन्यत आनीयन्ते नैवं शब्दादयः। अनादि-वृद्धव्यवहार-परम्परा-व्युत्पत्तिपूर्वको हि शाब्दो व्यवहारः। सङ्केतादेवात्रशब्दार्थः कश्चित् सम्बन्धः सम्भवः सङ्केताऽभावे तु न तत्सम्भवः कथञ्चित्। कैश्चिद् भाषाशास्त्रिभिः शक्तिरूपः सम्बन्धो व्याख्याद् अस्मात् पदादयमर्थो बोद्धयः इति ईश्वरेच्छारूपा इच्छामात्ररूपा वा शक्तिरिति न्यायमार्गे तत्तु विस्तारभयान्नोच्यते।

नागेशः- तां शक्तिमेव सम्बन्धं व्याचष्ट। "सा च शक्तिः वाच्यवाचक-भावाऽपरपर्याया शब्दार्थयोरिरेतराध्यासग्राह्या च।"[४३] भर्तृहरिः सम्बन्धं शक्तीनामपि शक्तिं स्वीकुरुते। हेलाराजो मतमिदं न समर्थयते। हेलाराजमते शक्तेरपि आधारपारतन्त्र्यं भवति। उच्चारितेन शब्देन नियताऽर्थबोधे सम्बन्ध एव भवति नियामकः तथा च शाब्दबोधे सम्बन्धस्यैतस्य प्रकारद्वयं सम्भवति। अयं योग्यतालक्षणसम्बन्धः कौण्डभट्टप्रभृतिभिः प्राचीनैः स्वीकृतः। मञ्जूषायां-नागेशेन निराकृतः। तत्तु मञ्जुषातः स्वयमेव बोध्यः। अयं च सम्बन्धः द्विविधो भवति

१. शब्दार्थयोः सम्बन्धः

२. अर्थार्थयोश्चः सम्बन्धः

उपर्युपवर्णितं सम्बन्धस्वरूपं शब्दार्थयोः सम्बन्धस्य विज्ञेयम्। अनेन सम्बन्धेन पदार्थस्य अवगतिर्भवति। वाक्यार्थावगतये तु द्वितीयः सम्बन्धः परिकल्पितः। वाक्ये खलु बहूनि पदानि। बहवश्च पदार्थाः- सन्तिष्ठन्ते। तेषां पदार्थानां परस्परं सम्बद्धे सत्येव वाक्यार्थोविज्ञातुं सम्भवः। पदार्थस्य पदार्थेन सम्बद्धादेवाऽस्माभिः अर्थाऽर्थयोः सम्बन्ध इति नाम परिकल्पितम्। एतदेवाऽभिलक्ष्य गदाधरभट्टः शाब्दबोधप्रक्रियां व्याचक्षाणः पदार्थस्य पदार्थेन संसर्गभानामकाङ्क्षाभास्यं स्वीकुरुते। "तथा हि शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्ग संगर्गमर्यादया भासते।"[४४] इति।

पदार्थस्य पदार्थेन सह सम्बन्धः प्रवृत्तिभेदात् प्रयोक्तुरभिप्रायभेदाच्च अनेकविधः सम्भवति। स्वस्वामिभवादिः आर्थिकसम्बन्धः जन्यजनकभावादिः

यौनः सम्बन्धः गुरुशिष्यभावादिः मौखः सम्बन्धः, यजमानपुरोहितादिः श्रौवश्च सम्बन्धः इत्येवमादयः अनेकविधाः अर्थयोः सम्बन्धाः सम्भवन्ति। राजपुरुषः इत्यत्र राजपदस्य तद्वाच्यसिंहासनस्थार्थेन, पुरुषपदस्य च तद्वाच्यविज्ञातार्थेन सह योग्यतालक्षणेन कार्यकारणभावेन वा सम्बन्धेन पदार्थोऽवगम्यते। राजपदार्थस्य पुरुषपदार्थेन सह तु स्वस्मामिभावः सम्बन्धः। एवमत्र राजनिरुपतिस्वत्ववान् पुरुष इति भवति शाब्दःप्रत्ययः। देवदत्तस्यापत्यमित्यादौ जन्यजनकसम्बन्धः पाणिनेः शिष्ये इत्यादौ गुरुशिष्यभावो मौखः सम्बन्धः पुष्यमित्रस्य पुरोहितः पतञ्जलिः श्रौवः सम्बन्धः विज्ञेयः पतञ्जलिना सम्बन्धाानाम् एकोत्तरं शतं भेदाः निर्दिष्टाः। तेषां वर्गचतुष्टयञ्चोपरि उपपादितं निर्धारितञ्च।

पदार्थयो सम्बन्धकृतव्यपेक्षामाश्रित्यैव लौकिका व्यवहाराः सम्पद्यन्ते। अर्थक्रियार्थिकाभिरर्थयोरेव व्यपेक्षा समाश्रीयते न शब्दयोः शब्दार्थयोर्वा। पचति देवदत्त इत्यादिषु अर्थयोरेव क्रियाकारकभावादिसम्बन्धः सन्तिष्ठते। अर्थयोरभि-सम्बन्धस्य षष्ठी भवति वाचिका। देवदत्तस्य पुत्र इत्यत्र देवदत्तः पुत्रमपेक्षते ममायमिति पुत्रोऽपि देवदत्तमपेक्षते अहमस्येति। कष्टश्रित इत्यादौ क्रियाकारकयोः सम्बन्धस्य तु द्वितीया वाचिका भवति। एवमन्यत्र तृतीयादयो विभक्तयोऽपि अर्थयोरभिसम्बन्धं व्यञ्जयन्ति। इति नागेशः।

अतः प्रागस्माभिः शब्दस्यार्थस्य सम्बन्धस्य च स्वरूपं सुस्पष्टं प्रतिपादितम्। प्रयोक्ता स्वबुद्धिभावनाऽभिव्यक्तये शब्दव्यापारं कुरुते। वक्तुः शब्दार्थयोः गृहितसम्बन्धेन च श्रोता अर्थमभिगच्छति सम्बन्धस्य स्वकीयं पृथक् किञ्चिदस्तित्वं न भवति। शब्दार्थयोः सहवर्ती सम्बन्धोऽयं सम्बन्धिभ्यां भिन्नेऽपि उभयाश्रितो भवति तथा चोक्तं नागेशेन द्विष्ठत्वे सति संबन्धिभ्यां भिन्नत्वे सति विशिष्टबुद्धि नियामकत्वं सम्बन्धत्वम्। शब्दार्थयोः नित्यत्वं भाषातात्त्विकदृष्ट्या बोध्यम्। एवं च सम्बन्धस्यापि नित्यत्वमेव भाषाशस्त्रिभिभ्युपगतम्।

यद्यपि सम्बन्धो नाम प्रयोज्यप्रयोजकयोः भावनाविशेष एव भवति। अतः कथं तत्र नित्यत्वं सन्तिष्ठत इति वक्तुं सुकरं तथाऽपि प्रवाहनित्यता यथा शब्दार्थयोः नित्यत्वं तथा सम्बन्धस्यापि नित्यत्वं बोध्यं। शब्दस्य प्रवृत्तिनिमित्ततदाश्रययोश्चानेयत्येन अर्थस्य अभिधेयात्मा नित्यो वक्तुं शक्यते। शब्दोऽपि अभिधायकात्मा नित्यो वक्तुं शक्यते। यतः सम्बन्धः सहवर्ती शब्दार्थयोः अस्मात् सम्बन्धोऽपि अविनाभावेन विद्यमानत्वाद् नित्यो भवति।

शब्दस्य अर्थो न भवति वाचनिकः, अपितु स्वाभाविको हि शब्दैरर्थोऽभिधीयते। तथा सम्बन्धोऽपि स्वाभाविक एव शब्दार्थयोः। व्याडिना सम्बन्धः अकर्तृको

व्याख्यातः। लौकिकानां वैदिकानाञ्च शब्दानामर्थैः सह स्वाभाविक एव सम्बन्धो व्याडिसम्मतः। सम्बन्धः खलु भवति आकाङ्क्षाभास्यः न तु शब्दाभिधेयः। वस्तुतः सम्बन्धः प्रयोक्तुः प्रतिपत्तुश्च भावनैव भवति। शब्दानां सार्थकत्वं निरर्थकत्वञ्च सम्बन्धबलादेव क्रियते। अनित्येऽप्यर्थे योग्यतालक्षणत्वात् सम्बन्धस्य नित्यत्वं व्याख्यातं विदुषा कैयटेन। कात्यायनः "सिद्धे शब्दार्थसम्बन्धे"[५५] इति वार्तिके सम्बन्धं सिद्धं व्याचष्ट। व्याडिना कार्यप्रतिद्वन्द्विभवार्थे प्रयुक्तं सिद्धशब्दमाश्रित्य पतञ्जलिः नित्यार्थे सिद्धशब्दं व्याख्यतवान् एवञ्च कात्यायन-पञ्जलयोः कृते सम्बन्धस्य नित्यत्वं सम्पन्नम्। अर्थवतामर्थैः सह सम्बन्धो नित्यो भवतीति वृद्धिरादैजिति पाणिनीयं भाषमाणः पतञ्जलिः प्रत्यपादयत्। पाणिनिराचार्यः नित्यमभिमत्य शब्दार्थसम्बन्धमनुशासने प्रवृत्तः इति। उक्ताचार्यद्वयस्याऽभिप्रेतम् भर्तृहरिणा आचर्यत्रयमतम् एतदवलम्ब्य शब्दार्थसम्बन्धानां नित्यत्वमनूदितम्।

नित्याः शब्दार्थसम्बन्धाः तत्राऽऽम्नाता महर्षिभिः।
सूत्राणां चानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः।।[५६]

कारिकामिमां टीकमानो हरिवृषभः स्वभावसिद्धं सम्बन्धं व्याचष्ट। तदेवाधृत्य हरिवृषभोऽपि औत्पत्तिको भवति सम्बन्ध इति मतमतिष्ठत्। सम्बन्धं नित्यं प्रतिपादयमानो वृषभः प्राप्ताऽविच्छेदमपि सम्बन्धं स्वीचकार। पारस्परिक व्यवहारमूलक एव भवति शब्दव्यापारः व्यवहारपद्धतिश्च अनादिविच्छन्न-यावत्सृष्टिस्थित्या। व्यवहारपरम्पराया अनादित्वात् सम्बन्धस्य नित्यत्वं कैयटेन व्याख्यातम्। नागेशः सम्बन्धस्यानादित्वं नित्यत्वं जगाद उद्योते।

कस्यापि शब्दस्य कश्चनापि अर्थनियतो वक्तुं शक्यते। अद्याभिधेयत्वेन स्वीकृतः शब्दार्थः कलान्तरे हीयते, पुनः कश्चिदन्योऽर्थः प्रचीयते। एवं शब्दार्थस्याऽ-निरियतत्वेऽपि तत्र शब्दे अभिधेयत्वधर्मः सन्तिष्ठत एव। भाषायाः स्वाभाविकी प्रवृतियम् अपलपितुं न शक्यते योऽपि शब्दः प्रयोक्तृप्रतिपत्तृभ्यां यस्मिन् कस्मिन्नपि अर्थे विनियोक्तुं शक्यते। अत एव एक एव शब्दः क्वचित् किञ्चित् प्रवृत्तिनिमित्तं व्यनक्ति क्वचिदन्यत् क्वचिच्चान्यत्। शास्त्रभेदात् सम्प्रदायभेदाच्च शब्दार्थः भिद्यमानोऽवलोक्यत एव। तत्र सम्बन्धग्रहणभेद एव मुख्यं भवति कारणम्। यः सम्प्रदायः यत्र शब्दे यस्यार्थस्य शक्यतां स्वीकुरुते स भवति तस्य शब्दस्य अर्थः अस्मादेव सर्वे सर्वार्थवाचका इति स्वीक्रियते शब्दतत्त्वविद्भिः। वक्तुः भावनाविशेषः शब्दः श्रोतुः भावनाविशेषोऽर्थः उभयोश्चैकाधिकरणऽर्थे तादाम्यं सम्बन्ध इति निष्कर्षः।

स्फाटिकादि यथा द्रव्यं भिन्नरूपैरुपाश्रयैः।
स्वशक्तियोगात्सम्बन्धस्ताद्रूप्यमुपगच्छति।।[५७]

## उद्धृतिसूचिका–

१. म०भा०प०आ०
२. पर०ल०मञ्जू० (स्फोट प्रकरण)
३. म०भा०प०आ०
४. वा०प०
५. पा०सू०
६. वा०प०
७. म०भा०(पा०सू० १/१/७०)
८. वा०प०
९. पर०ल०मञ्जू० (स्फोटप्रकरणम्)
१०. वा०प० (प्र०काण्ड)
११. वै०सि०ल० मञ्जू० (स्फोट निरुपणम्)
१२. श्रीमद्भागवतम्
१३. म०भा०
१४. न्या०सि०मु०
१५. म०भा० (प०प०)
१६. पर०ल०मञ्जू०
१७. वै०सि०कौ०
१८. म०भा०
१९. वा०प० (३/१६)
२०. इम०भा०सू० (१/२/६४)
२१. वा०प० (१/५६,५७)
२२. वा०प० (३/१६)
२३. वा०प० (३/१८)
२४. म०भा०प्र०टी०
२५. भूष०(स्फोटप्रकरणम्)
२६. वा०प०
२७. प्रथ०अभे०निरु०
२८. महा०भा० (१/२/६४)
२९. पा०सू० (४/१/३)
३०. पा०सू० (१/२/६४)
३१. महा०भा० (१/२/६४)
३२. महा०भा० (१/२/६४)
३३. पर०लघु०मञ्जू० (शक्तिप्रकरणम्)
३४. लघु०शेख० (कारकप्रकरणम्)
३५. न्या०दर्श० (२/१/५४)
३६. सांख्य०कौ०
३७. पर०लघु०मञ्जू० (शक्तिप्रकरणम्)
३८. न्या०सि०मुक्ता०
३९. कारि० (शब्दखण्ड)
४०. यो०द०व्या०भा०स०पा० ७ पा०र०
४१. पर०लघु० मञ्जू० (शक्तिप्रकरणम्)
४२. वैया०भूष० (शक्तिप्रकरणम्)
४३. पर०लघु० मञ्जू० (शक्तिप्रकरणम्)
४४. व्यु०प्रथ०अभे०
४५. महा०भा०(प०प०)
४६. वा०प०कारि०-३२ (ब्रह्म०)
४७. वा०प० (३/३/४०)

# शाब्दबोधप्रक्रियायां कारकसम्बन्धविमर्शः

भगवान् पाणिनिः कारकस्य विभाजनं सैद्धान्तिकदृष्ट्या 'सामान्यः विशेषः एवं शेषः' इत्याधारेण करोति। 'पारिभाषिका-आरोपित-कारकनियमाः' इत्याधारेण षट्कारकाणां कृते सामान्यनियमाः सन्ति। विशेषनियमाः तेषाम् अपवादस्वरूपाः सन्ति। येषां सामान्य-विशेषयोरन्तर्भावः न भवति ते शेषनियमाः भवन्ति। सामान्यनियमेतरगुणानामुपयोगदृष्ट्या अपवादाः आवश्यकाः। पाणिनीयप्रक्रियायां प्रत्येकस्य कारकस्य कृते एका विभक्तिः निर्धारिता। परन्तु तत्र अपवादाः अपि सन्ति यस्य कारणं कारकविभक्त्योः मध्ये निश्चितरूपेण एकैकस्य कारकस्य कृते एकैव विभक्तिः न निर्धारिता।

पाणिनिः द्विधा एतस्य निराकरणं करोति। (अ) कारकस्यारोपं कृत्वा (ब) विशेषविभक्तिनिर्धारणं कृत्वा। यथा 'आधारोऽधिकरणम्'[1] सूत्रमिदं आधारस्य अधिकरणसंज्ञां करोति। अनन्तरं तस्मिन्नधिकरणे सामान्यसूत्रेण[2] सप्तमी-विभक्तिर्भवति। परन्तु यदि आधारः अधिपूर्वकः शीङ्, स्था, आस् इत्यस्मात् धातोः सम्बद्धोऽस्ति चेत् तस्य कर्मसंज्ञा[3] भवति। एवं च 'कर्मणि द्वितीया'[4] इत्यनेन कर्मणि द्वितीया विभक्तिर्विधीयते। उदाहरणेऽस्मिन् पाणिनिना सप्तमीविभक्तिवारणाय नूतनकारकस्यारोपं कृत्वा आधारे कर्मसंज्ञामारोप्य तत्र द्वितीया विभक्तिः निर्धार्यते। अनेन प्रकारेणैव यत्र पारिभाषिकं कारकं न भवति तत्र साक्षात् कारकमारोपयति। यथा : 'रुच्यर्थानां प्रीयमाणः'[5] रुच्यर्थानां धातूनां प्रयोगे यः प्रीयमाणः सः सम्प्रदानसंज्ञकः भवति। अग्रिमचित्रे आर्थिकदृष्ट्या कारक-विभक्ति-सम्बन्धः प्रदर्श्यते सामान्यरूपेण :

१. यदा दिव्धातुसम्बद्धं यत् करणं तस्य विकल्पेन कर्मसंज्ञा विधीयते। वस्तुतः तत्र उत्सर्गः करणमस्त्यनेन पुनः विकल्पेन कर्मसंज्ञां कृत्वा द्वितीयाविभक्तेरपि विधानं कृतं पाणिनिना।[6]

२. उत्सर्गरूपेण कर्मणि द्वितीया, कर्तृकरणयोस्तृतीया, चतुर्थी सम्प्रदाने, इत्यादिसूत्रैः विभक्तिनिर्धारणं क्रियते।[7]

३. यथा द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिव्-धातुसम्बद्धं यत् कर्म तस्मात् षष्ठी विधीयते। वस्तुतः तस्य कर्मत्वेन द्वितीयाविभक्तिः प्राप्ता,

परन्तु पाणिनिना तां प्रबाध्य दिवस्तदर्थस्य इत्यनेन सूत्रेण षष्ठ्याः विधानं कृतम्। (कर्मणि, षष्ठी शेषे, अनभिहिते) (पा. २.३.५८)

४. उत्सर्गरूपेण पाणिनिः आधारस्य अधिकरणसंज्ञां कृत्वा तस्मात् सप्तमीविभक्तेः विधानं करोति। परन्तु यदि अधिशीङ्स्थासधातुसम्बद्धः आधारः अस्ति चेत् तस्य कर्मसंज्ञां विधाय तत्र द्वितीयाविभक्तिः क्रियते पाणिनिना। अत्र महर्षिपाणिनिना अपवादत्वेन आधारसंज्ञां प्रबाध्य नूतनकारकस्यारोपः कृतः। येन नूतनकारकस्य उत्सर्गविभक्तिः प्राप्यते। (आधारः, कारके) (पा. १.४.४६)

५. क्रुधद्रुहेर्ष्यसूयार्थानां यं प्रति कोपः (सम्प्रदानम्, कारके) (पा. १.४.३७)

६. षष्ठी शेषे (पा. २.३.५०)

७. पृथग्विनानानाभिस्तृतीयान्यतरस्याम् (द्वितीया, पञ्चमी) (पा. २.३.३२)

शाब्दबोधप्रक्रियायां प्रत्येक-शब्दस्य अन्येन शब्देन सह अन्वयः आवश्यकः। सामान्यतः एतादृशं ज्ञानं व्याकरणेन संभवति। क्रियात्मकव्याकरणं विश्लेषयति यत् भाषायां पदार्थानां कथं सम्बन्धाः उपस्थापिताः भवन्ति। पाणिनीयव्याकरणं वक्तृपक्षतः साधुवाक्यस्य निर्माणप्रक्रियां सूचयति। तत्र मुख्याः त्रयः प्रश्नाःउपस्थिताः- कः व्यक्तसम्बन्धः, कः प्रकटयति व्यक्तसम्बन्धम्, केन प्रकारेण व्यक्तः स सम्बन्धः इति।

## संस्कृते व्याकरणसम्बन्धसङ्केतनम्

व्यवहारजगत् भिन्नं शब्दजगत् च भिन्नं भवति। व्यवहारे यद् अधिकरणं तस्य शब्दजगति कर्तृत्वेन विवक्षिततत्वात् तत्र कर्तृत्त्वं भवति। यथा- स्थाली पचति। व्यवहारे स्थाली अस्ति अधिकरणं परन्तु वक्तुरिच्छया वाक्ये तस्य कर्तृत्त्वं वर्तते। अतः शब्दजगति विभक्त्या यः सम्बन्धः द्योत्यते तम् एव सम्बन्धं 'वाक्यविश्लेषकम्' स्वीकरोति। इदमेवोदाहरणान्तरैः विशदरूपेणात्र प्रतिपादयामः।

**कः सम्बन्धः**

'स्वतन्त्रः कर्ता' इति कर्तृसंज्ञाविधायकं पाणिनीयं सूत्रम्। सूत्रस्यास्य एतानि त्रीणि उदाहरणानि द्रष्टव्यानि -

देवदत्तः पचति।
स्थाली पचति।
काष्ठानि पचन्ति।

यद्यपि देवदत्तस्थालीकाष्ठानां पाकक्रियायां यथासंख्यं कर्त्तृत्वाधिकरणत्वकरणत्वानि प्रसिद्धानि लोके। परन्तु व्याकरणे त्वेतेषां सर्वेषां पाकक्रियायां कर्त्तृत्वं साध्यते। कथं तद्? प्रतिकारकं क्रियाभेदात्। उक्तञ्च महाभाष्ये-

'कोऽसौ प्रतिकारकं क्रियाभेदः पचादीनाम् ?

अधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षणक्रियाः प्रधानस्य कर्तुः पाकः।[८]

अधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षणादिक्रियाः कुर्वन्नेव 'देवदत्तः पचति' इत्युच्यते। तत्र तदा पचिर्वर्तते। एषः प्रधानकर्तुः पाकः। एतत्प्रधानकर्तुः कर्तृत्वम्।

द्रोणं पचत्याढकं पचतीति सम्भवनक्रिया धारणक्रिया चाधिकरणस्य पाकः।

द्रोणं पचत्याढकं पचतीति सम्भवनक्रियां धारणक्रियां च कुर्वन्ती स्थाली 'पचति' इत्युच्यते। तत्र तदा पचिर्वर्तते। एषोऽधिकरणस्य पाकः। एतदधिकरणस्य कर्तृत्वम्।

एधाः पक्ष्यन्त्याक्लित्तेर्ज्वलिष्यन्तीति ज्वलनक्रियाकरणस्य पाकः।[९]

एधाः पक्ष्यन्ति, आ विक्लित्तेर्ज्वलिष्यन्तीति ज्वलनक्रियां कुर्वन्ति काष्ठानि 'पचन्ति' इत्युच्यन्ते। तत्र तदा पचिर्वर्तते। अत्र काष्ठरूपकरणजन्यः पाकः। एतत्करणस्यैवं कर्तृत्त्वम्।

अत एव विभक्त्या केवलं कर्त्तृत्वस्याभिज्ञानाद् आर्थिसंबन्धमवगणय्य व्याकरणमनुसृत्य वाक्यविश्लेषकेनात्र देवदत्त-स्थाली-काष्ठानां केवलं कर्त्तृत्वं प्रदर्श्यते न तु अधिकरणत्वं करणत्वं वा।

शेषे (पा. २.३.५०) अनेन सूत्रेण स्वस्वामिभावादिसम्बन्धबोधनार्थं षष्ठीविभक्तिः।

उक्तादन्यः (कारकप्रातिपदिकाद्भिन्नः) शेषः भवति। तस्य सम्बन्धविवक्षायां षष्ठीविभक्तिर्विधीयते।[१०] अस्य उदाहरणानि प्रदत्तानि-

वृक्षस्य शाखा।
पितुः पुत्रः।
राज्ञः पुरुषः।

अत्रापि यथासंख्यं अवयवावयवि-जन्य-जनक-स्व-स्वामि-संबन्धाः प्रसिद्धा लोके। किन्तु व्याकरणे सर्वे 'षष्ठी शेषे' (पा. २.३.५०) सूत्रान्तर्गतपरिगणिताः षष्ठ्या विभक्त्या सूच्यन्ते। विभक्तिं दृष्ट्वा सम्बन्धषष्ठ्यैवाभिज्ञानाद् सम्बन्ध-षष्ठ्येव विश्लेषकेन स्वीक्रियते। सम्बन्धविशेषस्याङ्कनं तु न करोति।

अधिशीङ्स्थासां कर्म (१.४.४६) अधिपूर्वाणां शीङ् स्था आस् इत्येतेषाम् आधारः यः तत् कारकं कर्मसंज्ञकं भवति।

अत्र व्यवहारे वस्तुतः भिन्नकारकं वर्तते परन्तु शब्दजगति भिन्नं कारकम्। स्पष्टीकरणार्थं सूत्रस्यास्योदाहरणानि प्रदत्तानि -

हरिः वैकुण्ठम् अधिशेते।
मुनिः शिलापट्टम् अधितिष्ठति।
साधुः पर्वतम् अध्यास्ते।

वैकुण्ठशिलापट्टपर्वताः यथासंख्यं हरिमुनिसाधूनामधिकरणानि लोके। किन्तु शब्दजगति 'अधिशीङ्स्थासां कर्म' (पा. १.४.४६) सूत्रानुसारं तेषां कर्मत्वमङ्गीक्रियते। विभक्त्याऽत्र कर्मत्वमेव द्योत्यतेऽतः कर्म-संबन्ध एव प्रदर्श्यते विश्लेषकेन।

सहयुक्तेऽप्रधाने (२.३.१९) इत्येते सहार्थेन युक्तेऽप्रधाने तृतीयाविभक्तिर्भवति। स्पष्टीकरणार्थं उदाहरणं पश्यामः-

मात्रा सह शिशुः अङ्के उपविश्य गृहम् आगच्छति।

वाक्येऽस्मिन् व्यवहारे माता एव आगमनक्रियां करोति, शिशुः तु अङ्के एव उपविष्टः। परन्तु शब्दजगति 'शिशुः' मुख्यक्रियया (आगच्छति) सह अन्वेति अतः तस्य प्रधानत्वेन कारकत्वम्, अप्रधानत्वेन मातुः कारकत्वं नास्ति। अतः अप्रधानत्वात् सहयुक्ते तत्र तृतीयाविभक्तिः आगता।

इत्थं व्यवहारे शब्दजगति यः सम्बन्धः, तयोः भेदे सति शब्दजगति यः सम्बन्धः स एव स्वीक्रियते। शाब्दबोधप्रक्रियायां वैयाकरणानां मतमेव वाक्यविश्लेषणनिर्माणे प्रमाणत्वेनाङ्गीकृतम्।

## केन व्यक्तः सम्बन्धः

### १) अभिहितत्वम्-

उक्तं पाणिनिनाऽनभिहितेअनुक्ते, अनिर्दिष्टे कारके विभक्तिर्भवति। केनानभिहिते ? तिङ्कृत्तद्धितसमासैः अनभिहिते। अभिहिते तु प्रातिप्रदिकार्थमात्रे प्रथमा भवति। यथा -

❖ रामः वनं गच्छति।

अत्र 'गच्छति' पदेन अभिहितो 'रामः'। कथं ज्ञायते? तिपा सामानाधिकरण्यात् रामस्य। तिप् इत्यनेन यत्सामानाधिकरण्यं रामस्य तत् शप् इत्यनेन प्रत्ययेन द्योत्यते। रामाभिन्नकर्त्तृको गमनानुकूलो व्यापारोऽत्र। तिपा अभिहितत्वात् राम-शब्दात् प्रथमा, यया रामस्य कर्त्तृत्वमभिज्ञायते।

तथैव -

❖ रामेण वनं गम्यते।

अत्र 'गम्यते' पदेन अभिहितं वनम्। कथं ज्ञातम्? त-प्रत्ययेन वनस्य सामानाधिकरण्याद् ज्ञायते। तत् सामानाधिकरण्यं यक्प्रत्ययेन द्योत्यते। अभिहितत्वात् वन-शब्दात् प्रथमा, यया वनस्य कर्मत्वमभिज्ञायते।

❖ रामः ग्रामं गतः।

उक्तोदाहरणेऽत्र 'गतः' इति पदे वर्तमानः क्त-प्रत्ययः कर्तरि सद्भावात्, सामानाधिकरण्यात् रामं कर्त्तारमभिदधाति। क्तेन कर्त्रभिधानात् राम-शब्दात् प्रथमा, यया रामस्य कर्त्तृत्वमभिगम्यते।

❖ रामेण ग्रामः गतः।

'गत' इत्यस्मिन् पदे क्त-प्रत्ययः कर्मणि वर्तते। अतः सामानाधिकरण्यात् क्त-प्रत्ययेनाऽत्र ग्रामरूपं कर्माभिधीयते। क्त-प्रत्ययान्तेनाभिहितत्वाद् ग्राम-शब्दादत्र प्रथमा, यया ग्रामस्य कर्मत्वमभिगम्यते।

२) विभक्तिः -

१. कारकविभक्तिः कारकसम्बन्धं दर्शयति। यथा - नृपः ब्राह्मणाय गां ददाति। अत्र गोब्राह्मणाभ्यां ये द्वितीयाचतुर्थ्यौ ते गोब्राह्मणयोः यथाक्रमं कर्मत्वं सम्प्रदानत्वञ्च दर्शयतः।

२. उपपदनिमित्तिका विभक्तिरुपपदविभक्तिरुच्यते। यथा - रामेण सह सीता वनं गच्छति। अत्र रामशब्दाद् या सहपदनिमित्तिका तृतीया सा उपपदविभक्तिरुच्यते। यया उपपदसम्बन्धः स्पष्टीक्रियते।

२. प्रतिपदोक्ता विभक्तिः - पाणिनिना उपपदविभक्तिभिन्ना प्रतिपदोक्तविहिता प्रतिपदोक्तविभक्तिरत्र। यथा - पादेन खञ्जः इत्यङ्गविकारे तृतीया, शिखया परिव्राजक इति इत्थंभूतलक्षणातृतीया, धनेन कुलमिति हेतौ तृतीया, गवां गोषु वा कृष्णा सम्पन्नक्षीरतमेति निर्धारणे षष्ठी सप्तमी वा इत्यादयः प्रतिपदोक्तविभक्तय उच्यन्ते। सर्वा एता विभक्तयः सम्बन्धमूलाः सन्ति।

३. षष्ठीविभक्तिः -

संबन्ध-षष्ठी = शेषेऽर्थे विहिता षष्ठी 'षष्ठी शेषे (पा. २.३.५०)' इति सूत्रेण। कर्मादिभ्योऽन्यः प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषः, तत्र षष्ठी विभक्तिर्भवति, सा संबन्ध-षष्ठी अत्र। एकशतं षष्ठ्यर्थाः इति उक्तं महाभाष्ये। परन्तुः कः षष्ठ्यर्थः इति ज्ञानं व्यवहारेणैव भवति। व्यवहारज्ञानाभावात् षष्ठ्यर्थस्य निर्णयः असम्भवः। अतः यथा पाणिनिना सम्बन्धे षष्ठी विधास्यते तथैवात्रापि सम्बन्धमात्रं द्योत्यते।

कारक-षष्ठी = 'कर्तृकर्मणोः कृति (पा. २.३.६५)' इति कृद्योगे विहिता षष्ठी कारकषष्ठीति उच्यते।' शब्दानाम् अनुशासनम्', 'देवदत्तस्य पाकः' इति।

३) उपपदभिन्नाव्ययानि-

अव्ययान्यपि संबन्धदर्शने सहायकानि। यथा -

१) देवदत्तः ओदनं न भुङ्क्ते।

'न' अत्र निषेधदर्शकः।

२) रामः एव तत्र उपविशेत्।

बलाधानद्योतकोऽत्र 'एव'।

३) इच्छामि ज्ञातुं नरमेवं विधं हि मे परं कौतूहलम्।

इच्छतेः कारणस्य द्योतका 'हि' अत्र।

४) क्रियाविशेषण-पदानि -

धात्वर्थव्यापारजन्यफले अभेदान्वयात् क्रियया सामानाधिकरण्यं तस्माद्विशेषणत्वञ्च क्रियाविशेषणानाम्। तान्यपि द्विधानि अव्ययसुबन्तस्वरूपभेदत्वात्।

अव्ययस्वरूपाणि-

❖ देवदत्तः सुष्ठु पचति।

देवदत्तकर्तृकपचौ सुष्ठुपदार्थस्याभेदान्वयात् क्रियया सामानाधिकरण्यम् विशेषणत्वञ्च।

सुबन्तस्वरूपाणि -

❖ रामः मन्दं चलति।

❖ अश्वः शीघ्रं धावति।

❖ रमा गीतं मधुरं गायति।

❖ स्तोकं पचति।

रामादिकर्तृको मन्दत्वाद्यभिन्नश्चलनाद्यनुकूलो व्यापारः सर्वत्र। अतः धात्वर्थव्यापारजन्यफले विभिन्नविभक्तिकमन्दादि-पदार्थस्याभेदान्वयात् क्रियया सामानाधिकरण्यम् विशेषणत्वञ्च।

५) समानाधिकरणत्वम् -

समानलिङ्गवचनविभक्तिकपदयोः पदानाञ्च समानाधिकरणत्वमर्थाद् तानि पदानि विशेष्यविशेषणभावं द्योतयन्ति। यथा-

❖ श्वेतः अश्वः अस्ति।

अत्र अश्वत्वश्वेतत्वयोः समानाधिकरणत्वाद् विशेष्यविशेषणभावसंबन्धः समानलिङ्गवचनविभक्तित्वाद् ज्ञायते।

❖ अश्वः श्वेतः अस्ति।

अत्रापि अश्वत्वश्वेतत्वयोः समानाधिकरणत्वं समानलिङ्गवचनविभक्तित्वञ्च। परमुद्देशविधेयभावमाश्रित्य श्वेतत्वमत्र विधेयविशेषणमिति।

## केन प्रकारेण व्यक्तः सम्बन्धः-

न सर्वे संबन्धाः विभक्त्या द्योत्यन्ते किन्तु भाषाप्रवाहेणावगम्यन्ते। यथा-

❖ रामः दुग्धं पीत्वा शालां गच्छति।

अत्र गमनक्रियायां रामस्य कर्त्तृत्वं तिङा ज्ञायते। परं पिबतावपि रामस्य कर्त्तृत्वं विद्यते। तत् कथं ज्ञायते? क्त्वा-प्रत्ययेन। लोके 'समानकर्त्तृकयोः पूर्वकाले (पा. ३.४.२१)' समाने कर्तरि पूर्वकाले धात्वर्थे वर्तमानाद् धातोः क्त्वा विधीयते। अतोऽत्रापि पूर्वकालिकत्वात् पिबतेः क्त्वा-प्रत्ययः, तेन क्त्वाप्रत्ययेन ज्ञायते यत् पिबतेर्गच्छतेश्च कर्त्ता राम एव इति। अर्थात् राम एव पूर्वं दुग्धं पिबति। ततश्च राम एव शालां गच्छति। इत्थमत्र पिबतौ रामस्य कर्त्तृत्वं विभक्त्या न द्योत्यते किन्तु भाषाप्रवाहेणावगम्यते अर्थात् एतादृक्षु स्थलेषु भाषायां क्त्वा प्रयुज्यते येन कर्त्तृत्वं ज्ञायते। उक्तं हरिणापि -

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते।। ३.७.८१

प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यदा गुणे तदा तद्वदनुक्तापि प्रकाश्यते।। ३.७.८२

अर्थात् क्रियाद्वयस्य यदा एक एव कर्त्ता तदा विभक्त्या प्रधानक्रियया कर्ता अभिधीयते। यद्यपि गौणक्रियायामपि तस्य कर्त्तृत्वं भवति। तच्च गौणकर्तृत्वं विभक्त्या न बोध्यते, किन्तु प्रतीयते।

❖ रामः रोटिकां पक्त्वा ओदनं भुङ्क्ते।

❖ रामः पक्त्वा ओदनं भुङ्क्ते।

प्रथमवाक्ये कर्मद्वयस्य विद्यमानत्वात् स्पष्टं यत् रोटिकाकर्मकः पचिरोदनकर्मको भुजिरत्रेति। किन्तु, द्वितीये न तथा। तत्र त्वेक एव पदार्थ 'ओदनः' इति कर्मणि दृश्यते। क्त्वा-प्रत्ययस्य समानकर्तृद्योतकत्वं, न तु समानकर्मद्योतकत्वम्। अतः कर्मसाकाङ्क्षस्य पचेः किं कर्म इति पुनः स्मर्यते हरिरत्र 'प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते। यदा गुणे तदा तद्वदनुक्तापि प्रकाश्यते।।' इति पचावपि गौणक्रियायाम् ओदनस्य कर्मत्वं प्रधानक्रियाभुजिवत्।

❖ धावन्तम् अश्वं पश्यति।

यद्यपि समानाधिकरणं धावनस्याश्वत्वस्य समानलिङ्गवचनविभक्तित्वञ्च। तस्माद् विशेष्यविशेषणभावसंबन्धे सत्यपि धावने अश्वस्य कर्त्तृत्वम्। कथमभिज्ञायते? 'कर्त्तरि कृत् (पा. ३.४.६७)' इति शतृ प्रत्ययः कर्त्तरि सद्भावात् कर्त्तारमभिदधाति। कृदन्तत्वात् स्वयं विशेषणीभूतो 'लटः शतृशानचाव-प्रथमासमानाधिकरणे (पा. ३.२.१२४)' इति शतृप्रत्ययः कर्त्रा सामानाधिकरण्यात् विशेष्य-कर्त्तुः लिङ्गवचनविभक्तिं गृह्णाति।

## संदर्भ सूची–


१. पा. १.४.४५
२. सप्तम्यधिकरणेच (पा. २.३.३६)
३. अधिशीङ्स्थासां कर्म (पा. १.४.४६)
४. पा. २.३.२
५. पा. १.४.३३
६. दिवः कर्म च (साधकतमम, कारके) (पा. १.४.४३)
७. पा. २.३.२
८. वार्तिकम् - ८, कारके (१.४.२३)
९. वार्तिकम् - १०, कारके (१.४.२३)
१० शेषे षष्ठी (२.३.५०)

# वाक्यपदीयसम्बन्धसमुद्देशो

## सम्बन्धस्वरूपम्

शब्दज्ञानानन्तरं श्रोतुः कस्यचनार्थस्य प्रतीतिर्भवति इति प्रसिद्धम्। तत्र कोऽर्थविशेषः शब्दप्रयोगात् तच्छब्दज्ञानोत्तरं प्रतीयत इति निर्णेयम्। अत्र च वाक्यपदीये शब्दार्थमधिकृत्य सम्बन्धसमुद्देश उक्तम्–

ज्ञानं प्रयोक्तुर्बाह्योऽर्थः स्वरूपं च प्रतीयते।
शब्दैरुच्चरितैः ......................।।" (स.स.१)

अत्र च उच्चरितैरित्युपलक्षणं, प्रकारान्तरेणापि ज्ञातस्य शब्दस्य। अत एव लिप्यादिनाऽपि ज्ञातात् शब्दात् तुल्योऽर्थबोधः। अत्र उच्चरितैरिति शब्दविशेषणेन ज्ञायते यद् ज्ञातः शब्दोऽर्थबोधकः, न तु शब्दज्ञानम्। ज्ञायमानः ज्ञातोऽथवाऽव्यवहितपूर्वकाले शब्दः, शब्दविषयकं ज्ञानं वाऽर्थबोधकारणमित्यत्र शास्त्रान्तरेऽपि मतभेदः। परमत्र विस्तरभिया पक्षयोरेतयोर्युक्तायुक्तत्वविचारो विरम्यते।

तत्रापि–

सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः।।
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः।।"

(जा.स.३३-३४)

इत्यादिना महासत्तायाः परब्रह्मापरपर्याया एव सर्वशब्दार्थरूपत्वमुक्तम्। परन्तु अत्र 'ज्ञानं प्रयोक्तुः' इत्यादिना व्यावहारिकी प्रतीतिर्वर्ण्यत इति न विरोधः। अत एव तस्या महासत्ताया एवौपाधिकं भेदम् अङ्गीकृत्य लौकिके व्यवहारे औपाधिकीं कल्पितां सत्ताम् 'औपचारिकी सत्ता' इति कथयन्ति वैयाकरणाः। इयं चौपाधिकी सत्ता उपाधिभेदाद् भिन्ना भिन्नेव प्रतीयते। उपाधिश्च व्यञ्जकध्वनिसमूह एवानुपूर्वीविशेषविशिष्टः। एतत्सर्वं वाक्यपदीये सम्बन्धसमुद्देशे विस्तरेण विवेचितम्– व्यपदेशे पदार्थानामन्या सत्तौपचारिकी (स.स.३९) इत्यादिना। अत एव चानयोः पक्षयोर्न विरोधः।

अधुना प्रकृतमनुसरन् उच्यते– व्यवहारकाले बाह्यार्थस्य शब्दार्थत्वे ऋते बौद्धेभ्यो नान्येषां विप्रतिपत्तिः। अधुना वक्तुरभिप्रायः शब्दस्वरूपं च शब्दार्थौ

कथं भवत इति चिन्त्यते। तत्र यस्मात् शब्दात् यन्नियमेन प्रतीयते तत् तच्छब्दस्य वाच्यमिति व्यवस्था। तथा च व्युत्पन्नस्य बाह्यार्थज्ञानेन सह वक्त्रभिप्रायस्य शब्दस्वरूपस्य च नियमेन शब्दात् प्रतीतेरनयोरपि शब्दार्थत्वं वैयाकरणैरङ्गीक्रियते। यस्य च श्रोतुः शब्दज्ञानानन्तरं बाह्यार्थबोधो न भवति तस्य वक्त्रभिप्रायबोधोऽपि न भवतीति एवं सत्यपि शब्दस्वरूपबोधस्तु भवत्येवेत्यस्यैव शब्दस्वरूपस्य अर्थेषु प्राधान्यमुक्तं वाक्यपदीये–

प्रतिपत्तिर्भवत्यर्थे ज्ञाने वा संशयः क्वचित्।
स्वरूपेषूपलब्धेषु व्यभिचारो न विद्यते।। इति। (स.स.२)

अस्यायमाशयः– शब्दार्थसम्बन्धज्ञानाभाववतः शब्दज्ञानानन्तरमपि बाह्यार्थस्य ज्ञानं न भवतीत्यत एव वक्त्रभिप्रायस्यापि बोधो न भवत्येव। परं शब्दस्वरूपावबोधस्तदानीमपि जायत एव। एवमेव शब्दार्थसम्बन्धज्ञानवतोऽपि पुंसोऽनेकार्थकशब्दज्ञाने प्रकरणादिभिश्च विवक्षितार्थनिर्णये विवक्षायां बाह्यार्थे च संशयोऽपि दुर्वार एव। तथा च शब्दश्रवणादव्यभिचारेण शब्दस्वरूपस्यैव तत्स्वरूपमेव। तथा च 'स्वरूपमभिदधदेव शब्दोऽर्थमभिधत्ते। स्वरूपाविवेकेन च लोकेऽर्थ– परामर्शोऽभिधानमुच्यते' इति हेलाराजेनोक्तम् (हेला.स.स.२०२)।

एतत् सर्वं–

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।
वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी।।

इत्यादिना ब्रह्मकाण्डे (१२३-१२४) प्रतिपादितम्।

तत्र लोके परस्परमसम्बद्धयोः एकतरेण अन्यतरस्याप्रतीतेः प्रतिनियतात् शब्दात् प्रतिनियतस्यार्थस्यावगमात् च शब्दविशेषस्य अर्थविशेषेण सह कश्चन सम्बन्धोऽस्तीति गम्यते। तदुक्तं वाक्यपदीये सम्बन्धसमुद्देशे–

सति प्रत्ययहेतुत्वं सम्बन्धे उपपद्यते।
शब्दस्यार्थे यतस्तत्र सम्बन्धोऽस्तीति गम्यते।। इति (स.स.३७)

यतः शब्दस्यार्थे प्रत्ययहेतुत्वं सम्बन्धे सति उपपद्यते अतस्तयोः सम्बन्धः अस्तीति गम्यते। शब्दस्यार्थे इत्यत्र सप्तमी विषयत्वार्था, अतः शब्दस्य अर्थविषयकप्रत्ययहेतुत्वम्... इत्यर्थः। गम्यते इत्यस्य च अनुमीयते इत्यर्थः। अनुमानप्रयोगश्च– शब्दः स्वार्थेन सह सम्बद्धः, अर्थप्रत्ययहेतुत्वात् इति। अत्र

विपक्षबाधकस्तर्कः हेलाराजेन निर्दिष्टः–'अन्यथा सर्वं सर्वेण प्रत्याय्येत' इति (हेला.स.स.१)। अयं च तर्कः न कोऽप्यपूर्वः, अपि तु वाक्यपदीये यदुक्तं परस्तात् 'सम्बन्धोऽकृतसम्बन्धैः शब्दैः कर्तुं न शक्यते' (स.स.३८) इत्यादि तस्यैव संक्षेपः। अत्र च हेलाराजेन प्रारम्भेऽस्य समुद्देशस्य 'शब्देनार्थस्याभिधाने सम्बन्धो हेतुः' (हेला.स.स.१) इति यदुक्तं तद् वक्त्रपेक्षया, उपरिनिर्दिष्टवचने च अर्थप्रत्ययहेतुत्वस्य सम्बन्धसत्त्वादनुमितिप्रसङ्गे निर्देशस्तु श्रोत्रपेक्षयेति भेदेऽपि फलतो न विशेषः, अर्थाभिधाने अर्थावबोधे च सम्बन्धहेतुकत्वस्याविशेषात्।'

सोऽयं सम्बन्धः अस्यार्थस्यायं शब्दो वाचकः, अयमर्थोऽस्य शब्दस्य वाच्य इति विश्वजनीनव्यवहारेणैव शब्दार्थयोः सिद्ध्यतीत्यप्युक्तं वाक्यपदीये–

अस्यायं वाचको वाच्य इति षष्ठ्या प्रतीयते।
योगः शब्दार्थयोस्तत्त्वमित्यतो व्यपदिश्यते।। इति (स.स.३)

कस्यचन सम्बन्धस्य तयोरभावे सम्बन्धार्थिकायाः षष्ठ्या अनुपपत्तेः अस्य वाच्यवाचकभावस्य मूलभूतः कश्चन सम्बन्धोऽस्तीति गम्यते।अधिकं हेलाराजीयादौ द्रष्टव्यम्।

एतेन यदुक्तं बौद्धैः– न शब्दार्थयोः कश्चन सम्बन्ध इति तन्निरस्तं वेदितव्यम्। विस्तरेण बौद्धमतं प्रमाणवार्तिकादौ निरूपितम्।

अस्य च शब्दार्थसम्बन्धस्य सामान्यलक्षणं हेलाराजोक्तं यथा– 'यतः कारणात् शब्दश्रवणानन्तरमर्थज्ञानं भवति स सम्बन्धः' इति। एतच्च सति प्रत्ययहेतुत्वम्... इत्यादिना यदुक्तं तस्यैव शब्दान्तरेणोपस्थापनम्। 'यच्छब्दे विज्ञातेऽर्थो विज्ञायते स सम्बन्धः' इति मीमांसकाभिमतलक्षणस्याप्ययमेवाशय इति हेलाराजीयविवृत्याम्बाकर्त्र्योर्मतम्। अत्र च सम्बन्धस्य शब्देनार्थस्याभिधाने तदर्थावबोधे च ज्ञातत्वे सत्येव हेतुत्वम्, न तु स्वरूपसत्तामात्रेणेत्यवधेयम्। एवं शब्दस्यापि। तत्रायं सम्बन्धः क इति जिज्ञासाशमनाय भर्तृहरिणोक्तम्–

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा।। (वा.प.स.स.२९)

इयमेव वाचकशब्दनिष्ठा अर्थाभिधानयोग्यता शक्तिरप्युच्यते। इयं च योग्यता अर्थप्रकाशनयोग्यताऽपि कथयितुं शक्यते। तत्र प्रकाशकः शब्दः, प्रकाश्यश्च अर्थः। तदुक्तं हरिवृत्तौ– 'इन्द्रियविषयवद् वा प्रकाश्यप्रकाशकभावेन समयोपाधिर्योग्यता शब्दार्थयोः सम्बन्धः' इति (हरिवृ. १.२३)। व्याख्यातं चैतद् वृषभदेवेन– शब्दस्य प्रकाशकत्वम्, अर्थस्य प्रकाश्यत्वम्। एतद् द्वयं संहत्यैकः सम्बन्धः, न पुनः प्रत्येकं शब्दार्थयोर्योग्यतया पृथक् सम्बन्धाभिधानम् इति।

अयमेव प्रकाश्यप्रकाशकभावो वाच्यवाचकभाव उच्यते।

अत्र चानादिशब्दस्य आदिरहितत्वार्थस्वीकारे दृष्टान्तसङ्गतिः, इन्द्रियाणाम् उत्पादविनाशशालित्वेनानादित्वाभावात् तन्निष्ठस्वार्थग्रहणयोग्यताऽपि नादित्वाभाववती। वाचके शब्दे पुनः स्फोटरूपत्वेन वैयाकरणनिकाये प्रसिद्धे आदिरहितत्वेन तन्निष्ठार्थप्रतिपादनयोग्यताया अपि आदिरहितत्वेन अनादित्वं सुघटमिति हेतोः दृष्टान्तादार्ष्टान्तिकयोर्वैषम्यस्य सुस्पष्टत्वात्। अत एवोक्तं पुण्यराजेनापि– **यथा सहजयैव योग्यतया चक्षुरिन्द्रियमर्थविषये दर्शनमुपकल्पयद् द्रष्टृसम्बन्धिनोऽभिधानमपेक्षते अन्यथा सर्वदा दर्शनोपजननाप्रसङ्गात् तथैव शब्दः स्वाभाविकेनैव सम्बन्धेनार्थप्रत्यायकोऽपि अभिसम्बन्ध्यभिसन्धानमपेक्षत एव** (वा.प.२.४००)। अत्र स्पष्टमेव अनात्विस्य स्वाभाविकत्वमित्येवार्थोऽभिहितः।

अत एव च 'अनादिरित्यस्य उच्चरितमात्रात् शब्दाद् अर्थप्रत्ययोत्पत्तेरकृत्रिमा शक्तिरवसीयते' इत्यभिधानोऽपि पूर्वं हेलाराजः पश्चात् 'तथा च योग्यता स्वाभाविकी सिद्धा' इत्यभिदधद् अनादित्वं स्वाभाविकत्वमित्यर्थान्तरं चकार। एतत्सर्वं विमृश्यैव अम्बाकर्त्र्यां प्रोक्तम्–

'अकृत्रिमा स्वाभाविकी क्वचित् शक्तिरवसीयते' इति (अम्बा.स.स.२९)। एतस्मिन्नर्थे स्वीकृते दृष्टान्तदार्ष्टान्तिकयोः पूर्वोक्तेऽर्थे यद् वैषम्यं तत् परिहृतं भवति। अत एव च उपसंहारे 'पुरुषप्रयत्नानपेक्षा शक्तिः साधारणीति साम्यम्' इति हेलाराजेनाप्युक्तम् (स.स.२९)। वस्तुतोऽत्रापि हेलाराजीयविवरणे नाञ्जसा सङ्गतिः कर्तुं शक्यते। यतो हि इन्द्रियाणि दर्शनादियोग्यताविशिष्टान्येव जगत्कर्त्रा उदपादिषतेति हेतोः जगत्कर्तृपुरुषविशेषस्य इन्द्रियनिष्ठयोग्यता प्रयत्नम् अपेक्षत एव दर्शनान्तरीयरीत्या। व्याकरणदर्शने तु शब्दब्रह्मण एव विवर्त्तभूते जगति तदन्तर्गतानामिन्द्रियाणामपि जगत्कर्तृपुरुषविशेषप्रयत्नापेक्षा तन्निष्ठतद्योग्यतोत्पादे कथं न भवेदित्यपि चिन्तनीयमेवास्ते मनीषिणाम्। अतश्च अनादिरित्यस्य स्वाभाविकी इत्ययमेवार्थो ज्यायान्, नान्यः कश्चनेति मन्यामहे। एतदभिप्रायेणैव हरिवृत्तावुक्तम्– 'शब्दार्थयोः सोऽयमिति यः सम्बन्धः सोऽर्थादेशनस्य कर्त्तुमशक्यत्वाद् औत्पत्तिकः स्वभावसिद्धः, न केनचित् कर्त्रा कञ्चित् प्रतिपत्तारं प्रत्यज्ञातपूर्वः तत्प्रथमं कृतः' इति। हरिवृ. १.२३) एतत्सर्वमेव 'इन्द्रियाणां स्वविषयेषु' (स.स.१) इति व्याख्यायामनूदितं हेलाराजादिभिः। अर्थादेशनस्याकृतकत्वं 'समर्थः पदविधिः' (पा.सू.२.१.१) इत्यत्र भाष्ये प्रोक्तम्– 'अर्थादेशनात्। तच्च लघ्वर्थम्। को हि समर्थो धातुप्रातिपदिकप्रत्ययनिपातानामर्थानादेष्टुम्' इति।

अत्रेदमपि विचारणीयम्– येयं शब्दार्थसम्बन्धारूपा योग्यता प्रोक्ता सा कीदृशे शब्दे व्यवस्थितेति। यतो हि "वर्ण एव शब्द इति भगवानुपवर्षः" इति शाबरभाष्योक्तदिशा वर्णस्यैव शब्दत्वमुक्तम्। नैयायिकादिभिः पुनः पदस्यैव

तत्त्वमभिधीयते। वैयाकरणास्तु–

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन।।

इति वदद्भिः प्रथमे काण्डे (वा.प.१.७३)

शब्दस्य न विभागोऽस्ति कुतोऽर्थस्य भविष्यति।
विभागैः प्रक्रियाभेदमविद्वान् प्रतिपद्यते।।

इत्यादिना च वाक्यकाण्डे (वा.प.२,१३) वाक्यस्यैवाखण्डस्य वर्णपदाद्यवयवरहितस्य स्फोटाभिधस्य शब्दत्वमङ्गीकृतम्। शब्दविषये त्रयोऽप्येते पक्षा वाक्यकाण्डेऽपि स्पष्टमुक्ताः 'नार्थवत्ता पदे वर्णे वाक्ये चैवं विशिष्यते' (वा.प. २,३९८)। तत्र शब्दार्थसम्बन्धस्वरूपा शक्त्यभिधाद्यपरपर्याया योग्यता अर्थविषयिणी वैयाकरणाभिमताखण्डवाक्यस्फोटनिष्ठैव, नान्याभिमते शब्दे वर्णे वा पदे वैखरीवाक्ये वेति वाक्यपदीयकारस्याभिमतम्। लोकदृष्ट्या तु वर्णादावप्यर्थवत्ताप्रतीतेः व्यावहारिकी अर्थप्रतिपादनयोग्यता तत्रापि स्वीक्रियत एव। तथा चोक्तम्–

नार्थवत्ता पदे वर्णे वाक्ये चैवं विशिष्यते।
अभ्यासात् प्रक्रमोऽन्यस्तु विरुद्ध इव दृश्यते।

(वा.प.२.३९८)

अत्र च हेलाराजीया वृत्तिर्द्रष्टव्या– "ननु पूर्वं वाक्यस्यैवार्थवत्त्वं महता प्रबन्धेन व्यवस्थापितम्, पदान्यनर्थकान्येवाभिहितानि। वर्णानामर्थवत्त्वे कैव कथा? इदानीं वर्णे पदे वाक्ये च समं कृत्वैवार्थवत्तोद्घोष्यत इति किमेतदुच्यत इत्याशङ्क्याह अभ्यासादिति। इह भिन्नान्यागमदर्शनानि। लौकिकैश्चार्वाग्दर्शिभिस्तत्र तत्राभिनिविष्टैः परस्परं शास्त्राणां पृथक् पृथक् प्रक्रमाः परिपाटयो दृश्यन्ते विरुद्धा इव। परमार्थतस्तत्त्वं सत्यरूपमेकमविरुद्धमेव स्थितमिति। अतश्च सर्वपार्षदत्वादेतदनुषङ्गात् कथञ्चिदाश्रितम्, नैतावताऽभ्युपेतस्याखण्डपक्षस्य त्याग आयात इति बोद्धव्यम्।" इति। (वा.प.२.३९८) अम्बाकर्त्र्यामिप्ययमेवाशय उपसंहृतः। तथा च वैयाकरणमते अखण्डं वाक्यमेव शब्दः, तत्रैव चाखण्डवाक्यार्थबोधनसमर्था शब्दार्थसम्बन्धरूपा योग्यताऽपि वस्तुतः, पदादौ तु व्यावहारिक्येव, पदार्थोऽपि सखण्डः वाक्यार्थे तेन तेन सम्बन्धेन यथायथं परस्परमन्वीयमानो व्यवहारदृष्ट्यैव, न परमार्थतः। परमिदं व्याकरणशास्त्रं निर्विभागमपि शब्दतत्त्वं शक्तिवशात् सविभागमिव, अक्रममपि सक्रममिवाभासमानं समाश्रित्यैव प्रवृत्तमिति भाष्यकारादिभिः स्पष्टीकृतमपि भर्तृहरिणा स्पष्टतरीकृतम्–

एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्।
अपृथक्त्वेऽपि शक्तिभ्यः पृथत्वेनेव वर्त्तते।। इति (ब्र.का.२)

सत्यमाकृतिसंहारे यदन्ते व्यवतिष्ठते।
तन्नित्यं शब्दवाच्यं तच्छब्दतत्त्वं न भिद्यते।। (द्र.स.११)

यत्र द्रष्टा च दृश्यं च दर्शनं चाविकल्पितम्।
तस्यैवार्थस्य सत्यत्वमाहुस्त्रय्यन्तवेदिनः।। (स.स.७२)

तस्माच्छक्तिविभागेन नित्यः सदासदात्मकः।
एकोऽर्थः शब्दवाच्यत्वे बहुरूपः प्रकाशते।। (स.स.८७)

अतश्च वर्णे पदे वाक्ये च वैखरीस्वरूपे यद्यपि स्वरूपतो योग्यतास्वरूपः शब्दार्थसम्बन्धो नाश्रितस्तथापि तत्र योग्यतां परिकल्प्यैव तेषामर्थवत्ता व्याकरणागमे प्रतिपाद्यते। यथोक्तं वाक्यपदीये सम्बन्धसमुद्देशे–

व्यवहारश्च लोकस्य पदार्थैः परिकल्पितैः।
शास्त्रे पदार्थः कार्यार्थं लौकिकः प्रविभज्यते।। इति (स.स.८८)

सोऽयं लौकिको व्यवहारः पदनिष्ठकल्पितयोग्यतामादाय न केवलमविदुषाम् अपि तु विदुषामपि तुल्य एवेत्युक्तं तत्रैव–

रूपणव्यपदेशाभ्यां लौकिके वर्त्मनि स्थितौ।
ज्ञानं प्रत्यभिलापं च सदृशौ बालपण्डितौ।। (स.स.५५)

अत्र रूपणमित्यस्यालोचनम् इत्यर्थः, व्यपदेशश्च शब्देनाभिधानम्। वक्ता हि पूर्वं विषयं प्रतिपिपादयिषति, पश्चाच्च तं शब्देन प्रकाशयति। अनयोरालोचनव्यपदेशयोरविदुषां विदुषां च समानैव प्रवृत्तिरित्यभिप्रायः। अत एव शारीरकभाष्येऽप्युक्तम् अध्यासविवेचनप्रसङ्गे– 'पश्वादिभिश्चाविशेषात्' इत्यादिना सन्दर्भेण। तथा च व्याकरणदर्शने विचारितं पारमार्थिकं तदखण्डमद्वैतं तत्त्वं श्रुतिसम्मतमेव। श्रुतिश्च–

एकं सद् विप्रा बहुधा भवन्ति।
इन्द्रो मायाभिः पुरुरूप ईयते।
रूपं रूपं मघवा बोभवीति मायाः कृण्वानः।
एकमेवाद्वितीयम्, द्वितीयाद्वै भयं भवति।

इत्याद्या प्रसिद्धैव अखण्डाद्वैततत्त्वप्रतिपादिका। स्मृतिश्च–

अहमात्मा गुडाकेश सर्वक्षेत्रेषु भारत। (गीता.)
आकाशमेकं हि यथा घटादिषु पृथग् भवेत्।
तथात्मैकोप्यनेकश्च जलाधारेष्विवांशुमान्।। (या.स्मृति)

इत्याद्या अत्रार्थेऽनुकूला भवति। एतेन 'माहाभाग्यादेक एवात्मा बहुधा स्तूयते' इति यास्कवचनमपि संगृहितं भवति।

ततश्च यः स्फोटात्मकः शब्दोऽस्या योग्यतायाः अर्थसम्बन्धत्वेनाभिमताया आश्रयः स किंरूप इत्यपि प्रसङ्गेऽपि विवेचनीयमेव। तत्रेदं चिन्तनीयम्–व्याकरणागमे हि पश्यन्ती-मध्यमा-वैखरीभेदेन त्रयी वाग् इत्येव सिद्धान्तः। अत्र च पश्यन्त्येव संहृतक्रमा निर्विभागा परा वाक्, न ततो विलक्षणा चतुर्थी काचन वाचो विधेति संविच्च पश्यन्तीरूपा परा वाक् शब्दब्रह्ममयी' इत्यादि हेलाराजानुसारेण (द्र.श. हेला. ११) स्वोपज्ञवृत्त्यनुसारेण चेति विशदं प्रपञ्चितमस्माभिः 'त्रयी वाक्' इत्यत्र राष्ट्रभाषानिबद्धे श्री के.ए. सुब्रह्मण्य अय्यरमहाशयस्मृतिव्याख्याने लक्ष्मणपुरस्थ-विश्वविद्यालयीयसंस्कृतविभागेन स्वातन्त्र्येण प्रकाशिते, तदनन्तरं च लक्ष्मणपुरी-स्थाखिलभारतीयसंस्कृतपरिषदः शोधपत्रिकायाः प्रो. सत्यव्रतसिंहस्मृत्यङ्के प्रकाशिते निबन्धे प्रपञ्चितम्।

अत्रेदमपि विचारणीयम्– किमयं स्फोटो योग्यताख्यशब्दार्थसम्बन्धाधारभूतः पश्यन्तीरूपो मध्यमारूपो वेति। तत्र पश्यन्त्याः यथावर्णनम्–

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् (वा.प.१,१३४) इत्यादि-कारिकायाः स्वोपज्ञवृत्तौ–

अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी।।
सेयमाकीर्यमाणाऽपि नित्यमागन्तुकैर्मलैः।
अन्त्या कलेव सोमस्य नात्यन्तमभिभूयते।।
तस्यां दृष्टस्वरूपायामधिकारो निवर्त्तते।
पुरुषे षोडशकले तामाहुरमृतां कलाम्।।

इति इतिहासोद्धृतवचनैः विशेषेण भर्तृहरिणा स्वयमेव कृतम्, यथा च वृषभदेवेन विवृतम्– 'अविभागा' इत्यस्य 'भेदस्य तत्राभावात्। तत एव संहृतक्रमा, भेदनिबन्धनत्वात् क्रमस्य' इत्येवम्, हेलाराजादिभिश्च तत्र तत्रोक्तम्, तेनेदमेव प्रतीयते यत् कथञ्चित् स्फोटपदस्य पश्यन्त्यर्थकत्वे सुघटेऽपि नास्याः योग्यता-स्वरूपस्यार्थविषयकसम्बन्धस्याधिकरणत्वं युक्तम्, अपितु मध्यमारूपस्यैव स्फोटस्य तदाश्रयत्वमुचितम्। स्फुटति अर्थोऽस्मादिति योगार्थोऽपि यथा क्रमरूपानुवर्त्तिन्यां मध्यमायामञ्जसा घटते न तथा अविभागायां संहृतक्रमायां पश्यन्त्याम्। अतश्च अर्थबोधकः योग्यतास्वरूपोऽयं सम्बन्धो मध्यमायां वाचि व्यवस्थित इति मन्यामहे। अस्मिन्नर्थे–

तस्य शब्दार्थसम्बन्धरूपमेकस्य दृश्यते।
तद् दृश्यं दर्शनं द्रष्टा दर्शने च प्रयोजनम्।। (द्र.स.१४)

इति वाक्यपदीयवचनमप्यनुगुणम्। सकलाध्यस्ताधिष्ठानतया तु पश्यन्त्याः व्यवहारदशायां सम्बन्धाधिष्ठानत्वेऽङ्गीकृते नास्माकं विप्रतिपत्तिः यथा कैश्चिदद्वैतिभिः शुद्धस्यैव ब्रह्मणः कथञ्चिद् जगदुपादानत्वमुक्तम्।

अधुनाऽस्या योग्यताया नित्यत्वं विचार्यते। तत्र 'सिद्धे शब्दार्थसम्बन्धे' इति वार्त्तिकविवरणे सिद्धशब्दस्य नित्यार्थकत्वं प्रसाधयद्भिर्महाभाष्यकृद्भिः शब्दः अर्थः सम्बन्धः इति, सिद्धः शब्दोऽर्थसम्बन्धश्चेत्युभयथाऽपि विग्रहं प्रकुर्वद्भिः शब्दार्थसम्बन्धस्य नित्यत्वमुपसंहृतम्– नित्यो ह्यर्थवतामर्थैरभिसम्बन्धः' इत्यभिधानेन भर्तृहरिणाऽपि वाक्यपदीय उक्तम्–

नित्याः शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभिः।
सूत्राणां सानुतन्त्राणां भाष्याणां च प्रणेतृभिः।। (वा.स.१,२३)इति

एवंरूपेण सर्वत्रैव योग्यतासम्बन्धस्य नित्यत्वमुक्तम्। तत्र किमिदं प्रागभावाऽप्रतियोगित्वे सति ध्वंसाऽप्रतियोगित्वं मुख्यं नित्यत्वं स्वीकर्त्तव्यमुत 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' (वि.पु.) इति बिष्णुपुराणोक्तं चिरकालावस्थायित्वरूपं गौणं नित्यत्वम्?

सांख्यतत्त्वकौमुद्यां वाचस्पतिमिश्रैरपि 'अपाम सोमममृता अभूम' इत्यत्रामृतत्वस्य बिष्णुपुराणोक्त एवार्थः स्वीकृतः। तत्रेदं विमृश्यताम्– सत्ता महासामान्यं परब्रह्मेत्यनर्थान्तरम्। तथा चोक्तम् वाक्यपदीये–

सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः।।
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः।।(जा.स.३३.३४)

हेलाराजेन च 'आश्रयः स्वात्ममात्रा वा' (जा.स.४०) इत्यादि जातिसमुद्देशस्थकारिकाव्याख्याने 'सर्वं सत्तात्मकपरब्रह्ममयम्' इत्यभिदधता स्पष्टमेव सत्तापरब्रह्मणोरभेद उक्तः। ततश्च यदि मध्यमारूपा वागेव स्फोटपदाभिधेया योग्यतासम्बन्धस्याश्रयस्तर्हि प्रलये अद्वैतस्य परब्रह्मण एव शिष्यमाणत्वात् योग्यताया अपि प्रविलीनत्वमाश्रयेण मध्यमया वाचा सहेति स्वीकरणीयम्। तथा च योग्यताया नित्यत्वं यावदाभूतसंप्लवस्थायित्वमेव, न तु प्रागभावाऽप्रतियोगित्वे सति ध्वंसाऽप्रतियोगित्वरूपम् परब्रह्मण इव। प्रलयश्च महाप्रलयेन सह–

अनुच्छेद्याश्रयामेके सर्वां जातिं प्रचक्षते।
न यौगपद्यं प्रलये सर्वस्येति व्यवस्थिताः।।
प्रकृतौ प्रविलीनेषु भेदेष्वेकत्वदर्शिनाम्।
द्रव्यसत्त्वं प्रपद्यन्ते स्वाश्रया एव जातयः।। (जा.स.४२-४३)

इत्यादिना जातिसमुद्देशे वाक्यपदीये तट्टीकयोश्च विकल्पितो विस्तरेण पूर्वम्।

परस्ताच्च 'ज्ञानं त्वस्मद्विशिष्टानां तासु' (जा.स.४६) इति वाक्यपदीयवचन-व्याख्यातं प्रलयानङ्गीकर्त्तृमतं निर्दिश्य 'तदेतसत्, सर्वशास्त्रेषु प्रलयस्मृतेः' इति वदता हेलाराजेन स्वीकृत एव प्रलयः। तत्र प्रलये यदि सर्वस्य परब्रह्मातिरिक्तस्य ध्वंस इष्यते तदा तु योग्यताया अपि ध्वंसे प्रलयपर्यन्तावस्थायित्वरूपं गौणमेव नित्यत्वं तस्याः। यदि तु प्रलये सत्तास्वरूपे परब्रह्मणि विलयमात्रम्– अव्यक्तरूपेण वर्तमानत्वमेव, न तु ध्वंस इतीष्यते तर्हि योग्यताया आश्रयेण मध्यमया वाचा सह सूक्ष्मरूपेणावस्थानात् प्रागभावाऽप्रतियोगित्वे सति ध्वंसाऽप्रतियोगित्वरूपं नित्यत्वमपि मन्तुं शक्यते। एतत्सर्वम्–

अनित्येष्वपि नित्यत्वमभिधेयात्मना स्थितम्।
अनित्यत्वं स्वशक्तिर्वा सा च नित्यान्न भिद्यते।। (स.स.३४)

इति वाक्यपदीये तट्टीकयोश्च विशदीकृतम्।

परमस्मिन् कल्पे अखण्डाद्वैतवादोपपादने कश्चन क्लेशोऽवश्यमेव। आध्यासिकत्वाच्च व्याकरणदर्शने भेदस्य योग्यताया अपि आध्यासिकत्वमेव युक्तम्। तथा चास्याः प्रवाहनित्यत्वमेवोचितमिति विद्मः।

तत्र च योग्यताश्रयस्य स्फोटस्यैकत्वेऽपि किमियं योग्यता प्रत्यर्थं भिन्ना उत सर्वार्थाभिधाने एकैवेति विमर्शे एकैवेति युक्तम्। अत एव 'सर्वे सर्वार्थवाचकाः' इति स्थितिः। यद्यपि लौकिकानां कृते नेयं स्थितिः तथापि योगिनां तु भवत्येव। कथमन्यथा योगिनामपि सर्वेषां सर्वार्थवाचकत्वं सुघटं स्यात्। कथं तर्हि लौकिकानां जनानां शब्दविशेषाद् अर्थविशेषस्यैव प्रतीतिरिति प्रश्ने उपाधिकृतः सङ्कोच एवाङ्गीकर्त्तव्यः। स चोपाधिः स्फोटव्यञ्जक आनुपूर्वीविशेषघटितो वर्णसमूह एव वा भवेत् समयो वा लोकव्यवहाररूप इत्यत्र न विशेषः। भर्तृहरेस्तु द्वितीय एव पक्ष इष्टः, 'समया योग्यतासंविद्' (स.स.३१) इति सम्बन्धसमुद्देशेऽभिधानात्, 'नित्याः शब्दार्थसम्बन्धाः' (वा.स.१,२३) इत्यस्याः कारिकायाः हरिवृत्तौ 'समयोपाधिर्योग्यता शब्दार्थयोः सम्बन्धः' इत्युक्तेश्च प्रतीयते। व्याख्यातं चैतद् वृषभदेवेन– 'समयो व्यवहारदर्शनम्। स उपाधिरस्या योग्यतायाः। भूयस्त्वेन

व्यवहारं दृष्टवतः स योग्यताप्रतिपत्तिनिबन्धनम्। तत्र यथैव चक्षुरादयः सत्यामपि रूपप्रकाशनयोग्यतायां नानपेक्षितालोकसहाया रूपं प्रकाशयन्ति तथा शब्दाः सत्यामप्यर्थप्रकाशनयोग्यतायां समयसहाया इति।' (वृषभ.१.२३) तथा च सङ्केतापरपर्यायः समय एवोपाधिर्योग्यतायाः, तेन च योग्यतायाः सङ्कोचे लौकिकव्यवहारे प्रतिनियतस्य शब्दस्य प्रतिनियतार्थप्रतिपादकत्वं सङ्गमनीयम्। अत एवोक्तम् अम्बाकर्त्र्याम्– 'व्याकरणदर्शने तु शब्दार्थयोः प्रतिपाद्यप्रतिपादक-भावनियामिका योग्यतैव सम्बन्धः' इति। (वा.प.स.स.३१) एवञ्च सम्बन्धशब्दस्य सम्बन्धवाचकत्वे योग्यताशब्दस्य च योग्यतास्वरूपार्थप्रतिपादकत्वेऽपि योग्यतैव सम्बन्ध इति स्पष्टमेव व्याकरणदर्शने।

अत्र प्रसङ्गे सम्बन्धसमुद्देशोपसंहारे हेलाराजोक्तं वचनं विभावनीयम्– "इत्थं च सांवृतोऽयं लोकयात्रासु पदार्थप्रयोगो निरूढः इति तथैवास्मिन् शास्त्रेऽनुगम्यते। विचारितमपि तर्कविकल्पैर्भावतत्त्वं न यथाविचारं लोके व्यवहारमवतरति। न हि दर्शनान्तरव्यवस्थितविरूद्धभावरूपानुगमो व्यवहारे। नचाविचारेण यथातत्त्वं पार्यते निश्चयः कर्तुम्। रूपणव्यपदेशाभ्यां...सदृशौ बालपण्डितौ परस्पराभिप्रायमेलने प्रवर्त्तेते इति गजनिमीलितेनावधार्य पदार्थयाथातथ्यं व्यवहरन्तो लौकिका दृश्यन्ते। इत्थं च लौकिकानामेव शब्दानामनुशासनं शास्त्रम्। तदत्र लोकप्रसिद्धैव पदार्थप्रक्रिया समाश्रयणीयेत्य-खण्डाद् वाक्यार्थात् क्रियावचनो धातुः, सत्त्वप्रधानानि नामानि, प्रत्यायकः प्रत्यय इत्यादिः शास्त्रीयकार्यप्रसिद्ध्यर्थं लौकिक एव क्रियाद्रव्यगुणादिलक्षणोऽपोद्धारपदार्थः प्रविभज्यत इति लोकयात्रायामेकयोगक्षेमाः सर्वे शब्दा भावाऽभावाभिमतार्थविषया इत्यर्थस्य प्रवाहनित्यत्वात् शब्दोव्यवहारमात्रत्वाच्च प्रतीतेर्नित्यः शब्दार्थसम्बन्ध इति सिद्धम्" इति (हेला.स.स.८८)। वस्तुत एतत्सर्वं महर्षिणा पाणिनिनैव प्रायेण पदव्युत्पादनप्रवृत्तया अष्टाध्याय्योपदर्शितम्। महाभाष्यकृताऽपि 'अथ शब्दानु-शासनम्' इत्यस्य विवरणे 'केषां शब्दानाम्?' इति प्रश्नस्य 'लौकिकानां वैदिकानां च' इत्युत्तरेण लौकिकशब्दानां च पदस्वरूपेणोदाहरणेनायमेवार्थः प्रकटीकृतः। वाक्यपदीये तु असकृदेवायमर्थः स्फुटीकृत इति हेलाराजेनात्र यदुक्तं तत्पूर्वाचार्या-भिमतसारमेव, न किञ्चिदपूर्वमिति सुव्यक्तमेव।

सोऽयं योग्यतारूपः शब्दार्थसम्बन्धोऽपि आध्यासिक एव, व्याकरणदर्शने हि अखण्डाद्वैते शब्दार्थयोर्भेदानभ्युपगमात् भेदाश्रितोऽयं सम्बन्धः कथमपि वास्तवो न भवितुमर्हति। यदि लोकप्रसिद्धो वैखरीरूपः शब्दो योग्यताश्रयः स्वीक्रियते लोकव्यवहारानुरोधेन तर्हि वैखरीशब्दस्य तद्भिन्नतद्बोध्यार्थस्य चाध्यस्तत्वात् तयोः सम्बन्धस्य योग्यताभिधेयस्याध्यासिकत्वं सुतरामेव सिध्यति। यदि पुनः

मध्यमारूपस्य स्फोटाख्यः शब्दो वैखरीशब्दाभिव्यङ्ग्यो योग्यतासम्बन्धाश्रयो मन्यते तर्ह्यपि अखण्डाद्वैतस्यास्यामवस्थायां भंङ्गात् स्फोटभिन्नस्य शब्दार्थस्य वस्तुतोऽस्वीकारात् अर्थस्याध्यासिकत्वे सिद्धे तेन स्फोटसम्बन्धस्य तत् च सिद्धमाध्यासिकत्वम्। अत एव- एकोऽर्थः शब्दवांच्यत्वे बहुरूपः प्रकाशते (स.स.८७) इति स्पष्टमुक्तं वाक्यपदीये। तथा च एकस्य तत्त्वस्य शब्देन विविधरूपेण प्रकाशनमध्यासादृते किं स्यात्? तत्तस्याभिन्नस्य भेदरूपेण प्रतीतिराध्यासिक्येव। अत्रार्थे इदमपि वचनं वाक्यपदीयकृतः स्मरणीयमेवास्ते-

न तत्त्वाऽतत्त्वयोर्भेद इत वृद्धेभ्य आगमः।
अतत्त्वमिति मन्यन्ते तत्त्वमेवाविचारितम्।।
विकल्परूपं भजते तत्त्वमेवाविकल्पितम्।। (द्र.स.७-८) इत्यादि।

अत्र हेलाराजवचनमप्यवधेयम्-

"अयमत्रार्थः-नेहाद्वैतनये सत्यासत्ये द्वे रूपे स्तः, अद्वैतहानिप्रसङ्गात्। किन्तु पारमार्थिकमेकमेवाद्वयं तत्त्वम्। तच्चानादिसिद्धाऽविद्याविलसिताहंप्रमातृविषयतया यथातत्त्वमनवभासमानमित्यनेकविकल्पपरिघटिताकाररूपतया व्यवहारमवतरति। तथा च तदेवाकारनानात्वोन्नीयमानस्वरूपभेदं चकास्ति, नान्यत्" इत्यादि (हेला.द्र.स.७)। एवञ्च यद् वाक्यपदीये कालशक्तिशब्देनाभिहितं तदनाद्यविद्याया एव नामान्तरम्, न ततो भिन्नम् इत्यपि सुस्पष्टम्। एतच्च-

न चात्र कालभेदोऽस्ति कालभेदश्च गृह्यते (वा.प.द्र.स.८)

इत्यनेन वाक्यपदीयवचनेनापि ध्वन्यते। इदं चाद्वैततत्त्वं श्रुत्या समधिगम्यमित्याह भर्त्तृहरिः-

प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः।
एकोऽप्यनेकवर्त्मेव समाम्नातः पृथक् पृथक्।। (वा.१,५) इति।

अपरश्च सम्बन्धः कार्यकारणभावः शब्दार्थयोः। अयं च सम्बन्धः हरिवृत्तौ (१,२३), 'शब्दः कारणमर्थस्य सहितेनोपजन्यते' (स.स.३२) इत्यनेन च स्वयमेव भर्त्तृहरिणा स्पष्टमुक्तः। हेलाराजादयोऽपि मन्यन्ते- 'अत एव द्विविधः सम्बन्धपदार्थोऽवतिष्ठते- योग्यता कार्यकारणभावश्च। 'अयं च तेषां मतानुसारेण ये योगाचारादयः बाह्यमर्थमस्वीकुर्वन्तः शब्दाद् अर्थाकाराया बुद्धेरुत्पत्तिं मन्यन्ते- न तु शब्दाद् बाह्यस्यार्थस्याभिव्यक्तिम्, शब्दस्य बाह्येनार्थेन सम्बन्धाभावात्। तथा च शब्दात् कारणात् श्रोतरि अर्थाकाराया बुद्धेः उत्पत्तेरनयोः कार्यकारणभावः सम्बन्धः। अर्थाकाराया बुद्धेरपि कथमर्थ इति व्यवहारविषयतेत्यत्र भर्त्तृहरिणैव प्रोक्तं वृत्तौ- 'अक्षरनिमित्ताक्षरवद्' (हरिवृ.१,२३) इति। स्पष्टीकृतं चैतद्

वृषभदेवेन– 'यथाक्षरनिमित्तेषु लिप्यक्षरेषु अनक्षरेष्वप्यक्षरव्यवहारः तदेकत्वव्यवसायश्च लिपिदर्शनेऽक्षरावबोधात् तथा तद्रूपेऽपि प्रत्यत्येऽर्थव्यवहार इति' (वृषभ.१,२३)। अत्र च हेलाराजोद्धृतं प्रमाणवार्तिकस्थं वचनम्–

वक्तृव्यापारविषयो योऽर्थो बुद्धौ प्रकाशते।
प्रामाण्यं तत्र शब्दस्य नार्थतत्त्वनिबन्धनम्।। इति (प्रमाण.१,४)

व्याख्यातं चैतन्मनोरथनन्दिना– "ननु शब्दस्यार्थप्रतिबन्धाभावान्न प्रामाण्यं स्यात्, इष्यते च अनुमानत्वादित्याह– वक्तुर्व्यापारो विवक्षो, तस्य विषयो योऽर्थः समारोपितबहीरूपो ज्ञानाकारः प्रकाशते बुद्धौ विवक्षात्मिकायाम्। तत्र शब्दस्य प्रामाण्यम् लिङ्गत्वम्। शब्दुच्चरिताद् विवक्षितार्थप्रतिभासी विकल्पोऽनुमीयते इत्यर्थः, तत्कार्यत्वाच्छब्दस्य। न पुनरर्थतत्त्वनिबन्धनम्, तत्प्रतिबन्धाभावात्" इति (प्रमाण.वृत्ति-१,४)। अस्माच्च धर्मकीर्तिवचनादेतावदेव प्रकृतोपयोगि यद् यस्यार्थस्य विवक्षया वक्त्रा शब्द उच्चार्यते सोऽर्थो न बाह्यः अपि तु श्रोतरि जायमाना बाह्यार्थाकारतया प्रतीयमाना बुद्धिरेव। भूतभविष्यत्कानिकस्यार्थस्य वर्त्तमानवत्प्रतिपादने तु आन्तरोऽर्थो वैयाकरणानामप्यभिमत इति स्पष्टं 'हेतुमति च' (पा.सू. ३,१,२६) इत्यत्र महाभाष्यादौ। वाक्यपदीयेऽपि स्पष्टमिदम्–

शब्दोपहितरूपांस्तु बुद्धेर्विषयतां गतान्।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते।।

(सा.स.५) इत्यादिना कृतम्।

अत्र च हेलाराजेन यदुक्तम्– 'प्रयोक्त्रभिप्रायेण तु सह कार्यकारणभावः' (हेला.स.स.१) इति तन्नातीव मनोहरम्, शब्दार्थसम्बन्धप्रस्तावे विवक्षाशब्दयोः वक्तृबुद्धिस्थार्थशब्दयोश्च कार्यकारणभावसम्बन्धप्रतिपादने संगत्यभावात्। अतश्च हरिवृत्तौ यदुक्तम्– 'अर्थसरूपप्रत्यवभासानां वा प्रत्ययानां बाह्येष्वर्थेषु प्रत्यस्तानामक्षरनिमित्ताक्षरकल्पनावदर्थवदेवैकविषयत्वेऽभ्युपगम्यमाने नित्यमविच्छिन्नपारम्पर्यः कार्यकारणभावः सम्बन्धः' इति (हरिवृ.१,२३)। यथा चेदं व्याख्यातं वृषभदेवेन तदनुसृत्य वक्त्रोचार्यमाणेन शब्देन श्रोतरि जायमानायाः अर्थाकारतया भासनादर्थपदव्यपदेश्याया बुद्धेः, न तु बाह्यस्यार्थस्य, परस्परं यः सम्बन्धः स कार्यकारणभाव इति विवरणमेव ज्यायः। हेलाराजस्योक्तवचनं तु वक्तृबुद्ध्युपारूढस्यार्थस्य श्रोतृप्रतिपत्त्यर्थं यदा शब्द उच्चार्यते वक्त्रेति यदुक्तं परस्ताद् वाक्यपदीये–

तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते।। (स.स.३२)

इति तन्मतेन यथकथञ्चिन्नेयम्। तथा च शब्दस्य वक्तृबुद्धिनिवेशितार्थेन

सह कार्यकारणभावः–शब्दः कार्यम्, वक्तृबुद्धिनिविष्टश्चार्थः कारणम् इति श्रोतृबुद्ध्युपारूढस्य चार्थस्य शब्दः कारणम् इति विवेकः। वस्तुतस्तु अयं कार्यकारणभावः प्रसङ्गादुपात्तो वाक्यपदीये। योग्यताविकल्पतयाऽङ्गीकृतस्य कार्यकारणभावस्य प्रसङ्गगतोपपत्तिः शब्दस्य कारणत्वमर्थस्य च कार्यत्वमादायैव घटते, 'ज्ञानं प्रयोक्तुर्बाह्योऽर्थः' (स.स.१) इत्युपक्रमाद् इति सुधीभिर्विवेचनीयम्।

इदं चावश्यमवधेयम्– योग्यता वा सम्बन्धो भवेत् कार्यकारणभावो वा, मूलं त्वनयोः शब्दार्थप्रत्ययानां परस्परं तादात्म्यमेवाध्यस्तम्। यथोक्तं पस्पशायां महाभाष्ये प्रदीपादिसहिते, यथा चाभिहितं पातञ्जले योगसूत्रे– "शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करः" (यो.सू.३,१७) इत्यत्र तद्भाष्यटीकादिषु च।

अयं च सम्बन्धः साधुशब्दस्येवापभ्रंशस्याप्यर्थेन सह वर्त्तत एव। परन्तु साधुशब्देनार्थप्रतिपादने यथा धर्मः तथा अपभ्रंशेन अधर्म इति विशेषो 'लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः' इत्यादिना वार्त्तिके महाभाष्यादौ च विस्तरेण निरूपितः। अपभ्रंशविषये वाक्यपदीयब्रह्मकाण्डस्य १३९-१४६ कारिकाः सम्बन्धसमुद्देशस्य ३० संख्यकया कारिकया सहाध्येतव्याः।

अत्र वयं त्ववगच्छामः– योग्यतासम्बन्धो वा भवेत् कार्यकारणभावो वा, सर्वथैव शब्दः कारणमर्यादां नातिशेते। तथा हि द्वयी कारणता– स्वरूपयोग्यता फलोपधायकता च। तत्रापि च ज्ञापकता कारणता चेति द्वौ भेदावुभयोः स्वरूपयोग्यफलोपधायकतयोः। तत्र बाह्यार्थसत्त्ववादे शब्दस्य बाह्यार्थेन सह ज्ञापकतारूपः कार्यकारणभावः सम्बन्धः। ज्ञानस्यैव बाह्यार्थाकारतया श्रोतरि प्रतीयमानस्यार्थत्वाङ्गीकारे तु कारकतास्वरूपः कार्यकारणभाव इति भेदः। अतश्च योग्यताऽपि कार्यकारणभाव एव, कारणता पुनः ज्ञापकतारूपा वा भवेत् कारकतारूपा वेति, कार्यकारणभावस्तु उभयथा सम्भवत्येव। स्फोटस्य विवर्त्तरूपं कार्यमिदं सर्वं जगदिति वैयाकरणमते तु वाचकस्य शब्दस्य कारककारणत्वमपि संघटत एवेति विवेचयन्तु विद्वांसः।।

## सम्बन्धसामान्यस्वरूपविषये कश्चिद्विमर्शः

सम्बन्धसद्भावे नास्ति विप्रतिपत्तिः, तस्यापामरसाधारणानुभवसिद्धत्वात्, अयमनेन संयुक्तः, अयमत्र समवेत इति सम्बन्धविशेषविषयकप्रतीतिवत् "इमौ मिथः सम्बद्धौ" इत्यादि-सम्बन्धसामान्यविषयकप्रतीतेः सर्वसम्मतत्वात्। घटभूतलयोः संयोगः, घटतद्रूपयोः समवायश्च[1] प्रत्यक्षसिद्धः। नहि प्रत्यक्षसिद्धेऽर्थे विप्रतिपद्यते कश्चित्। समवायानभ्युपगमवादिनोऽपि घट-तद्‌गुणक्रियादीनां सम्बन्धन्तु न निराकुर्वन्ति, समवायस्थानापन्नसम्बन्धान्तरस्वीकारमात्रेण कृतकृत्यतां मन्यन्ते च। तत्रापि नित्यसम्बन्धस्य निराकरणमात्रे पर्यवस्यति तेषां समवायविद्वेषः।

संयोगस्तु सर्वथाऽशक्यनिराकरणः। स हि द्विविधः, इन्द्रियग्राह्योऽतीन्द्रियश्च। आद्यो यथा भूतलघटसंयोगः, सम्बन्धिनोः घटभूतलयोरिन्द्रियग्राह्यत्वात्, सम्बन्धप्रत्यक्षस्य यावत्सम्बन्धिप्रत्यक्षप्रयोज्यत्वात्। अत एव घटस्य प्रत्यक्षत्वेऽपि घटाकाशसंयोगो न प्रत्यक्षः, अन्यतरस्य सम्बन्धिनः आकाशस्याप्रत्यक्षत्वात्। द्वितीयो यथा परमाणुद्वयसंयोगः। स चारम्भकसंयोगः। तथाहि-एकस्मिन् परमाणौ अनेकेषु वा परमाणुषु अवयवविनाऽवष्टब्धेषु क्रिया,ततो विभागः, ततस्तत्संयोगनाशः, ततोऽन्यावयविनमारभ्य क्रमेण द्व्यणुकपर्यन्तं द्रव्यनाशः, ततो विशकलिताः परमाणवोऽवशिष्यन्ते। तेषु ईश्वरेच्छावशात् पुनः कर्म, ततो विभागः, ततः पूर्वदेशसंयोगनाशः, ततः परमाण्वन्तरेण संयोगः, स एव संयोग आरम्भकसंयोग इति कथ्यते। तेन संयोगेन द्व्यणुकादिक्रमेण महावयविपर्यन्तमुत्पत्तिरिति न्यायवैशेषिकप्रक्रिया। अयं हि संयोगोऽनुमेयः, सम्बन्धिद्वयस्याप्रत्यक्षत्वात्। अनुमानप्रयोगश्च-त्र्यणुकावयवद्रव्यं स्वावयवसंयोगजन्यं, जन्यद्रव्यत्वात् कपालद्वयसंयोगारब्धघटवदिति। पूर्वोक्तानां घटभूतलादिसंयोगानामङ्गीकारे न स्यात्कस्यापि विप्रतिपत्तिः। किन्तु द्रव्यारम्भकावयवद्वयसंयोगे विप्रतिपद्यन्ते बौद्धाः। तथाहि- अवयवद्वयसंयोगाज्जायमानोऽवयवी अवयवेभ्यो भिन्न इति न्यायमतम्। किन्तु बौद्धास्तन्नाङ्गीकुर्वन्ति। तदनुसारम् अवयवेभ्योऽवयवी नातिरिच्यते। दृश्यमानो जलाहरणादिक्रियासमर्थो घटः परमाणुपुञ्ज एव। परमाणूनां परस्परं सम्बन्धो न सम्भवति। या च स्थूलादिप्रतीतिः सा भ्रान्तिः। उपपादितमेतद् विस्तरेण सयुक्ति चाचार्येण धर्मकीर्तिना सम्बन्धपरीक्षायाम्।[2] तथा चावयविनः परमाणुपुञ्जातिरिक्तत्वनिराकरणाय बौद्धैरारम्भकसंयोगो निराकरणीयः। तच्च

निराकरणं सम्बन्धसामान्यनिराकरणमुखेन सम्पादितम्। यतोहि घटभूतलयोः सम्बन्धे स्थापितेऽपि न तेषां काचिद्धानिः। हानिस्तु परमाणुद्वयसंयोगाङ्गीकारे, तस्माच्च द्रव्यान्तरोत्पत्त्यंगीकारे एव। ननु द्रव्यान्तरा-नुत्पादे दृश्यमानजलाहरणादि-क्रियासमर्थघटादेः स्थूलत्वादिप्रतीतिः कथमुपपन्ना स्यादिति चेन्न, तादृशप्रतीतेर्भ्रमत्व-स्योक्तत्वात्। अवयवद्वयसंयोगस्यातात्त्विकत्वे तज्जन्यावयविनोऽप्यतात्त्विकत्वं, स्वाप्नसुवर्णजन्यकुण्डलवत्। विषयस्य चातात्त्विकत्वे ज्ञानस्य भ्रमत्वम्। अत एवाचार्येण धर्मकीर्तिना "सम्बन्धो नास्ति तत्त्वतः"[३] इत्युक्तम्। एतच्च कियत्संगच्छत इति तु विचारणीयम्। किन्तु धर्मकीर्तिग्रन्थस्य तद्व्याख्याग्रन्थस्य[४] चावलोकनेन स्पष्टमिदं प्रतीयते यत् तेषां सम्बन्धसामान्यनिराकरणप्रक्रमः अवयवद्वयसंयोगनिरा-करणमात्रपर्यवसायी, तावन्मात्रस्येष्टत्वात्। सम्बन्धसामान्ये निषिद्धे तयैव युक्त्या सम्बन्धविशेषाणामपि सुतरां निषिद्धत्वात् न तदर्थं पृथक् प्रयासापेक्षा भवति।[५] अवयवसंयोगोऽपि कुतो निराकरणीय इति चेत्, तस्मिन्निराकृते एवावयवद्वयसंयोग-जन्यातिरिक्तावयवि-निराकरणं भवेत्, तथा सति च स्वसिद्धान्तरक्षा स्यात्। तस्मात् समवाय इव संयोगेऽपि विद्वेषः प्रयोजनविशेषनिबन्धनो न पुनर्यौक्तिको नाप्यनुभवारूढः।

एवं ज्ञानविषययोः सम्बन्धोऽपि विचारविषयोऽस्ति। ज्ञानं स्वविषये विषयतासम्बन्धेन, विषयश्च स्वज्ञाने विषयितासम्बन्धेन तिष्ठत इति ज्ञानस्य विषयो घटः, घटविषयकं ज्ञानमित्याद्यनुभवबलादास्थीयते नैयायिकैः। विषयित्वं विषयत्वञ्च पृथक् सम्बन्धौ किं वा विषयविषयिभावाख्यः एक् एव सम्बन्ध इत्यत्र स्याद् विवादः, किन्तु ज्ञानज्ञेययोरस्ति कश्चन सम्बन्ध इत्यत्र न कश्चिद् विप्रतिपत्तुमर्हति, लोकानुभवसिद्धे विप्रतिपत्तेरसम्भवात्। दृशि दृश्याध्यासं स्वीकुर्वन्तोऽद्वैतिनोऽपि यद्यपि ज्ञानज्ञेययोस्तात्त्विकं सम्बन्धं निराकुर्वन्ति, तन्मते दृगतिरिक्तस्य तात्त्विकस्याभावात्, तथाप्याध्यासिकसम्बन्धं तु ते स्वीकुर्वन्त्येव।[६] विषयत्वादेर्दुर्निरुप्यत्वकथनन्तु[७] तेषां वाग्वैभवमात्रं, तत्सिद्धेर्नैयायिकैर्बहुधा कृतत्वात्। वस्तुतस्तु यत्र तैर्दृश्याध्यासः स्वीक्रियते न तन्नैयायिकानां ज्ञानं, किन्तु ज्ञानाधिकरणम्। तन्मते तस्य निर्विषयत्वम्। नैयायिकनये ज्ञानं तु नियमतः सविषयकमिति स्वीक्रियते। एतन्मतसिद्धज्ञानन्तु अद्वैतिभिः वृत्तिपदेन व्यपदिश्यते, किन्तु न तत्र दृश्याध्यासः, तन्मते तस्या अपि मिथ्यात्वात्, अधिष्ठानस्य च सत्यत्वनियमात्। तस्मात् प्रक्रियाभेदमात्रनिबन्धनोऽयं विवादः।

यद्यपि घटो घटः इति शाब्दानुभवो न सम्भवति, विरूपोपस्थितेरभावात्, तथापि तादृशस्य प्रत्यक्षादेः सम्भवात्, नीलो घट इति शाब्दप्रतीतेरपि सम्भवाच्च तद्विषयतया तादात्म्यस्यापि सम्बन्धत्वसिद्धिः। किंच घटो न पटः इति प्रतीतिः तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावविषयिणी तादात्म्यस्य सम्बन्धत्वं विना

नोपपन्ना स्यात्। गुणगुणिनोः समवायस्थानीयतादात्म्याख्यसम्बन्धस्य कैश्चित्स्वीकारेण संज्ञामात्रे विवादेऽपि अभेदसम्बन्धस्य सर्वानुभवसिद्धस्यापलापो न शक्यते कर्तुम्।

एवमेव समानदेशत्व-समानकालत्वादयोऽपि सम्बन्धास्तत्तदनुभवसाक्षिकाः अशक्यनिराकरणाः। अनुभवानारूढानामप्रामाणिकानां परम्पराणां सम्बन्धत्वं नैयायिकैरपि नाङ्गीक्रियते।

इत्थं पर्यालोचनेन निश्चप्रचमिदं वक्तुं शक्यते यत् सम्बन्धसद्भावे न कस्यापि वास्तवी विप्रतिपत्तिः। तत्र तत्र विप्रतिपत्तिप्रदर्शनं तु तत्तद्दार्शनिकविवशतामात्रम्।

तर्हि किमन्यदवशिष्टं विचारायेति चेत्? सम्बन्धस्य स्वरूपमात्रम्। सम्बन्धिभ्यां भिन्नत्वे सति द्विष्ठत्वे सति विशिष्टप्रतीतिजनकत्वमिति अत्यन्तं प्रसिद्धं सम्बन्धस्वरूपम्।[८] विशिष्टप्रतीतिजनकत्वस्य सम्बन्धिद्वयसाधारणत्वेनातिव्याप्तिवारणाय सम्बन्धिद्वयभिन्नत्वम्। अभेदादेः सम्बन्धत्वव्युदासाय द्विष्ठत्वम् (तन्मतेऽभेदस्य सम्बन्धत्वं नांगीक्रियते। विषयत्वं विषयित्वं वा न पृथक् सम्बन्धः, तयोरद्विष्ठत्वात्, किन्तु विषयविषयिभाव एक एव सम्बन्धः)। उदासीनद्विष्ठपदार्थवारकतयाऽन्त्यदलनिवेशः।

तत्रापि सम्बन्धिद्वयभिन्नत्वं न तत्त्वेन प्रविष्टं, किन्तु विशेष्यताभिन्नत्वे सति प्रकारताभिन्नत्वपरम्, अन्यतरसम्बन्धिरूपे स्वरूपसम्बन्धेऽव्याप्तेः। तच्च विशिष्टप्रतीतिविषयत्वार्थके विशिष्टप्रतीतिजनकत्वे विशेषणम्। तथाच विशेष्यताभिन्नत्वे सति प्रकारताभिन्ना या विशिष्टप्रतीतिविषयता तदाश्रयत्वे सति द्विष्ठत्वं सम्बन्धसामान्यलक्षणं पर्यवसितम्। विशिष्टप्रतीतौ हि विषयतात्रयं- प्रकारता, विशेष्यता संसर्गता च। प्रकारताभिन्ना विशेष्यताभिन्ना च विषयता संसर्गताख्या, तदाश्रयत्वं प्रकारताद्याश्रयेऽपि सम्बन्धिनि वर्तत एव। घटाभाववद्भूतलमित्यत्र तत्तत्कालीनंतत्तद्भूतलं घटाभावस्य भूतलेन सह सम्बन्धः।[९] स एव सम्बन्धः स्वरूपसम्बन्ध इति कथ्यते। इत्थञ्च भूतले संसर्गता विशेष्यता चेति द्वयमपि वर्तते। किन्तु द्वे अपि भिन्ने। तयोरन्तराभासमानत्वेऽपि भेद एव उचितः। ये तु अन्तराभासमानविषयतयोरभेदं स्वीकुर्वन्ति तेऽपि प्रकारताविशेष्यतयोरेवाभेदं स्वीकुर्वन्ति, न तु संसर्गताया अपि। तथा च तादृशसंसर्गताख्यविषयताश्रयत्वस्य स्वरूपसम्बन्धेऽपि सत्त्वाल्लक्षणसमन्वयः। एतेन सम्बन्धस्य प्रतियोग्यनुयोगिभिन्नत्वे तस्य प्रतियोग्यनुयोगिभ्यामपि कश्चन सम्बन्धो वक्तव्यः, तस्यापि प्रतियोग्यनुयोगिभिन्नत्वे ताभ्यामपि कस्यचन सम्बन्धस्य वक्तव्यत्वेऽनवस्था स्यात्, तदात्मकत्वे च सम्बन्धिभिन्नत्वं स्यादिति निरस्तं, स्वरूपत्वेऽप्युक्तरीत्या सम्बन्धिभेदस्योपपादितत्वात्। प्रतियोग्यादिभिन्नत्वेऽपि तादृशानवस्थायाः

प्रामाणिकत्वेनादोषात्, अन्यथाऽनवस्थाभिया संयोगसमवाययोरपि प्रतियोग्यादिरूपत्वे तयोः पृथक् पदार्थत्वेन परिगणनासंगतेः। तस्मात् सम्बन्धो द्विविधः, स्वरूपं तदतिरिक्तश्च। स्वरूपस्य द्विष्ठता पूर्वोक्तरीत्योपपादनीया, तदतिरिक्तस्य च स्पष्टैव। तथापि तादात्म्यस्य सम्बन्धत्वमंगीकुर्वतां नैयायिकानां नये द्विष्ठत्वं न लक्षणघटकमिति ध्येयम्।

जनकत्वपदस्य विषयत्वार्थकत्वं त्ववश्यमेवांगीकर्तव्यम्, अन्यथा परोक्षस्थले विषयीभूतसम्बन्धस्याकारणत्वेन तत्राव्याप्तिः स्यात् प्रत्यक्षे एव विषयस्य करणत्वात्। विषयत्वार्थकत्वे तु नैष दोषः, विषयतायाः सर्वत्र समानत्वात्।

किञ्च विशिष्टज्ञानत्वं नाम विशिष्टज्ञाननिष्ठजन्यतानिरूपितजनकत्वम्। जन्यत्वञ्च सम्बन्धघटितनियमघटितमित्यन्योन्याश्रयोऽपि द्रष्टव्यः। अतोऽपि जनकत्वपदं विषयत्वार्थकं वक्तव्यम्।

अत्र गदाधरभट्टाचार्यास्तु- यत्र संयोगसंसर्गकद्रव्यत्वादिप्रकारकभ्रमात्मकं ज्ञानं जातं तत्र संयोगस्य द्रव्यत्वसंसर्गतापत्तिमुद्भावयन्ति। ननु का क्षतिः संयोगस्य द्रव्यत्वसंसर्गत्व इति चेत्, न, तथा सति संयोगेन द्रव्यत्ववान् इति प्रतीतेः प्रमात्वापत्तेः, तत्संसर्गेण तद्वत्ताबुद्धेः प्रमात्वात्। अतः प्रतियोगित्वादिविशेष एव तत्सम्बन्धत्वं वक्तव्यमिति तेषामाषयः।

अत्रेदं विचारणीयं यत् मास्तु संयोगस्य द्रव्यत्वसंसर्गता येन संयोगेन द्रव्यत्ववानिति बुद्धेः प्रमात्वापत्तिः स्यात्। किन्तूक्तबुद्धौ संयोगस्य संसर्गत्वे न किंचिद् बाधकम्। अन्यथा द्रव्यत्वप्रकारकसंयोगसंसर्गकबुद्धिरप्रमेति व्यवहारो न स्यात्, उक्तबुद्धेः संयोगसंसर्गकत्व एव तादृशव्यवहारस्योपपन्नत्वात्। नह्युक्तबुद्धौ द्रव्यत्वप्रतियोगिकसंयोगस्य संसर्गता, तस्याप्रसिद्धत्वात्। नापि संयोगसम्बन्धांशे द्रव्यत्वप्रतियोगिकत्वस्य भ्रमः, भ्रमत्वस्य तत्प्रकारकत्वादिघटितत्वेन संसर्गांशे भ्रमत्वस्यानङ्गीकारात्; किन्तु संयोगसामान्यस्यैव संसर्गता। तेन सम्बन्धेन तद्वद्विशेष्यकत्वाभावेन भ्रमत्वम्। संयोगेन गुणो नास्तीत्यादावपि संयोग एव प्रतियोगितावच्छेदकसम्बन्धः, न तु गुणप्रतियोगिकसंयोगः, तस्याप्रसिद्धत्वात्।

एवं पर्यालोचनेनेदं वक्तुं शक्यते यत् भट्टाचार्यास्तत्सम्बन्धत्वस्य निर्वचनमभिप्रेत्योक्तापत्तिं प्रदर्शयन्ति, सामान्यतः सम्बन्धत्वनिर्वचने तु यथाश्रुतमपि युक्तमेव।

इत्थञ्च समबन्धिद्वयभिन्नत्वदले विशिष्टप्रतीतिजनकत्वदले च नास्ति विप्रतिपत्तिः। सा तु द्विष्ठत्वदल एव। द्विष्ठत्वं हि एकेन सम्बन्धेन पदार्थद्वयवृत्तित्वं, न तु नानासम्बन्धैः, अव्यावर्तकत्वात्, पदार्थमात्रस्यैव नानासम्बन्धैः अनेकपदार्थवृत्तित्वात् घटज्ञानीयविषयतायाः स्वरूपसम्बन्धेन घट इव कालिकादिसम्बन्धेन

पटादावपि सत्त्वात् तस्या अपि द्विष्ठत्वापत्तेः। संयोगसम्बन्धो हि द्विष्ठः। तस्यैकेनैव समवायेन पदार्थद्वयवृत्तित्वं सर्वाभिमतम्। तथाहि नित्यत्वे सति अनेकसमवेतत्वमिति जातिलक्षणे नित्यत्वपदानुपादाने संयोगेऽतिव्याप्तिरुक्ता, संयोगप्रतियोगिक-समवायस्य घटभूतलोभयनिष्ठत्वात्, समवायस्य चैकत्वात्। तथाचानेकसमवेतत्वा-त्तत्रातिव्याप्तिवारणाय नित्यत्वे सतीति विशेषणम्। भूतलानुयोगिकत्व-घटप्रतियोगिकत्वाभ्यां समवायस्य भेदस्त्वकिंचित्करः, तथासति एकमात्रवृत्ति-पदार्थमात्रोच्छेदापत्तेः, घटत्वादेरपि आश्रयव्यक्तिभेदाद्भेदस्य, तद्व्यक्तित्वादेरपि कालभेदाद्भेदस्य च सुवचत्वात्, औपाधिकभेदसत्त्वेऽप्यनौपाधिकभेदस्य समवायेऽप्यभावाच्च। तस्मात्संयोग एकेनैव समवायसम्बन्धेन द्विष्ठो भवत्येव। किन्तु समवायसम्बन्धस्य तादृशी द्विष्ठता साधयितुं न शक्यते। स हि स्वरूपसम्बन्धेन वर्तते, तच्च प्रतियोग्यनुयोगिरूपं भिन्नमेव। तादात्म्यादेस्तु द्विष्ठता दूरनिरस्ता। तस्माद्द्विष्ठत्वं न लक्षणे प्रवेष्टुमर्हति।

सम्बन्धिद्वयभिन्नत्वं तु प्रागुक्तरीत्या परिष्कृतं साध्वेव। यत्तु सम्बन्धित्वं सम्बन्धाश्रयत्वं तच्च सम्बन्धघटितमित्यात्माश्रय इति, तन्न, घटत्वभूतलत्वाद्य-वच्छिन्नप्रतियोगिताकभेदस्य सम्बन्धिद्वयभेदपदेन विवक्षितत्वात्, सम्बन्धित्वावच्छिन्न-प्रतियोगिताकभेदनिवेश एवात्माश्रयप्रसंगात्।

तस्माद् विशेष्यताभिन्नत्वे सति प्रकारताभिन्ना या विशिष्टप्रतीतिविषयता तदाश्रयत्वं समबन्धसामान्यलक्षणं पर्यवसितम्। अविशिष्टव्यावृत्तविशिष्टधी-नियामकत्वमिति वदतां मणिकाराणामप्ययमेवाशयः। लक्षणेऽस्मिन् तत्र तत्रोत्थापितास्ते ते दोषा यथायथं वारणीयाः।

## सन्दर्भसूची–

१. क्रियां जातिं योग्यवृत्तिं समवायञ्च तादृशम्। गृह्णाति चक्षुः...कारिकावली।

२. सम्बन्धपरीक्षा, बौद्धभारती, वाराणसी, १९७२.

३. सम्बन्धपरीक्षा, का.सं.१.

४. द्रष्टव्या, प्रभाचन्द्रकृतव्याख्योपेता सम्बन्धपरीक्षा, बौद्धभारती, वाराणसी, १९७२.

५. सम्बन्धपरीक्षा, का.स.१९.

६. अद्वैतसिद्धौ दृग्दृश्यसम्बन्धप्रकरणे.

७. तदेव.

८. परमलघुमंजूषा.

९. न्यायसिद्धान्तमुक्तावली, का.सं.११.

# परिणामभेदानां सम्बन्धविवेकः

परिणामभेदानां सम्बन्धविवेचनात् पूर्वं कः परिणामः के च तद्भेदा इति विवेचनमावश्यकम्। अतोऽत्र प्रथमं विषयेऽस्मिन् किञ्चिद् विचार्यते। परिणामशब्दस्य सामान्योऽर्थः परिवर्तनम्। पारिभाषिकश्चार्थः 'अवस्थान्तरम्'। अर्थाद् एकस्या अवस्थाया अवस्थान्तरस्य प्राप्तिः परिणामः। तदुक्तं भाष्यकारेण 'अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणामः।'[1] युक्तिदीपिकाकारेणाप्युक्तम् 'परिणामो नामावस्थितस्य द्रव्यस्य धर्मान्तरनिवृत्तिः धर्मान्तरप्रवृत्तिश्च'[2] इति। अर्थात् स्वरूपतः स्थिरस्य द्रव्यस्यैकस्य धर्मस्य तिरोभावः, अपरस्य च धर्मस्याविर्भावः परिणामो वर्तते। परिणामपदेन आविर्भाव एव बोध्यते न तूत्पत्तिः। कारणभूते तत्त्वे यदन्तर्हितं तस्य कार्यभूते तत्त्वे प्रकटीभाव एव परिणामः। परिणामस्य स्वरूपं स्पष्टीकुर्वता युक्तिदीपिकाकारेण तत्रैका कारिकापि समुद्धृता-

'जहद् धर्मान्तरं पूर्वमुपादत्ते यदा परम्।
तत्त्वादप्रच्युतो धर्मी परिणामः स उच्यते।।'[3]

आतपेन पलाशपत्रे श्यामता तिरोभवति पीतता चाविर्भवति, किन्तु नैतावता पलाशपत्रं पालाशत्वात्प्रच्युतं भवति। एष एव परिणामः।

सांख्ययोगयोः प्रकृतिः परिणामिनी वर्तते। सा च त्रिगुणात्मिका। त्रिगुणात्मिकायाः प्रकृतेः परिणामो द्विविधो वर्तते सरूपपरिणामो विरूपपरिणामश्चेति। प्रकृतेः सरूपपरिणामस्य सम्बन्धः प्रलयावस्थया सह वर्तते, विरूपपरिणामस्य च सम्बन्धः सृष्ट्या सह वर्तते। प्रलयावस्थायां प्रकृतेः सृष्ट्या सह सम्बद्धो विरूपपरिणामोऽवरुद्धो भवति सरूपपरिणामश्च प्रवर्तते। तुल्यमात्रया विद्यमानानां गुणानां स्वस्मिन्नवस्थान्तरणं सरूपपरिणामः। तद् यथा एकस्याः सत्त्वव्यक्तेरभिभवः अपरस्याश्चोद्भवः, एकस्या रजोव्यक्तेरभिभवः अपरस्याश्च रजोव्यक्तेरुद्भवः एवमेव एकस्यास्तमोव्यक्तेरभिभवः अपरस्याश्च तमोव्यक्तेरुद्भवः प्रकृतेः सरूपपरिणामः। अयञ्च परिणामः प्रलयस्यान्तिमं क्षणं यावद् भवति। सृष्टिकाले च प्रकृतेर्विरूपपरिणामो भवति। स च विरूपपरिणामः प्रकृतेर्महदहङ्कारादिसृष्ट्या सह सम्बद्धोऽस्ति। त्रिगुणात्मिकायाः प्रकृतेः साक्षात् परिणामो महान् वर्तते तद्द्वारा च परम्परया प्रकृतेः परिणामोऽहङ्कारः, अहङ्कारद्वारा चैकादशेन्द्रियाणि पञ्चतन्मात्राणि च प्रकृतेः परम्परया परिणामाः। एवमेव पञ्चतन्मात्रमाध्यमेन परम्परया पञ्चमहाभूतान्यपि प्रकृतेः परिणामभूतानि। पञ्चमहाभूतेष्वेव सर्गस्य परिसमाप्तिर्न भवति अपितु पञ्चमहाभूतानां परिणामरूपेण गो-घट-पटादयः पदार्था असंख्याता दृष्टिपथमायान्ति। किन्तु सांख्यकारिका-

कारेणेश्वरकृष्णेन योगसूत्रकारेण महर्षिणा पतञ्जलिना च महदारभ्य महाभूतपर्यन्तमेव प्रकृतेः परिणामाः प्रोक्ताः, न तु गो-घटादयः पदार्थाः। यतो हि गोघटादयः पदार्था न तु तत्त्वान्तरपरिणामा अपितु धर्म-लक्षणावस्थापरिणामाः सन्ति। एते च परिणामा भूतेन्द्रियेषु भवन्ति। उक्तञ्च महर्षिणा- 'एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः'[४] इति।

## धर्मपरिणामः-

धर्मपरिणामस्य लक्षणं कुर्वता भाष्यकारेण व्यासेन प्रोक्तं 'व्युत्थाननिरोध-योरभिभवप्रादुर्भावौ धर्मिणि धर्मपरिणामः'[५] इति। अर्थात् चित्तरूपिणि धर्मिणि व्युत्थानसंस्काररूपिणो धर्मस्य तिरोभावः, निरोधसंस्काररूपिणो धर्मस्य चाविर्भावो धर्मपरिणाम इत्युच्यते। अत्र धर्मिणो धर्मान्यथात्वमेव भवति, न तु द्रव्यान्यथात्वम्। तद् यथैकस्य सुवर्णस्य रुचक-स्वस्तिक-कुण्डलादिप्रकारा अनेके धर्मपरिणामा भवन्ति, किन्तु न तैः सुवर्णस्य सुवर्णत्वं व्याहतं भवति। अर्थाद् धर्मिणः स्वरूपनाशो न भवति, सुवर्णः सुवर्ण एव तिष्ठति न त्वसुवर्णो भवति।

## लक्षणपरिणामः-

लक्ष्यते भिद्यतेऽनेनेति लक्षणमिति व्युत्पत्त्या लक्षणपरिणमेनैकस्य कालस्य वस्तुनोऽन्यस्य कालस्य वस्तुना सह भेदो लक्ष्यते। उक्तञ्च तत्त्ववैशारद्यां 'लक्ष्यतेऽनेन लक्षणं कालभेद'[६] इति। परिणामस्यास्य लक्षणं कुर्वता आचार्यविज्ञान-भिक्षुणाप्युक्तम्- "लक्षणपरिणामो हि अवस्थितस्य धर्मस्यानागतादिलक्षणत्यागे वर्तमानादिलक्षणभावः"[७] इति। कालघटितश्चायं लक्षणपरिणामः कालभेदेन त्रिधा भिद्यते अनागतलक्षणपरिणामः, वर्तमानलक्षणपरिणामः अतीतलक्षणपरिणामश्चेति। यथा धर्मपरिणामो धर्मिणो भवति न तथा लक्षणपरिणामो धर्मिणो भवति, अपित्वयं लक्षणपरिणामो धर्मनिष्ठो वर्तते। उक्तञ्चाचार्यवाचस्पतिमिश्रेण- "धर्माणां चातीतानागतवर्तमानरूपता लक्षणपरिणामः"[८] इति। मृत्तिकादिरूपिणि धर्मिणि घटादिधर्मोऽव्यक्तरूपेण तिष्ठति। यदा मृत्तिकाया घटाकारपरिणामो भवति तदा घटात्मको धर्मः स्वीयामनागतावस्थां विहाय वर्तमानावस्थां प्राप्नोति। एवमनागत-लक्षणस्य त्यागेन घटस्य वर्तमानलक्षणप्राप्तिर्घटात्मकस्य धर्मस्य लक्षण-परिणामोऽस्ति। अयमेव च वर्तमानावस्थापन्नो घटात्मको धर्मः किञ्चित्कालानन्तर-मतीतावस्थां प्राप्नोति। एवं घटस्य वर्तमानावस्थां विहायातीता- वस्थाप्राप्तिरपि लक्षणपरिणामः। एवमेव निरोधपरिणामप्रसङ्गे चित्तधर्मिणि अनागतावस्थायां विद्यमानानां निरोधसंस्काराणां स्वीयामनागतावस्थां परित्यज्य वर्तमानावस्था-प्राप्तिरपि लक्षणपरिणामः। एवमनागतावस्थापरित्यागपूर्वकं निरोधसंस्काराणां वर्तमानलक्षणे परिणामे जाते च व्युत्थानसंस्कारा वर्तमानावस्थां परित्यज्य अतीतावस्थां प्राप्नुवन्ति। यतो हि चित्तधर्मिणि परस्परविरोधिधर्मद्वयं युगपद् वर्तमानावस्थायां स्थातुं न शक्नोति।

धर्मपरिणामस्याधिकरणं धर्मी भवति लक्षणपरिणामस्य चाधिकरणं धर्मः। धर्मपरिमाणस्य तात्पर्यं कार्याभिव्यक्तिरस्ति, लक्षणपरिणामस्य च

तात्पर्यमभिव्यक्तस्य कार्यस्य कालपरिवर्तनं वर्तते। यथा धर्मपरिणामेन धर्मिणः स्वरूपहानिर्न भवति तद्वल् लक्षणपरिणामेन धर्मस्य नाशो न भवति। यतो हि अनागतावस्थाया वर्तमानामवस्थां वर्तमानावस्थाया अतीतावस्थां प्राप्तोऽपि धर्मो धर्मत्वं नातिक्रामति। अर्थादनागतधर्म एव वर्तमानो वर्तमानधर्म एव चातीतो भवति। उक्तञ्च तत्त्ववैशारद्यां "य एव निरोधोऽनागत आसीत् स एव सम्प्रति वर्तमानो, न तु निरोधोऽनिरोध इत्यर्थः"[९] इति।

## अवस्थापरिणामः-

लक्षणपरिणामस्य इव अवस्थापरिणामोऽपि धर्मस्यैव भवति, न तु धर्मिणः। धर्मस्यैकस्मादध्वनः (कालात्) अपरस्मिन्नध्वनि प्रस्थानं येन लक्षणपरिणामेन भवति तत्रावस्थापरिणामः सहायको भवति। यदि घटादिकार्यस्यावस्थापरिणामो न स्वीक्रियते तदा बाह्यनिमित्तं विना धर्मस्य या स्वभावतो भग्नावस्था दृश्यते, सा नोपपद्येत। निरोधपरिणामप्रसङ्गे निरोधकाले निरोधसंस्कारा बलवन्तो व्युत्थान-संस्काराश्च दुर्बला भवन्ति। एवं संस्काराणां प्रबलता दुर्बलता च अवस्थापरिणामः। वर्तमानलक्षणापन्नेषु गवादिधर्मेषु बाल्यं, कौमारं यौवनं वार्ध्यक्यञ्चेति अवस्था-परिणामा भवन्ति। घटादीनां नवता, पुराणता रत्नाद्यालोचनस्य स्फुटत्वास्फुटत्वा-दिरवस्थापरिणामः। एष चावस्थापरिणामो न केवलं वर्तमानलक्षणापन्नेष्वेव धर्मेषु भवत्यपितु अतीतानागतेष्वपि दृश्यते। अतीतानागतलक्षणयोरपि शीघ्रभविष्यत्तावि-लम्बभविष्यत्तादिरूपो विशेषोऽवस्था-परिणाम एव। उक्तञ्चाचार्यविज्ञानभिक्षुणा-'शीघ्रभविष्यत्ताविलम्बभविष्यत्तादिरूपो विशेषस्तयोरपि लक्षणयोरनुमीयते सत्त्वादिवदेव गुणत्वेन प्रतिक्षणपरिणामित्व-सिद्धेः'[१०] इति। यथा पिण्डकपालघटरूपैः मृत्तिकाया घटरूपो धर्मपरिणामो प्रत्यक्षीक्रियते न तथावस्था-परिणाम इत्ययम् अनुमीयते। धर्मलक्षणपरिणामा-भ्यामवस्थापरिणामस्यायं भेदो यद् धर्मपरिणामो लक्षणपरिणामश्च न प्रतिक्षणं भवतः, अवस्थापरिणामस्तु प्रतिक्षणं भवति। उक्तञ्च योगवार्तिके- 'विशिष्टोऽति-शयितः, धर्मलक्षण-परिणामयोः प्रतिक्षणमनुत्पादादवस्थापरिणमस्य च प्रतिक्षणमुत्पादात्'[११] इति।

भूतेन्द्रियेषु एष त्रिविधो धर्मलक्षणावस्थापरिणामो धर्मधर्मिणोर्भेददृष्ट्या वर्तते। तत्रभवता वाचस्पतिमिश्रेण विषयोऽयमेवं सङ्कलितः- 'धर्मधर्मिणोर्भेदमालक्ष्य तत्र भूतानां पृथिव्यादीनां धर्मिणां गवादिर्घटादिर्वा धर्मपरिणामः, धर्माणाञ्चातीतानागतवर्तमानरूपतालक्षणपरिणामः, वर्तमानलक्षणापन्नस्य गवादेर्बाल्य-कौमार-यौवन-वार्धक्यमवस्थापरिणामः, घटादीनामपि नवपुराणताऽ-वस्थापरिणामः एवमिन्द्रियाणामपि धर्मिणां तत्तन्नीलाद्यालोचनं धर्मपरिणामः, धर्मस्य वर्तमानतादिर्लक्षणपरिणामो, लक्षणस्य रत्नाद्यालोचनस्य स्फुटत्वास्फुट-त्वादिरवस्थापरिणामः। सोऽयंमेवंविधो भूतेन्द्रियपरिणामो धर्मिणो लक्षणावस्थानां भेदमाश्रित्य वेदितव्यः।"[१२] इति।

भाष्यकारेण धर्मधर्मिणोरभेददृष्ट्या 'परमार्थतस्त्वेक एव परिणामः'[१३] इत्युक्तम्। यतो हि धर्मो धर्मिस्वरूपमात्रो हि भवति। अतो धर्मधर्मिणोरभेद

एव। धर्मिणो विकार एव अर्थाद् धर्मिणः परिणाम एव धर्मद्वारा त्रिविधपरिणामरूपेण प्रपञ्च्यते। किन्त्वेवं परिणामस्य धर्मिगतत्वे शङ्केयं स्याद्यद् धर्मपरिणामे धर्मिण एवान्यथात्वं भवेदिति। अस्याश्च शङ्कायाः परिहारं कुर्वता भाष्यकारेणोक्तम् **'तत्र धर्मिणि वर्तमानस्य धर्मस्यैव अतीतानागतवर्तमानेषु भावान्यथात्वं भवति, न द्रव्यान्यथात्वम्'**[१५] इति। अत्रैकमुदाहरणमपि भाष्यकारेण प्रस्तुतं **'यथा सुवर्णभाजनस्य भित्त्वान्यथाक्रियमाणस्य भावान्यथात्वं भवति न सुवर्णान्यथात्वम्।'** इति।

## धर्मलक्षणावस्थापरिणामेषु सम्बन्धविवेचनम्-

एतेषु धर्मलक्षणावस्थापरिणामेषु विचारितेष्वेवं प्रतिभाति यद् एते त्रयोऽपि परिणामाः परस्परं सम्बद्धाः सन्ति। धर्मिणः परिणामो धर्मैः, धर्माणां परिणामः लक्षणैः, लक्षणानाञ्च परिणामः अवस्थाभिर्भवति। एकस्य मृत्तिकारूपिणो धर्मिणो घटाद्याकारेण धर्मपरिणामो भवति, स च धर्मैः, तस्मिन् घटरूपे च धर्मे अनागतादिलक्षणैः लक्षणपरिणामो भवति, वर्तमानादिलक्षणेषु च नवतापुराणताद्यवस्थाभिरवस्थापरिणामो भवतीति। तदेवं धर्मलक्षणावस्थाः परिणामत्रयस्य हेतवः सन्ति।

अनागतादिलक्षणेषु त्रिषु लक्षणपरिणामेष्वपि परस्परं सम्बन्धो वर्तते। अत्रैकस्य लक्षणस्याभिव्यक्तिकालेऽपि धर्मोऽनभिव्यक्तलक्षणाभ्यामसम्बद्धो न भवति। तदुक्तं योगवार्त्तिककारेण **'एकैकलक्षणाभिव्यक्तिकालेऽपि धर्मो लक्षणान्तराभ्यां सूक्ष्माभ्यां वियुक्तो न भवति'**[१५] इति। सांख्ययोगसिद्धान्तानुसारेण प्रत्येकमपि पदार्थः अनागतादिलक्षणैस्त्रिभिरपि युक्तो भवति। अन्यथा किमपि वस्तु कथं वर्तमानं स्यात्? यतो हि तस्य वस्तुनोऽभिव्यक्तेः पूर्वम् अर्थाद् अनागतावस्थायां यदि तत्र सूक्ष्मरूपेण वर्तमानतारूपो धर्मो न स्यात्तदा सा वर्तमानता कुत आगच्छेत्? एतावतैतत् स्पष्टं भवति यन्मृत्तिकादिधर्मिणि घटादिधर्मोऽभिव्यक्तेः प्रागपि यथा सूक्ष्मरूपेण तिष्ठति तथैवानागतलक्षणे घटेऽपि वर्तमानता, वर्तमानलक्षणे घटेऽपि चातीतता सूक्ष्मरूपेण तिष्ठत्येव। यदा मृत्तिकाया घटाकारपरिणामो भवति अर्थाद् धर्मपरिणामो भवति तदा घटोऽनागतलक्षणं त्यक्त्वा वर्तमानलक्षणं प्राप्नोति। तदनन्तरं स एव वर्तमानलक्षणो घटो दण्डादिप्रहारेणातीतलक्षणं प्राप्नोति। तदेवं त्रिष्वपि लक्षणेषु धर्म एकस्य लक्षणस्य परिणामकालेऽपि लक्षणान्तराभ्यां सम्बद्धो भवति। यतो हि सत्कार्यवादानुसारेणासत उत्पत्तिर्नभवति सतश्च कदापि विनाशो न भवति। अतस्त्रयोऽपि लक्षणपरिणामा व्यक्ताव्यक्तरूपेण एकस्य परिणामस्य कालेऽपि विद्यमाना भवन्ति।

भाष्यकारेण परमार्थतस्त्वेक एव परिणाम इति यदुक्तं तद् धर्मधर्मिणोरभेदविवक्षया वर्तते। अतोऽत्र परिणामप्रसङ्गे धर्मधर्मिणोः सम्बन्धविवेकोऽप्यावश्यकः। सांख्ययोगयोर्धर्मधर्मिशब्दौ कार्यकारणार्थौ। धर्मोऽस्यास्तीति व्युत्पत्त्या यस्य धर्मो भवति स एव धर्मी कथ्यते। अतो धर्मिणो ज्ञानाय धर्मज्ञानमावश्यकम्। उक्तञ्चाचार्यवाचस्पतिमिश्रेण **'धर्मोऽस्यास्तीति धर्मी, नाविज्ञाते धर्मे स शक्यो ज्ञातुम्।'**[१६] इति। धर्मिणि च त्रयो धर्मा भवन्ति शान्तधर्मः, उदितधर्मः, अव्यपदेश्यधर्मश्च। उक्तञ्च सूत्रकारेण- **'शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी'**[१७]

इति। एभिस्त्रिभिर्धर्मैर्धर्मी सर्वदानुस्यूतो भवति। व्याख्याकारैर्धर्मशब्दः शक्तिपरतया व्याख्यातः। शक्तिश्च कार्यनिर्माणपरेति धर्मशब्दस्य कार्यवाचकत्वमपि नानुचितम्। शक्तिरूपश्चायं धर्मः शक्तिमति धर्मिणि तादात्म्यसम्बन्धेन तिष्ठति। स च धर्मो धर्मिणः पृथक् कर्तुं न शक्यते। मृत्तिकादिद्रव्यरूपे धर्मिणि अव्यक्तरूपेण विद्यमाना चूर्णपिण्डघटादिनिर्माणयोग्या शक्तिरेव धर्मः। उक्तञ्च तत्त्ववैशारद्यां 'धर्मिणो द्रव्यस्य मृदादेः शक्तिरेव=चूर्णपिण्डघटाद्युत्पत्तिशक्तिरेव धर्मः, तेषां तत्राव्यक्तत्वेन भाव इति यावद्'[१८] इति। योगवार्त्तिककारेणापि 'स च धर्मः शक्तिरूपः'[१९] इत्युक्तम्।

सांख्ययोगयोः परिणामसिद्धान्तानुसारेण जगतः प्रत्येकमपि जडपदार्थः, प्रतिक्षणं परिणामं लभते। इदानीमिदं विचारणीयमस्ति यत् समाधियुक्तस्य चित्तस्यापि परिणामो भवति न वेति। योगशास्त्रे समाधिसम्पन्नस्य चित्तस्यापि त्रयः परिणामाः प्रोक्ताः - निरोधपरिणामः, समाधिपरिणामः एकाग्रतापरिणामश्चेति। साधनाक्रमेण समाधिसम्पन्नस्य चित्तस्य प्रथमं समाधिपरिणामः, मध्ये एकाग्रता-परिणामः, अन्ते च निरोधपरिणामो भवति। अनेनैव क्रमेण त्रयोऽप्येते परिणामाः सम्प्रति प्रस्तूयन्ते।

**समाधिपरिणामः-**

सर्वार्थता अर्थान्नानाविषयोन्मुखता, एकाग्रता अर्थाद् एकविषयोन्मुखता चैकस्यैव चित्तरूपस्य धर्मिणो धर्मौ। तत्र सर्वार्थतायास्तिरोभावः एकाग्रतायाश्च आविर्भावश्चित्तस्य समाधिपरिणाम उच्यते।[२०] यद्यपि तिरोभावाविर्भावौ सर्वार्थताया एकाग्रतायाश्च भवतस्तथापि तयोः सर्वार्थतैकाग्रतयोर्धर्मित्वेन यतश्चित्तमनुगत-मतोऽसौ परिणामश्चित्तस्येति स्वीक्रियते। अस्मिन् परिणामे चित्तं सर्वार्थतैकाग्रतयोः क्षयोदयाभ्यामनुगतं सत् समाधीयते।

**एकाग्रतापरिणामः-**

यदा लब्धसम्प्रज्ञातसमाधिचित्तं पूर्णरूपेण एकाग्रतावस्थां प्राप्नोति तदा तस्य चित्तस्य व्युत्थानरूपिण्यो वृत्तयः निःशेषेण शान्ता भवन्ति, चित्तस्य ध्येयाकारवृत्तय एव चोदितास्तिष्ठन्ति। तदानीं चित्तधर्मिणः सा अवस्था यत्र सदृशध्येयाकारवृत्तिरूपस्य धर्मस्यैवाविर्भावतिरोभावौ भवतः, सम्प्रज्ञातसमाधि-कालिकस्य परिनिष्ठितचित्तस्य एकाग्रतापरिणामः कथ्यते। उक्तञ्च सूत्रकारेण-'ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः'[२१] इति। समाधिपरिणामे व्युत्थानरूपाणामेकाग्रतारूपाणां च द्विविधानां वृत्तीनामाविर्भावतिरोभावौ भवतः, एकाग्रतापरिणामे तु केवलमेकाग्रतारूपाणां वृत्तीनामेव कालभेदेनाविर्भावतिरोभावौ भवत इत्युभयोः परिणामयोर्भेदः।

**निरोधपरिणामः-**

साधनाक्रमदृष्ट्या सम्प्रज्ञातसमाधौ सिद्धे योगी असम्प्रज्ञातसमाधौ प्रविशति। असम्प्रज्ञातसमाधौ सम्प्रज्ञातकाले जायमाना ध्येयाकारवृत्तिरूपा परिणामाः साकल्येन समाप्ता भवन्ति। किन्तु चित्तधर्मिणि वृत्तिजन्याः संस्कारास्तिष्ठन्ति।

असम्प्रज्ञातसमाधेरभ्यासवृद्धौ सत्यां सर्ववृत्तिनिरोधरूपाश्च संस्कारा वर्द्धन्ते। निरोधसंस्कारदृष्ट्या एकाग्रतासंस्कारा अपि व्युत्थानरूपा एव। निरुद्धावस्था-विशिष्टे चित्ते यदा व्युत्थानात्मकानामेकाग्रतासंस्काराणामभिभवः निरोधसंस्काराणां च प्रादुर्भावो भवतः तदा निरोधक्षणान्वयिनश्चित्तधर्मिणः स निरोधपरिणाम उच्यते। उक्तञ्च सूत्रकारेण 'व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षण-चित्तान्वयो निरोधपरिणामः'[२२] इति।

निरोधपरिणामस्य समाधिपरिणामेन एकाग्रतापरिणामेन च सह नास्ति साम्यम्। निरोधपरिणामे चित्तस्य वृत्त्यात्मकपरिणामो न भवति, निरोधसंस्कारा एव भवन्ति। निरोधसंस्काराच्च चित्तस्य प्रशान्तवाहिता भवति। निर्वाधतया निरोधसमाधेः स्थितिर्भवति। चित्तस्य प्रशान्तवाहितायाः कृते निरोधसंस्काराभ्यासेन जायमानस्य पाटवस्यापेक्षा भवति। यतो हि निरोधसंस्कारमान्द्ये सति निरोधसंस्कारः व्युत्थानधर्मिणा संस्कारेण अभिभूयते। अतो निरोधसमाधिभङ्गो माभूदिति निरोधसंस्काराभ्यासपाटवापेक्षा भवति।

उपर्युक्तेन पर्यालोचनेनैतत् सुस्पष्टं यदेते त्रयः परिणामाः समाधिसम्पन्नस्य चित्तस्य परिणामाः सन्ति। साधनाक्रमे समाधिपरिणामेन चित्तमेकाग्रतापरिणाम-योग्यं भवति। चित्तं पूर्णरूपेणैकाग्रतावस्थां च प्राप्नोति। एकाग्रतापरिणामेन च चित्तं निरोधपरिणामयोग्यं भवति। चित्तस्य प्रशान्तवाहिता भवति। एतावता एते त्रयः परिणामाः साधनाक्रमे उपकार्योपकारकभावेन विराजन्त इति वक्तुं शक्यते। एष एव सम्बन्धः एतेषां चित्तधर्मिणि जायमानानां परिणामानाम्।

इदानीमेतेषां समाध्येकाग्रतानिरोधपरिणामानां धर्मलक्षणावस्थापरिणामैः सह कः सम्बन्ध इति विचार्यते। सूत्रकारेण प्रथमं 'व्युत्थाननिरोधसंस्कारायोरभि-भवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः'[२३] इति सूत्रेण निरोधपरिणामः, तदनन्तरं 'सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः' इति सूत्रेण समाधि-परिणामः, ततश्च 'ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रता-परिणामः' इति सूत्रेणैकाग्रतापरिणामः प्रोक्तः। तदनन्तरम् 'एतेन भूतेन्द्रियेषु धर्मलक्षणावस्था-परिणामा व्याख्याताः' इति सूत्रेण अतिदेशद्वारा धर्मलक्षणावस्था-परिणामा व्याख्याताः। अतिदेशो नाम इतरधर्मस्य इतरस्मिन् प्रयोगाय आदेशः। अथवा

अन्यत्रैव प्रणीताया कृत्स्नाया धर्मसंहतेः।
अन्यत्र कार्यतः प्राप्तिरतिदेशः स उच्यते।।

प्रसङ्गेऽस्मिन् अतिदेशः कथं वर्तते इति विचारेणैवैतेषां परिणामानां परस्परं सम्बन्धविवेकः स्यात्।

अवस्थितस्य धर्मिणः पूर्वधर्मस्य तिरोभावे तत्र धर्मन्तरस्य प्रादुर्भावो धर्मपरिणाम इत्युच्यते। स च धर्मपरिणामो 'व्युत्थाननिरोधसंस्कारयोरभिभव-प्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः' इति सूत्रे चित्तधर्मिणो व्युत्थानसंस्काराणामभिभवे निरोधसंस्काराः प्रादुर्भवन्तीत्युक्त्वा अतिदिष्टः।

एवमेव अवस्थितस्य धर्मस्यानागतादिलक्षणत्यागपूर्वकं वर्तमानादिलक्षण-प्राप्तिर्लक्षणपरिणाम इत्युच्यते। सोऽपि लक्षणपरिणामः उपर्युक्ते सूत्रे विद्यमानाभ्या-मभिभवप्रादुर्भावशब्दाभ्यां प्रोक्तः। यतो हि लक्षणपरिणामे अनागतादिलक्षणस्य परित्यागः वर्तमानादेः प्रादुर्भाव एव भवति।

एवमेव चित्तधर्मिणो निरोधक्षणेषु निरोधसंस्काररूपाणां धर्माणां बलवत्ता व्युत्थानसंस्काररूपाणां धर्माणां च दुर्बलता भवति। अयमेव वर्तमानलक्षणकधर्माणां बलवत्ताबलवत्त्वरूपः अवस्थापरिणामः।

तदित्थं निरोधपरिणामे त्रयोऽपि धर्मलक्षणावस्थापरिणामा अनुस्यूताः सन्ति। त्रिष्वपि परिणामेषु सद्रूपेण विद्यमानस्य चित्तधर्मिणो व्युत्थाननिरोधसंस्कार-रूपाणां धर्माणां क्रमशः अभिभवप्रादुर्भावौ धर्मपरिणामः। स च धर्मिणो धर्मरूपसम्बन्धिभेदात्। लक्षणपरिणामोऽपि धर्माणां लक्षणरूपसम्बन्धिभेदाद् भवति। एवमेवावस्थापरिणामोऽपि लक्षणानामवस्थारूपसम्बन्धिभेदाद् भवति, न तु वास्तविकधर्मिणः रूपेण इति शम्।

## सन्दर्भ सूची–


१. व्यासभाष्यम्, पातञ्जलयोगसूत्रम्, ३/१३.
२. युक्तिदीपिका, सांख्यकारिका, ९.
३. युक्तिदीपिका, सांख्यकारिका, ९.
४. पातञ्जलयोगसूत्रम्, ३/१३.
५. व्यासभाष्यम्, पा.यो.सू., ३/१३.
६. तत्त्ववैशारदी, पा.यो.सू., ३/१३, पृ. २१४.
७. योगवार्त्तिकम् , पा.यो.सू., ३/१३, पृ. २९४.
८. तत्त्ववैशारदी, पा.यो.सू., पृ. २९७.
९. तत्त्ववैशारदी, पा.यो.सू., पृ. २९४-९५.
१०. योगवार्त्तिकम्, पा.यो.सू., पृ. २९६.
११. योगवार्त्तिकम्, पा.यो.सू. ३/१३, पृ. ३१६.
१२. तत्त्ववैशारदी, पा.यो.सू., १/१३, पृ. २९७.
१३. व्यासभाष्यम्, पा.यो.सू., १/१३.
१४. व्यासभाष्यम्, पा.यो.सू., १/१३.
१५. योगवार्त्तिकम्, पा.यो.सू., १/१३, पृ. ३०१.
१६. तत्त्ववैशारदी, पा.यो.सू., ३/१४, पृ. ३०८.
१७. पातञ्जलयोगसूत्रम्, ३/१४.
१८. तत्त्ववैशारदी, पा.यो.सू., ३/१४, पृ. ३०८.
१९. योगवार्त्तिकम्, पा.यो.सू., ३/१४, पृ. ३०८.
२०. 'सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः' पा.यो.सू., ३/११.
२१. पा.यो.सू., ३/१२.
२२. पा.यो.सू., ३/९.
२३. पा.यो.सू., ३/९.

# नव्यन्यायविचारपद्धत्या सम्बन्धस्वरूपविमर्शः

न्यायवैशेषिकसम्प्रदाये ये तावत् पदार्थाः स्वीकृताः सन्ति, न तेषु पदार्थेषु सम्बन्ध इति कृत्वा कश्चन विभागः क्रियते, परन्तु विविधाः सम्बन्धाः स्वीकृताः सन्ति न्यायवैशेषिकपरम्परायाम्। यथा समवायः, संयोगः, स्वरूपम्, कालिक-सम्बन्धः, तादात्म्यसम्बन्धः। स्वीकृताश्च सन्ति विविधाः सम्बन्धाः ये वृत्त्यनियामक-सम्बन्धतया परिगणिताः, यथा स्वामित्वादयः सम्बन्धाः, परन्तु सत्यप्येवं सम्बन्ध इति कृत्वा पदार्थानां नास्ति कश्चनापि विभागः। कश्चन सम्बन्धो गुणेऽन्तर्भवति यथा संयोगः। कश्चन च सम्बन्धः गुणादौ नान्तर्भवति परन्तु अतिरिक्तपदार्थतया स्वीक्रियते, यथा समवायः। सम्बन्धविषये न्यायवैशेषिक-परम्परायां सम्यक्तया विचारः कृतो विद्यते। अस्मिन्नालेखे न्यायवैशेषिकपरम्परायां सम्बन्धस्य स्वरूपं कीदृशं स्वीक्रियते, किमर्थं च तथा स्वीक्रियते एतदेव सर्वं विविच्यते।

आभाणक इव बहुधा श्रूयते– "सम्बन्धो हि सम्बन्धिभ्यां भिन्नः विशिष्टप्रतीतिनियामकः"। यथा नागेशभट्टेन परमलघुमञ्जूषायां प्रोच्यते– "सम्बन्धो हि सम्बन्धिद्वयभिन्नत्वे सति, द्विष्ठत्वे च सति आश्रयतया विशिष्टबुद्धिनियामकः"[1] परन्तु विचारशीलाः नैयायिकास्तावत् नैतत् स्वीकुर्वन्ति। तथा हि ते पृच्छन्ति यत् कस्यचिदपि सम्बन्धस्य कथं द्विष्ठत्वं स्यात्? द्विष्ठत्वमपि केनचित् सम्बन्धेनैव स्यात्। न कश्चनापि सम्बन्धो एकेन सम्बन्धेन कुत्रचित् द्वयोः अधिकरण-योस्तिष्ठति। यथा संयोगसम्बन्धस्तावत् सम्बन्धिद्वयभिन्नो भवति, द्विष्ठो भवति, विशिष्टबुद्धिनियामकश्च भवति। तथाहि घटः भूतले संयोगेन सम्बन्धेन तिष्ठति। संयोगसम्बन्धो घटभूतलाभ्यां भिन्नो भवति, घटभूतले द्रव्ये भवतः, संयोगश्च गुणो भवति। सम्बन्धिद्वयभिन्नत्वं विद्यते संयोगे। विशिष्टबुद्धिरपि नियम्यते तेन संयोगसम्बन्धेन घटे भूतले च उभयत्र संयोगस्य स्थितिरपि विद्यते। परन्तु यदि विविच्यते तदा ज्ञायते यत् वस्तुतः संयोगो न भूतले घटे च एकेन सम्बन्धेन विद्यते। यतो हि संयोगस्य भूतले अनुयोगित्वं सम्बन्धः, घटे च प्रतियोगित्वम्। येन केनापि सम्बन्धेन यदि द्विष्ठत्वं निवेश्यते चेत् तर्हि सर्वेषामपि न केवलं द्विष्ठता भविष्यति अपितु अनेकनिष्ठता अपि भविष्यति। तथा हि य एव संयोगसम्बन्धः अनुयोगितासम्बन्धेन भूतले प्रतियोगितासम्बन्धेन च घटे विद्यते। स एव संयोगसम्बन्धः कालिकादिसम्बन्धेनान्यत्रापि विद्यते। अतो लक्षणे न

द्विष्ठत्वं प्रवेशनीयम्। यद्यपि संयोगः समवायसम्बन्धेन द्विष्ठः, समवायश्च स्वरूपसम्बन्धेन द्विष्ठः, तथापि तादात्म्यादीनां तु द्विष्ठत्वं दुर्वचमेव। विषयतादीनामपि द्विष्ठत्वं तथा न सम्भवति।

यदि च द्विष्ठत्वं विनैव उपर्युक्तं लक्षणं स्वीक्रियते, तर्हि नैतदपि सम्यक्। यतो हि सुस्पष्टमेव आत्माश्रयो दोषो विद्यते लक्षणेऽस्मिन्। सम्बन्धस्य लक्षणं क्रियते, सम्बन्धिनश्च लक्षणे प्रवेशः कृतः। सम्बन्धी च सम्बन्धवानेव भवति। तथा च आत्माश्रयः, सम्बन्धलक्षणस्य सम्बन्धघटितत्वात्। यद्यपि अयमात्माश्रय-दोषोऽनया रीत्या वारयितुं शक्यते, लक्षणे परिष्कारः कर्तुं शक्यते– "स्वप्रतियोग्यनु-योगिभिन्नत्वे सति विशिष्टप्रतीतिनियामकत्वं सम्बन्धस्य लक्षणम्"। एवं लक्षणे परिष्कृते नास्ति आत्माश्रयो दोषः। अस्मिन् लक्षणे न सम्बन्धो निविष्टः किन्तु प्रतियोग्यनुयोगिनौ निविष्टौ। यद्यपि प्रतियोगिताऽनुयोगिते अपि सम्बन्धावेव भवतः। परन्तु न तयोर्निवेशः सम्बन्धत्वेन कृतः, किन्तु प्रतियोगितात्वेन अनुयोगितात्वेन निवेशः कृतः। अस्मात् कारणात् नात्माश्रयो भवति। यदि कथञ्चन सम्बन्धत्वेन प्रतियोगितानुयोगितयोः प्रवेशो लक्षणेऽभविष्यत् तदा आत्माश्रयो दोषो अभविष्यत्। परन्तु नैवमस्ति। परन्तु नैवं परिष्कृतमप्येतल्लक्षणं साधु भवति। लक्षणे अव्याप्त्यतिव्याप्त्यसम्भवानामभावोऽपेक्ष्यते। परन्तु अस्मिन् लक्षणे अव्याप्तिदोषो विद्यते। तथा हि न सर्वे सम्बन्धाः प्रतियोग्यनुयोगिभिन्नाः भवन्ति। यदि हि सर्वे सम्बन्धाः प्रतियोग्यनुयोगिभिन्नाः स्युस्तदा तु अनवस्था स्यात्। यथा घटभूतलयोः सम्बन्धो विद्यते संयोगसम्बन्धः। परन्तु संयोगसम्बन्धो प्रतियोग्यनुयोगिभिन्नो भवति। तद्विषयिण्यपि विशिष्टबुद्धिर्भवति– 'घटः संयुक्तः' इति। अत्र संयोगस्य घटे कश्चन सम्बन्धोऽवश्यं स्यात्, स च प्रतियोग्यनुयोगि-भिन्नश्च स्यात्। स च सम्बन्धः समवायः। तत्रापि भवति प्रतीतिः संयोगः घटसमवेतः' इति। तर्ह्यत्रापि संयोगसमवाययोर्मध्ये कश्चन सम्बन्धो भवेत्। अन्यथा कथं स्यात् विशिष्टप्रतीतिः? कश्चासौ सम्बन्धः द्वयोरनयोः संयोगसमवाययोर्मध्ये? यदि सः सम्बन्धोऽपि प्रतियोग्यनुयोगिभिन्नः स्यात्तर्हि तस्य सम्बन्धस्यापि भानार्थं किमप्यपेक्षितं स्यात् सम्बन्धान्तरम्। पुनरपि च सम्बन्धान्तरमिति निश्चयेन अनवस्था भवेत्। अप्रामाणिकानन्तसम्बन्धकल्पनायाः कुत्रापि विश्रान्तिर्न स्यात्। अत एव नैयायिकाः वदन्ति यत् सर्वत्र सम्बन्धानां प्रतियोग्यनुयोगिभिन्नत्वामावश्यकं न भवति। कुत्रचित् प्रामाणिकव्यवहारस्थले भवेन्नाम परन्तु अन्यत्र तु प्रतियोग्यनुयोगिस्वरूप एव सम्बन्धः स्वीक्रियते। स एव च सम्बन्धः स्वरूपसम्बन्ध इतिनाम्ना अपि व्यपदिश्यते। अत एव यदि सम्बन्धलक्षणे प्रतियोग्यनुयोगिभिन्नत्वं निवेश्यते तदा स्वरूपादिसम्बन्धे अव्याप्तिः स्यात्। स्वरूपसम्बन्धस्य प्रतियोगिरूपत्वात् अनुयोगिरूपत्वाद्वा स्वरूपसम्बन्धे प्रतियोग्यनुयोगिभिन्नत्व-

स्याभावात्। बहुतरस्थलेषु स्वरूपसम्बन्धं विना निर्वाहासम्भवात्, स्वरूपसम्बन्धो न सम्बन्धः इति तु न वक्तुं शक्यते। अस्मात् कारणात् सम्बन्धस्य लक्षणं संवृत्तं केवलं विशिष्टप्रतीतिनियामकत्वम्।

गङ्गेशोपाध्यायास्तु अविशिष्टव्यावृत्तविशिष्टधीनियामकत्वं सम्बन्धस्य लक्षणं विद्यते इति प्रतिपादयन्ति।[२] परन्तु गङ्गेशोपाध्यायस्य व्याख्यातारो न स्वीकुर्वन्ति लक्षणमिदम्। तथा हि प्रकाशटीकाकारो रुचिदत्तमिश्रो ब्रवीति यत् अविशिष्टव्यावृत्त-विशिष्टधीनियामकत्वं कथं स्यात् प्रमेयत्वादीनां सम्बन्धेषु? सर्वस्यापि प्रमेयत्वात् न कस्मादपि व्यावृत्तिः कर्तुं शक्यते।[३] प्रमेयातिरिक्तः कश्चनापि नास्त्येव तर्हि केन व्यावृत्तिर्बोधिता भवेतः? अत एव रुचिदत्तमिश्रो गङ्गेशोपाध्यायस्य मतं खण्डयति। तत्त्वचिन्तामणेः आलोकनाम्न्याः व्याख्यायाः लेखकः जयदेवमिश्रेत्य-परनामा पक्षधरमिश्रः गङ्गेशोपाध्यायग्रन्थस्य व्याख्यां भिन्नया पद्धत्या करोति। स एवं वदति यत् अविशिष्टव्यावृत्तविशिष्टधीनियामकत्वमित्यत्र अविशिष्टपदम-विशिष्टधीपरम्। यथाश्रुते अविशिष्टपदे गृहीते तु अन्योन्याश्रयो भवेत्। अविशिष्टधियस्तु विशेषणत्वागोचरबुद्धित्वेन व्याख्या कर्त्तव्या। अविशिष्टधीव्या-वृत्तत्वं तु अविशिष्टधियोऽजनकत्वम्। नियामकत्वं नाम जनकत्वम्। तथा च अविशिष्टबुद्ध्यजनकत्वे सति विशिष्टबुद्धिजनकत्वं सम्बन्धस्य लक्षणं भवति।[४] परन्तु नेदं पक्षधरमिश्रस्य मतमपि रुचिदत्तमिश्रः स्वीकरोति। सः वदति यत् अस्मिन् लक्षणे स्वीकृतेऽपि अतीन्द्रियसंयोगे स्वरूपसम्बन्धे चाव्याप्तिर्भविष्यति। तत्र कारणमिदमस्ति यत् अतीन्द्रियसंयोगे परमाणुद्वयसंयोगे आकाशपरमाणुसंयोगे चास्य लक्षणस्य समन्वयो नैव भविष्यति। यतो हि प्रत्यक्षं प्रत्येव केवलं विषयस्य कारणता स्वीक्रियते, नानुमानादिकं प्रति। परमाणोः प्रत्यक्षायोग्यतया आकाशस्य च प्रत्यक्षायोग्यतया परमाणुद्वयसंयोगस्यापि प्रत्यक्षं नैव कर्तुं शक्यते, न वा परमाण्वाकाशसंयोगस्यैव प्रत्यक्षं कर्तुं शक्यते। अस्मात् कारणात् परमाणुद्वयसंयोगे परमाण्वाकाशसंयोगे च विशिष्टबुद्धिजनकत्वं नैव भवितुमर्हति। यदि परमाणुद्वयसंयोगस्य प्रत्यक्षं भवेत, तर्हि परमाण्वाकाशसंयोगे विशिष्टबुद्धिजनकता आगच्छेत्। एवमेव यदि परमाण्वाकाशसंयोगस्य प्रत्यक्षं भवेत्, तर्हि परमाण्वाकाश-संयोगे विशिष्टबुद्धिजनकता आगच्छेत्। परन्तु नैवमस्ति। एतादृशानां संयोगानामतीन्द्रियतया प्रत्यक्षायोग्यत्वेन विशिष्टबुद्धिजनकत्वं न कथञ्चनापि सम्भवति। स्वरूपसम्बन्धस्यापि न कदाचन प्रत्यक्षं भवति। किन्तु स्वरूपसम्बन्धो-ऽनुमीयते। अस्मात् कारणात् स्वरूपसम्बन्धेऽपि विशिष्टबुद्धिजनकत्वं नैवागमिष्यति। या या विशिष्टबुद्धिः स्वरूपादीन् सम्बन्धान् विषयीकरोति सा सर्वा अपि बुद्धिरप्रत्यक्षा एव भवति। न काचनापि तादृशी बुद्धिः प्रत्यक्षा भवति।

अप्रत्यक्षायां विशिष्टबुद्धौ च विषयस्याकारणत्वात् स्वरूपादिसम्बन्धे विशिष्टप्रतीतिजनकत्वं न कदाचिद् भविष्यति। तथा च सुतरां तेषु अतीन्द्रियसंयोगादिषु स्वरूपादौ च सम्बन्धे पक्षधरमिश्रकृतस्य लक्षणस्याव्याप्तिर्भवति। तथैव च कालिकादौ सम्बन्धे सुतरामव्याप्तिः स्यात्। तत्र कारणमिदमस्ति यत् कालस्वरूपः सम्बन्धः कालिकः सम्बन्धः प्रोच्यते। कालस्य कार्यमात्रं प्रति कारणत्वात् कालस्य न केवलं विशिष्टप्रत्ययजनकत्वं भविष्यति, किन्तु अविशिष्टप्रतीतिजनकत्वमपि।[५] कालस्यैव च कालिकसम्बन्धात्मकतया द्वयमपि विद्यते, अविशिष्टप्रतीतिजनकत्वं विशिष्टप्रतीतिजनकत्वञ्च। अस्मात् कारणात् सुतरां कालिकसम्बन्धेऽपि अव्याप्तिर्भवेत्।

अनन्तरञ्च रुचिदत्तमिश्रः स्वकीयं मतं प्रस्तौति यत् विशेषणधीजन्यज्ञानासाधारणविषयत्वं सम्बन्धस्य लक्षणम्।[६] अस्यायमभिप्रायो भवति यत् विशेषणज्ञानेन जन्यस्य ज्ञानस्यासाधारणविषयो यः भवति, स एव सम्बन्धः। विशेष्यस्य ज्ञानं तु पूर्वमेव जातम्। विशेषणस्य ज्ञानेन तस्य विशेषणस्य सम्बन्धो सविकल्पके ज्ञाने भासते। अत एव सम्बन्धे विशेषणधीजन्यज्ञानासाधारणविषयत्वमायाति। प्रकाशकृतां रुचिदत्तमिश्राणां मतेन विशिष्टप्रतीतिनियामकत्वमेव नैव सम्बन्धस्य लक्षणं भवितुमर्हति, किन्तु विशेषणधीजन्यज्ञानासाधारणविषयत्वं सम्बन्धस्य लक्षणम्।

परन्तु सम्बन्धस्य नैतल्लक्षणं रुचिदत्तमिश्रस्य व्याख्याकर्त्रे रामकृष्णाध्वरिणे रोचते। रामकृष्णाध्वरिः उक्तस्य प्रकाशग्रन्थस्य व्याख्यां कुर्वन् तत्र किञ्चिच्चिन्ताबीजं प्रदर्शयति। सः वदति यत् विशेषणज्ञानं तावत् भासमानवैशिष्ट्यप्रतियोगिज्ञानमेव। तत्र कारणमिदं विद्यते यत् भासमानवैशिष्ट्यस्य प्रतियोगित्वमेव प्रकारत्वं विशेषणत्वं वा प्रोच्यते। भासमानं वैशिष्ट्यं तावत् न सम्बन्धाद्भिन्नं भवति। अस्मात् कारणात् यावत् विशेषणत्वं न ज्ञायते, न तावत् सम्बन्धत्वं ज्ञातुं शक्यम्। यावच्च सम्बन्धत्वं न ज्ञायते, तावच्च न विशेषणत्वं ज्ञातुं शक्यम्। तथा च सुस्पष्टमेव अन्योन्याश्रयो दोषः आपतति।[७] द्वितीया समस्या अपि विद्यते। तथा हि विशेषणधीजन्यज्ञानासाधारणविषयत्वं सम्बन्धस्य लक्षणं प्रोक्तम्। अस्मिन् सम्बन्धलक्षणे जन्यत्वं निविष्टं विद्यते। जन्यत्वञ्च सम्बन्धेन घटितं नियमं विषयीकरोतीत्यन्योन्याश्रयो दोषो भवति।[८] अत एव रामकृष्णाध्वरिः सम्बन्धस्य दुर्वचत्वं विद्यत इति सिद्धान्तयति।[९]

दीधितिकारो रघुनाथशिरोमणिः, तद्व्याख्याकारौ जगदीश-गदाधरावपि सम्बन्धस्य विषये चर्चां कुर्वन्ति। सिद्धान्तलक्षणप्रकरणे रघुनाथो वदति यत्

"दर्शितञ्च नियमाघटितमपि सम्बन्धत्वम्"[१०]। तत्र च प्रकरणं विद्यते व्याप्तेः सिद्धान्ततः स्वरूपनिरूपणस्य। व्याप्तिश्च या निरुक्ता तस्यां व्याप्तौ सम्बन्धानामपि निवेशः कृत एव। सिद्धान्तव्याप्तिघटके सामानाधिकरण्येऽपि सम्बन्धस्य निवेशः करणीय एव। तत्रेयं समस्या विद्यते– विशिष्टप्रतीतिनियामकत्वं सम्बन्धस्य लक्षणं स्वीक्रियते चेत् तर्हि नियामकत्वं नाम जनकत्वं भवति। जनकत्वञ्च नियतपूर्ववर्तित्वं भवति। नियतपूर्ववर्तित्वे नियतत्वं निविष्टमस्ति। नियतत्वञ्च व्याप्तिगर्भमेव भविष्यतीति। अस्मात् कारणात् आत्माश्रयः भविष्यति। तथैव च रघुनाथग्रन्थं व्याख्यातुं प्रवृत्तो जगदीशभट्टाचार्यो प्रतिपादयति।[११] इमां समस्यां समाधातुं कीदृशं सम्बन्धस्य लक्षणमिति प्रश्नं जगदीशभट्टाचार्यः समादधाति यत् विशिष्टबुद्धौ तिस्रो विषयताः भवन्ति, प्रकारता, विशेष्यता, संसर्गता च। प्रकारताख्या विषयतैव विशेषणता अप्युच्यते। तथा च विशेषणता-विशेष्यताभिन्न-विषयत्वमेव सम्बन्धत्वम्। यस्मिन् विशेषणताभिन्ना अथ च विशेष्यताभिन्ना विषयता भवति, स एव सम्बन्ध इति प्रोच्यते।[१२]

परन्तु जगदीशभट्टाचार्यस्येदं समाधानं न सन्तोषमावहति। गदाधरस्तु भिन्नां पद्धतिमाश्रयते। सः समस्याः गम्भीरतया समुपस्थापयति। विशिष्टप्रतीति-नियामकत्वं सम्बन्धस्य स्वरूपं न भवितुमर्हति, तत्र कारणमिदमस्तीति यत् अतीन्द्रियसम्बन्धे जनकत्वरूपं नियामकत्वं नैव सम्भवति।[१३] इयं समस्या प्रकाशकर्त्रा रुचिदत्तमिश्रेणापि समुपस्थापिता, उपरि च मया प्रतिपादिताऽपि। यदा तु जनकत्वरूपं नियामकत्वं न निवेश्यते, किन्तु विशिष्टप्रतीतिविषयत्वरूपं नियामकत्वं निवेश्यते, तर्हि सम्बन्धस्य लक्षणं सर्वत्रापि प्रमेये अतिव्याप्तं भविष्यति।[१४] यदा तु जगदीशभट्टाचार्यदिशा परिष्क्रियते, प्रोच्यते च– विशेष्यतान्यतत्प्रकारतानिरूपितविषयत्वं सम्बन्धस्य लक्षणम्।[१५] तर्हि सम्बन्धस्यास्मिन् लक्षणेऽपि सन्ति विविधाः दोषाः। तथा हि यदा संयोगसम्बन्धेन द्रव्यत्वस्य कुत्रचित् स्थले प्रकारतया भानं भ्रमात्मकं जातम्। तर्हि अत्र संयोगसम्बन्धो द्रव्यत्वस्य सम्बन्ध इति स्वीकारापत्तिः। तत्र कारणमिदमेव यत् भवता तु प्रोक्तमेव यत् विशेष्यतान्यतत्प्रकारतानिरूपितविषयत्वं तत्सम्बन्धत्वम्। तच्च संयोगसम्बन्धे विद्यत एव।[१६] यदा तु प्रोच्यते यत् न केवलं विशेष्यतान्यतत्प्रकारतानिरूपितविषयत्वं तत्सम्बन्धत्वम्, किन्तु विशेष्यतान्यतत्प्रकारतानिरूपित-प्रमीयविषयत्वं तत्सम्बन्धत्वम्। यदा तु द्रव्यत्वस्य संयोगसम्बन्धेन भ्रमो जातस्तदा विशेष्यतान्यतत्प्रकारतानिरूपितविषयत्वस्य संयोगसम्बन्धे सत्त्वेऽपि विशेष्यता-न्यतत्प्रकारतानिरूपितप्रमीयविषयत्वं नास्तीति नातिव्याप्तिर्भविष्यतीति प्रोच्यते। तर्हि नैतदपि साधु। यतो हि का नाम प्रमा? प्रमा हि तदेव ज्ञानं प्रोच्यते यस्मिन्

ज्ञाने तत्सम्बन्धेन तद्वति तत्प्रकारकत्वं भवति। तथा च प्रमात्वं नाम तत्सम्बन्धानुयोगिविशेष्यकत्वावच्छिन्नतत्प्रकारकत्वमेव भवति। अस्मात् कारणात् अस्मिन् लक्षणेऽपि आत्माश्रयो दोषः आयाति।[१७]

तर्हि किं नाम सम्बन्धत्वम्? अत्र गदाधरः प्रतिपादयति यत् न सामान्यतः सम्बन्धत्वं निर्वक्तव्यम्। किन्तु तत्सम्बन्धत्वम्। तच्च तत्प्रतियोगिकत्वविशेष एव। तथैव च तदनुयोगिकत्वविशेष एव तत्र सम्बन्धत्वम्।[१८] तथा च तत्सम्बन्धत्वादिकमनयैव रीत्या व्याख्येयम्।

न्यायसिद्धान्तमुक्तावल्याः दिनकर्याः रामरुद्रीव्याख्यायां तु सांसर्गिविषयतावत्त्वमेव सम्बन्धत्वमिति सम्बन्धस्य निर्वचनं क्रियते।[१९]

मह्यं तु गदाधरपक्ष एव रोचते। सांसर्गिविषयतावत्त्वं सम्बन्धत्वमिति कथने सम्बन्धस्य परिचयो न जायते। तत्प्रतियोगिकत्व-तदनुयोगिकत्वादिकन्तु न सम्बन्धत्वेन निविश्यते इति न दोषः। प्रतियोगित्वादिकं च न स्वरूपसम्बन्धविशेषः किन्तु पदार्थान्तरम्।

## संदर्भ सूत्री–

१. द्रष्टव्या, परमलघुमञ्जूषा, पृ. १५.

२. सम्बन्धश्चाविशिष्टव्यावृत्तविशिष्टधीनियामकः। पृ. ६६३, तत्त्वचिन्तामणिः प्रत्यक्षखण्डः, प्रकाश-न्यायशिखामणिव्याख्यायुतः, प्रकाशकः- केन्द्रीयसंस्कृतविद्यापीठम्, तिरुपतिः १९७३.

३. तच्चिन्त्यम्। प्रमेयत्वादिसम्बन्धेऽव्याप्तेः न हि तद्विषया धीर्व्यावृत्तधीहेतुः। पृ.६६३, तत्रैव प्रकाशे।

४. अन्ये तु अविशिष्टपदमविशिष्टधीपरम्। अविशिष्टस्यासम्बद्धवचनस्य यथाश्रुतेऽन्योन्याश्रयग्रासात्। अविशिष्टधियस्तु विशेषणत्वागोचरबुद्धित्वेन सुवचत्वात्। तद्व्यावृत्तत्वं च तदजनकत्वम्। नियामकत्वं तु तज्जनकत्वम्। तथा चाविशिष्टबुद्ध्यजनकत्वे सति विशिष्टबुद्ध्यजनकत्वं सम्बन्धत्वमित्याहुः। पृ. ६६४, तत्रैव प्रकाशे।
अत्र न्यायशिखामणिव्याख्यां प्रोच्यते- उपाध्यायमतं निराकृत्य जयदेवमतमाह- अन्ये त्विति। अस्मात् कारणात् प्रतीयते यत् इदं जयदेवमिश्रस्य मतम्। आलोकव्याख्या तु न प्रकाशिता अस्य प्रकरणस्य अद्यावधि।

५. तदपि चिन्त्यम्। अतीन्द्रियसंयोगे स्वरूपसम्बन्धे चाव्याप्तेः। तद्विषयकबुद्धेरनुमित्यादिरूपतया विषयाजन्यत्वात्। कालादेरपि स्वरूपसम्बन्धतया तत्राव्याप्तेश्च। तस्य कार्यमात्रजनकतया अविशिष्टबुद्धेरपि जनकत्वात्। पृ. ६६४, तत्रैव प्रकाशे।

६. तस्माद्विशेषणधीजन्यज्ञानासाधारणविषयत्वं तत्त्वमिति बोध्यम्। तत्रैव प्रकाशे।

७. अत्रेदं चिन्त्यम्, विशेषणज्ञानमपि भासमानवैशिष्ट्यप्रतियोगिज्ञानमित्यन्योन्याश्रयः। तत्रैव न्यायशिखामणौ।

८. तथापि निरुक्तं सम्बन्धत्वं जन्यत्वघटितम्, तच्च सम्बन्धघटितनियमगर्भमित्यात्माश्रयः। तत्रैव न्यायशिखामणौ। (अत्र- 'आत्माश्रयः' इत्यस्य स्थाने 'अन्योन्याश्रयः' इति पाठः सम्यक् प्रतिभाति। तथैव च टिप्पणे 'ग' पाण्डुलिप्यामप्युल्लिखितं विद्यते।)
९. ततश्च दुर्वचं सम्बन्धत्वम्। तत्रैव न्यायशिखामणौ।
१०. अन्ते सिद्धान्तलक्षणप्रकरणदीधितौ।
११. ननु स्वरूपसम्बन्धात्मकप्रतियोगित्वस्य विशिष्टधीजनकत्वरूपसम्बन्धताघटकनियमघटितत्वादात्माश्रयत्वमत आह- प्रतियोगित्वादिरिति।
अत्र दीधितिग्रन्थो विद्यते- प्रतियोगित्वादिश्च स्वरूपसम्बन्धविशेषो न सम्बन्धत्वेन निविष्टः। सामानाधिकरण्येऽपि सम्बन्धः संयोगत्वादिनैव निविश्यते। द्रष्टव्यम्- पृ. १८६-१८७, सिद्धान्तलक्षणम्, जागदीशी-गङ्गायुतम्, चौखम्भासंस्कृतसंस्थानम्, वाराणसी, सन् १९९०.
१२. विशेष्यविशेषणत्वान्यविशिष्टधीविषयत्वमेव सम्बन्धत्वमिति भावः। पृ. १८७, सिद्धान्तलक्षणम्।
१३. अतीन्द्रियसम्बन्धे जनकत्वरूपनियामकत्वासम्भवात्। पृ. ३७०, अनुमानगादाधर्याम्, सिद्धान्तलक्षणप्रकरणे।
१४. तत्प्रतीतिविषयत्वरूपनियामकत्वनिवेशे व्याप्तेरेवानन्तर्भावात् प्रमेयमात्रेऽतिप्रसङ्गाच्च। तत्रैव।
१५. यद्यपि जगदीशेन नैवं सम्बन्धस्य लक्षणं कृतम्, तथापि विशेष्यविशेषणत्वान्यविशिष्टधीविषयत्वमत्रैव पर्यवसितं भवति।
१६. न च विशेष्यतान्यतत्प्रकारतानिरूपितविषयतया एव विवक्षणीयतया नातिप्रसङ्ग इति वाच्यम्, एवमपि संयोगादिना द्रव्यत्वादिभ्रमविषयतामादाय तस्यापि तत्सम्बन्धत्वापातात्।
१७. न च विषयतायां प्रमाप्रतियोगिकत्वनिवेशान्नायमतिप्रसङ्ग इति वाच्यम्, प्रमात्वस्य तत्सम्बन्धानुयोगिविशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपतया सम्बन्धत्वघटितत्वात्। तत्रैव, पृ. ३७०-३७१.
१८. तत्प्रतियोगिकत्वविशेष एव तत्सम्बन्धत्वम्, न तु विशिष्टबुद्धिनियामकत्वम्। ...एवं तदनुयोगिकत्वविशेष एव तत्र सम्बन्धत्वमिति भावः। तत्रैव, पृ. ३७०-३७१.
१९. सम्बन्धत्वञ्च सांसर्गिविषयतावत्त्वमेव। पृ. ८७, रामरुद्री। कारिकावली न्यायसिद्धान्तमुक्तावली-दिनकरी-रामरुद्रीयुता। चौ.सं.सी. आफिस, वाराणसी, १९८२.

# नैयायिकमते सम्बन्धविवृतिः

जनद्वयं वस्तुद्वयं वा येन सम्बद्ध्यते सः सम्बन्धः कथ्यते। सम्यक्रूपेण बन्धयति मेलयति इति सम्बन्धः इति सम्बन्धपदव्युत्पत्तिर्भवति। लोकव्यवहारेऽपि विवाहसंस्कारे स्त्रीत्पुरुषौ मिथः वैवाहिकसम्बन्धेन बध्नतः। अत्र स्त्रीपुरुषयोः पतिपत्नीभावसम्बन्धो दाम्पत्यरूपः प्रसिद्धोऽस्ति।

सम्बन्धलक्षणं लक्षयन् शास्त्रकारः कथयति 'सम्बन्धिद्वयभिन्नत्वे सति द्विष्ठत्वे सति आश्रयतया विशिष्टबुद्धिनियामकत्वं सम्बन्धत्वम्' इति।[1]

वस्तुस्वभावानुसारेण सम्बन्धस्य वैविध्यं मान्यमस्ति। यथा संयोगः समवायः सामानाधिकरण्यं विषयताप्रभृतयः सम्बन्धाः सन्ति। छात्रहस्ते यथा पुस्तकं संयोगसम्बन्धेन वर्तते। अयं संयोगसम्बन्धोऽनित्यश्चक्षुत्वगिन्द्रियग्राह्यत्वात् प्रत्यक्षोऽव्याप्यवृत्तिरनेकपिधश्च विद्यते। अयं संयोगसम्बन्धस्तौ मेलयति यौ युतसिद्धौ स्तः। अर्थात् एतस्य द्वावपि सम्बन्धिनौ पृथक् पृथगाश्रयवन्तौ गतिमन्तौ च स्तः। यावद्धस्ते पुस्तकं तावत् संयोगसम्बन्धो यदा च न तद् भवति तदा स सम्बन्धोऽपि न भवति। अनेन संयोगस्यानित्यत्वं सिध्यति। वृक्षे कपिरित्युदाहरणे यद्यपि वृक्षकप्योः शाखावच्छिन्ने स्थाने कपिसंयोगः, मूलावच्छिन्नस्थाने च कपि संयोगाभावादयमव्याप्यवृत्तिरपि विद्यते। अव्याप्यवृत्तित्वस्य वैशिष्ट्यं यत् तादृशसम्बन्धो न सजातीयविरोधी भवति यस्मिन् काले प्रदेशे च कस्याप्येकस्य द्रव्यस्य संयोग, तत्र काले प्रदेशे चापरवस्तुसंयोगोऽपि भवितुमर्हति ज्ञानेच्छाप्रयत्नादयो नाव्याप्यवृति गुणेषु इत्थं भवन्ति। आश्रयाश्रयिभेदादयमनेक विधो भवित। किन्तु पुस्तकानि भिन्नभिन्नाश्रयेषु सत्त्वात् बहुत्र दृश्यते। अतः तस्य युतसिद्धत्वमपि सिध्यति। संयुक्तपदार्थयोश्चाक्षुषज्ञानेन प्रकाशाभावेऽन्धकारे च त्वगिन्द्रियेण ज्ञानेन सम्बन्धोऽयं प्रत्यक्षो भवति। तद्भिन्नेषु अयुतसिद्धवस्तुषु पदार्थेषु वा समवायसम्बन्धो भवति। अयं सम्बन्धः प्रत्यक्षायोग्योऽनुमान गम्योऽस्ति। अयं च नित्यः। अयुतसिद्धपदार्थद्वये परस्पराश्रितत्वात् स्वास्तित्वं लभते। यथा तन्तुपटुरूपावयवावयविनोः, घटकपालयोः, गुणगुणिनोः, ज्ञानात्मनोः, जलरसयोः, जातिव्यक्त्योः, घटत्वघटयोः इत्यादिषु समवायसम्बन्धो भवति।

अत्रावधेयमस्ति यन्न्यायदर्शनदृष्ट्या समवायसम्बन्धो द्रव्यगुणकर्मवृत्तिः सन् त्रिष्वपि समवायसम्बन्धस्याधेयतायाः सत्त्वात् तस्या निर्वाहकसम्बन्धः

स्वरूपसम्बन्धो विशेषणतासम्बन्धो वा भवति। स च समवायरूपं भूत्वापि सम्बन्धरूपेण किञ्चिद्भिन्न एव मन्यते। अत एव संयुक्तविशेषणतासम्बन्धेन समवायः प्रत्यक्षो मन्यते। तद्यथा–

"प्रत्यक्षं समवायस्य विशेषणतया भवेत्।"[२]

समवायनिरूपणप्रसङ्गे न्यायसिद्धान्तमुक्तावलीदिनकरीव्याख्यायां वैशेषिक दृष्ट्या उक्तमस्ति यत् वैशेषिकदृष्ट्या न कुत्रापि समवाय आधेयः। अतोऽवृत्ति रूपेण मान्योऽस्ति। अतो लौकिकसन्निकर्षासम्भवात् स न प्रत्यक्षविषयः।

समवायश्चानेको मन्यते "पृथिव्यां गन्धस्य समवायो न जले, इत्यादि प्रतीतेः समवायस्य नानात्वमिति नव्याः" इत्याद्युक्तवान् दिनकरीकारः।[३] संयोगसमवाययोरयमेक एव प्रमुखो भेदो नास्ति यत् संयोगो युतसिद्धेषु समवायश्चायुतसिद्धेषु तिष्ठति। किन्तु तदन्योऽपि भेदो दृश्यते यथा संयोगः स्वयमेव सम्बन्धिनोः समवायेन तिष्ठति। समवायसम्बन्धः स्वसम्बन्धिषु स्वरूपेणैव तिष्ठति नान्यं सम्बन्धमाश्रयति। स्वरूपसम्बन्धश्च स्वस्वसम्बन्धिरूपेण (विशेषणरूपेण विशेष्यरूपेण वा) अभिप्रेतोऽस्ति। किञ्च संयोगस्य सम्बन्धता संयोगत्वधर्मावच्छिन्ना भवति। किन्तुं समवायसंसर्गता न समवायत्वावच्छिन्ना भवति। अपि तु निरवच्छिन्नैव मान्या विद्यते। यद्यपि द्रव्यसमवायो रूपसमवायश्चादि-व्यवहारो विभिन्नरूपेण भवति तथापि स औपाधिकः। यथा कालस्यैकस्य वर्षमासपक्षरात्रिदिनादिव्यवहारो भवति। अत्रेदमपि वेदितव्यं यत् समवाय सम्बन्धघटितसामानाधिकरणमेवैकार्थसमवायपदेन विवक्षितम्। वस्तुद्वयस्यैकाधिकरणे सत्त्वे तयोर्मिथः सम्बन्ध एव एकार्थसमवायः कथ्यते। यथा तन्तुषु तन्तुरूपं पटे च तन्तवः समवायसम्बन्धेन वर्त्तन्ते। तेषां सम्बन्धोमिथः एकार्थसमवायो मन्यते।

वस्तुद्वयस्यैकाधिकरणवृत्तित्वमेव सामानाधिकरण्यसम्बन्धेन भवति। अतस्तस्यैकाधिकरणवृत्तित्वपदेन व्यवहारो भवति। ज्ञानं च विषये विषयता सम्बन्धेन, विषयश्च ज्ञाने विषयितासम्बन्धेन तिष्ठति। सम्बन्धो द्विविधः- वृत्तिनियामको वृत्यनियामकश्च। आधाराधेयबोधनिरूपकः सम्बन्धो वृत्तिनियामको भवति। यथा- संयोगः समवायः, दैशिकः कालिक स्वरूपसम्बन्धश्च। येन च सम्बन्धेन नाधाराधेयबोधो भवति स वृत्यनियामकसम्बन्धो कथ्यते। यथा- सामानाधिकरणं, विषयता, विषयिता, जन्यत्वं, जनकत्वं तादात्म्यादयोऽनन्ताः सन्ति। तत्र दैशिकस्परूपसम्बन्धश्च द्विविधो भवति- भावीयः (भावसम्बन्धी) अभावीयाश्च (अभावसम्बन्धी) चेत्येवं जातिभिन्ना समे धर्माः स्वधर्मिषु स्वरूपसम्बन्धेन वर्तन्ते। यथा प्रमेये प्रमेयत्वं तद्घटे तद्घटत्वं प्रतियोगिनि

प्रतियोगित्वम् समानाधिकरणे सामानाधिकरण्यं, अभावे अभावत्वं समवाये समवायत्वं, भावे भावत्वमिति भावीयसम्बन्धाः भवति। स्वाधिकरणे प्रत्येकमभावोऽभावीयस्वरूपसम्बन्धेन तिष्ठति। घटाभाववद् भूतलम् इत्यत्र स्वरूपसम्बन्धेन भूतले घटाभावो भवति। एतस्यापरं नाम विशेषणतासम्बन्धोऽस्ति। इदानीं घटः तदानीं घटः इत्यादिस्थलेषु तत्कालादिना सह घटस्य यः आधाराधेयभावो हि भासते। स च कालिकस्वरूपसम्बन्धः कालिकविशेषणता-सम्बन्धो वा कथ्यते। संयोगसम्बन्धविषये त्विदमुच्यते यदयं वृत्तिनियामको भवति।

किन्तु परमाणुद्वयस्य, आकाशपरमावोः आत्ममनःसंयोगादयश्च वृत्तिनियामका न भवन्ति। यद्यपि पार्थिवजलपरमाणुषु गुरूत्वं भवति तथापि प्रकृष्टगुरूत्वाभावात् मनसि सर्वथागुरूत्वाभावात् पतनाविरोधित्वात् नैव, वृत्तिनि यामकत्वं सम्पद्यते। वृक्षेण सह कपिसंयोगः पतनप्रतिबन्धकत्वात् वृत्तिनियामको भवति। अतः पतनाप्रतिबन्धको यः संयोगः सः वृत्यनियामकत्वमेवोपपादयति।

सम्बन्धविषये चेदमपि ध्येयं यत् यथा यस्याभावः स प्रतियोगी यस्मिन्नभावः स अनुयोगी भवति तथैव यस्य सम्बन्धः स प्रतियोगी यस्मिन् च सम्बन्धः स अनुयोगी भवति। यथा 'हस्ते पुस्तकमस्ति' इति वाक्ये हस्तपुस्तकयोः संयोग सम्बन्धे हस्तः सम्बन्धस्य अनुयोगी पुस्तकं च प्रतियोगी भवति। अतो हस्तानुयोगिक पुस्तकप्रतियोगिकसंयोगविशिष्टं पुस्तकम् इति बोधो भवति। इत्थमाधाराधेय भावतुल्यम् अनुयोगिप्रतियोगिभावस्यापि व्यवहारो भवति। समवाय सम्बन्धस्यानुयोगी समवायी, प्रतियोगी च समवेतः कथ्यते। यथा बुद्धिमान् पुरुषः इत्युक्ते पुरुषे बुद्धिः गुणत्वात् समवायसम्बन्धेन वर्त्तते। तेन पुरुषः समवायसन्बन्धस्य समवायी, बुद्धिश्च समवेता भवति। द्रव्यगुणकर्मसामान्य विशेषाः समवायसम्बन्धेन विशिष्टा भवन्ति। अर्थात् समवायसम्बन्धस्यानुयोगिनः प्रतियोगिनश्च भवन्ति। तत्रापि नित्यद्रयाणि केवलं समवायीनि भवन्ति। जातयो विशेषा समवेता एव भवन्ति। उत्पन्नद्रव्यसमूहो गुणाः कर्माणि च समवेतानि समवायीनि च भवन्ति। कार्यगतद्रव्यगुणकर्माणि समवेतानि भवन्ति। कारणद्रव्याणि कारणद्रव्यगतगुणकर्माणि समवायीन्यपि भवन्ति। इत्थं सम्बन्धविषये सामान्यविवेचनं भवितुमर्हति।

## संदर्भ सूत्री–

१. परमलघुमञ्जूषा शक्तिप्रकरणे।
२. मुक्तावली प्रत्यक्षखण्डे, क. ६१.
३. न्या. सिद्धान्तमु. व. प्रत्यक्षखण्डे दिनकरी टीका।

# न्यायदर्शने सम्बन्धविचारः

न्यायदर्शने तथा भारतीयदर्शने सम्बन्धस्य महत्स्थानं वर्तते। अतएव दर्शनशास्त्रस्यालोचनाकाले सम्बन्धस्यालोचनमतीवापेक्षते। सम्-पूर्वाकाद् बन्ध्-धातोर्घञ्प्रत्ययेन सम्बन्धशब्दो निष्पन्नो भवति। सम्बध्यते इति सम्बन्धः। अस्यार्थः संसर्गः। सम्यग्बन्धो यतः स सम्बन्धः। तथा चोक्तं व्युत्पत्तिवादग्रन्थे गदाधरभट्टाचार्येण- 'शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते।[1] सम्बन्धोऽस्यास्तीति सम्बन्धी। सम्बन्धस्य लक्षणन्तावत्सम्बन्धिभिन्नत्वे सति सम्बन्ध्याश्रितः। स्वभिन्नसम्बन्ध्याश्रितः स्वभिन्नप्रतियोगिकः पदार्थविशेषः। यथा– घटभूतलयोः संयोग एव सम्बन्धः। तथा प्रत्यक्षस्थल इन्द्रियार्थसन्निकर्षः सम्बन्धः। 'विशिष्टबुद्धौ विशेष्यविशेषणयोरन्तराले भासमानत्वम्', अथवा 'विशेष्यविशेषणातिरिक्तविशिष्टबुद्धिविषयत्वं सम्बन्धत्वमि'ति। अर्थाद्विशिष्टबुद्धौ विषयत्रयं भासते- विशेष्यम्, विशेषणम्, तयोः सम्बन्धश्च। विशिष्टबुद्धौ यो विशेष्यविशेषणातिरिक्तविषयः स सम्बन्धः। यत्सत्त्वे द्वयोः पदार्थयोर्विशेष्य-विशेषणभावः प्रतीयते स सम्बन्धः। यथा– घटभूतलयोः संयोगेन 'घटवद्भूतलम्' इति विशिष्टबुद्धिर्भवति। अतएव संयोग एव तयोः सम्बन्धः। 'बुद्धिमान् बालकः'- इति विशिष्टबुद्धौ बुद्धिबालकयोः सम्बन्धः समवायः।

सम्बन्धो द्विविधो भवति। वृत्तिनियामकः, वृत्त्यनियामकश्च। येन सम्बन्धेन द्वयोः पदार्थयोराधाराधेयभावः प्रतीयते स सम्बन्धो वृत्तिनियामकः। वृत्तिनियामकः सम्बन्धस्त्रिविधः - संयोगः, समवायः, स्वरूपश्च। 'भूतले घटः', 'वने व्याघ्र' - इत्यादौ संयोगसम्बन्धसत्त्वात्तत्राधाराधेयभावः प्रतीयते। 'घटे रूपम्'- इत्यत्र समवायसम्बन्धसत्त्वादाधाराधेयभावस्तत्र प्रतीयते। समवायः कुत्र भवति? एतद्विषये कारिकावल्यां विश्वनाथेनोक्तम्–

"घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः।।"[2]

अत्र घटस्यावयविनः कपाले समवायिकारणात्मकेऽवयवे यः सम्बन्धः स समवायः। आदिना पटादिपृथिव्याः स्वसमवायिकारणेऽवयवे तन्त्वादौ यः सम्बन्धः, जलतेजोवायूनामवयविनाञ्च स्वस्वावयवेषु यः सम्बन्धः स समवायो बोध्यः। द्रव्येषु गुणकर्मणोः, द्रव्यगुणकर्मसु जातेर्यः सम्बन्धः स समवायः। अत्र

घटादिपदमवयविमात्रपरम्। कपालादिपदञ्चावयवमात्रपरम्, षष्ठ्याः प्रतियोगित्वमर्थः। यो वर्तते स प्रतियोगि। सप्तम्या अनुयोगित्वमर्थः, यत्र विद्यते स अनुयोगी, तेनावयवप्रतियोगिकोऽवयव्यनुयोगिको यः सम्बन्धः स समवाय इत्यर्थो भवति। एवं जातिप्रतियोगिको व्यक्त्यनुयोगिकः, गुणप्रतियोगिको गुण्यनुयोगिकः, क्रियाप्रतियोगिकः क्रियावदनुयोगिकः सम्बंन्धः। सर्वत्र समवायः सम्बन्धो भवति। 'नित्यत्वे सति सम्बन्धत्वं समवायत्वम्।' संयोगेऽतिव्याप्तिवारणाय लक्षणे नित्यत्वपदोपादानम्। आकाशादावतिव्याप्तिवारणाय लक्षणे सम्बन्धत्व-पदोपादानम्। अत्र सम्बन्धत्वं विशिष्टप्रतीतिनियामकत्वम्। 'गुणवान् घटः' - इति प्रतीतिनियामकत्वं समवाये वर्तते। एवं संयोगादावपि। तत्र गुणे प्रकारताख्या (विशेषणताख्या) विषयता, घटे विशेष्यताख्या विषयता, समवाये च संसर्गताख्या विषयता वर्तते।

गुणवान् घटः – विशिष्टबुद्धिः




एवञ्च विशिष्टप्रतीतिनियामकत्वमत्र विशिष्टबुद्धिनिरूपिताप्रकारत्वाख्य-विशेष्यताख्यविषयताभिन्नविषयत्वरूपं बोध्यम्। समवायेऽनुमानमेवं भवति- 'गुणवान् घटः' - इत्याकारकविशिष्टबुद्धिः, विशेषणविशेष्यसम्बन्धविषया, विशिष्टबुद्धित्वात्, 'दण्डी पुरुषः' - इति विशिष्टबुद्धिवत्। यथा- 'दण्डवान् पुरुषः' - इति विशिष्टबुद्धिः, तत्र विशेषणं दण्डः, विशेष्यं पुरुषः, तयोः सम्बन्धस्तु संयोगः, तद्विषयिणी भवति, तथा 'गुणवान् घटः' इत्यत्र गुणो विशेषणाम्, घटो विशेष्यः, तयोः सम्बन्धः समवाय एवेति तद्विषयकत्वं तादृशविशिष्टबुद्धावक्षतम्।

स्वरूपसम्बन्धो द्विविधो भवति- दैशिकः, कालिकश्चेति। तत्र दैशिकस्वरूप-सम्बन्धः पुनः द्विविधः- भावीयः, अभावीयश्च।




**भावीयः–**

**दैशिकभावीयस्वरूपसम्बन्धः–** भावार्थे विहिततद्धितप्रत्ययेन निष्पन्नो यत्पदं तदभिहितजातिभिन्नधर्ममात्रं स्वरूपसम्बन्धेन वर्तते। यथा– तद्घटत्वं तद्घटे, प्रमेयत्वं प्रमेये, प्रतियोगिता प्रतियोगिनि, सामानाधिकरण्यं समानाधिकरणे, अभावत्वमभावे, समवायत्वं समवाये, भावत्वं भावे स्वरूपसम्बन्धेन वर्तते। अतएव एषां सम्बन्धः स्वरूपमेव। यस्तिष्ठति स धर्मः, यत्र तिष्ठति स धर्मी।

**दैशिकभावीयस्वरूपसम्बन्धः–**

१.




२.



३.




४.




५.




६.




७.




एतेन जातिभिन्नाः सर्वे धर्मा धर्मिषु स्वरूपसम्बन्धेन वर्तन्ते। अयं खलु दैशिकभावीयस्वरूपसम्बन्धः।

**अभावीयः–**

अभावमात्रं स्वस्मिन्नधिकरणे स्वरूपसम्बन्धेन वर्तते। यथा– 'घटाभाववद् भूतलम्' - इत्यत्र भूतले यो घटाभावः स स्वरूपसम्बन्धेन भूतले वर्तते। अयमेव दैशिकाभावीयस्वरूपसम्बन्धः। स्वरूपसम्बन्धस्यापरो नाम 'विशेषणता'।

**दैशिक-अभावीयस्वरूपसम्बन्धः-**

घटाभाववद् भूतलम् - भूतले घटाभावः




इदानीं घटः, तदानीं घटः - इत्यादावर्थादेतत्काले घटः, तत्काले घटः - इत्यादावेतत्कालघटयोः, तत्कालघटयोश्च सम्बन्धः कालिकः, तत्र आधाराधेयभावः प्रतीयते। एतत्कालस्तत्राधारो घटश्चाधेयः। तत्काल आधारः, घट आधेयः। तयोः सम्बन्धः 'कालिकस्वरूपम्' अथवा 'कालिकविशेषणता' इति।

द्वयोः द्रव्ययोः सम्बन्धः संयोगः। अवयवि अवयविनः, जातिर्व्यक्तौ, गुणो द्रव्ये, कर्म द्रव्ये, विशषो नित्यद्रव्ये च समवायसम्बन्धेन वर्तन्ते। सर्वे जातिभिन्नधर्माः (समवायत्व-अभावत्वादयः), अभावश्च स्वरूपसम्बन्धेन धर्मिणि वर्तन्ते। सर्वे पदार्थाः कालिकसम्बन्धेन महाकाले जन्यवस्तुनि च वर्तन्ते। कालातिरिक्ते नित्यवस्तुनि न वर्तन्ते। यद्यपि संयोग-समवाय-स्वरूप (दैशिक-कालिकरूप) सम्बन्धा वृत्तिनियामका भवन्ति, तथापि संयोगसम्बन्धस्यैकं वैशिष्ट्यं वर्तते यत्- परमाणुद्वयोर्यः संयोगः, आत्ममनसोश्च यः संयोगः स न वृत्तिनियामकसम्बन्धो भवति। पतनविरोधी अर्थात् पतनस्य प्रतिबन्धको यः संयोगसम्बन्धः स एव वृत्तिनियामकः। यथा- वृक्षे कपिसंयोगः। अत्र कपिना सह वृक्षस्य यः संयोगः स पतनविरोधित्वाद्वृत्तिनियामकः। वृक्षरूपाश्रयेण सह कपेः संयोगाभावात्तस्य पतनं भवति। किन्तु मनसो गुरुत्वरूपगुणाभावात्तस्याधोदेशे पतनस्य सम्भावना नास्ति। अतएव मनःसंयोगः पतनविरोधीति न वक्तुं शक्यते। पार्थिवपरमाणुषु

जलीयपरमाणुषु च गुरुत्वसत्त्वेऽपि प्रकृष्टगुरुत्वाभावात् स न पतनस्य संयोगः। अतएव परमाणोः संयोगो न पतनविरोधी। तस्मात् स न वृत्तिनियामकः।

यस्मिन् सम्बन्धसत्त्वे द्वयोः सम्बन्धिनोराधायाधेयभावबुद्धिर्न भवति, परन्तु विशिष्टबुद्धिर्भवति, स सम्बन्धो वृत्त्यनियामक इति। तादात्म्यम्, विषयता, विषयिता, प्रतियोगिता, अनुयोगिता, अव्याप्यत्वम्, जन्यत्वम्, जनकत्वम्, अवच्छेदकता, अवच्छेद्यता, कारणता, कार्यता, विशेषणता, विशेष्यता, आधारता, आधेयता, स्वत्वम्, स्वामित्वम्, अभावत्वमित्यादयो वृत्त्यनियामकसम्बन्धाः असंख्याः वर्तन्ते। 'धनवान् देवदत्तः' - इत्यत्र देवदत्तेन सह धनस्य स्वामित्वसम्बन्धो वर्तते। 'घटस्य ज्ञानम्' - इत्यत्र ज्ञानेन सह घटस्य विषयितासम्बन्धः, 'ज्ञानीयो घटः- इत्यत्र ज्ञानेन सह घटस्य विषयतासम्बन्धः, 'रामस्य पुस्तकमि'ति स्थले पुस्तकेन सह रामस्य स्वत्वसम्बन्धः, 'घटस्याभावः' - इत्यत्र अभावेन सह घटस्य प्रतियोगितानुयोगिता वा सम्बन्धः, 'अयं घटः' - इत्यत्र सम्मुखस्थितेन वस्तुना सह घटस्य तादात्म्यसम्बन्धो वर्तते। सर्व एते सम्बन्धाः वृत्त्यनियामकाः। विशिष्टबुद्धावर्थात् सविकल्पकज्ञाने विषयत्रयं भासते- विशेष्यम्, विशेषणम्, सम्बन्धश्च। 'घटः' - इत्यत्र घटत्वविशिष्टघटस्य ज्ञानं भवति। तस्य ज्ञानस्य विषयाः खलु घटो घटत्वम्, समवायसम्बन्धश्च। घटे विशेष्यता, घटत्वे प्रकारता अथवा विशेषणता, समवाये संसर्गता च वर्तन्ते। अतएव 'घटः' - इत्यत्र घटत्वप्रकारकघटविशेषकसमवायसंसर्गकज्ञानं भवति। घटत्वं जातिः, सा घटरूपव्याप्तौ समवायसम्बन्धेन वर्तते। 'भूतले घटो वर्तते' - इत्यत्र भूतले (द्रव्ये) घटः (द्रव्यम्) संयोगसम्बन्धेन वर्तते। सम्बन्धमाश्रित्यैव द्वयोः वस्तुनोः विशिष्टबुद्धिर्भवति। सम्बन्धः सम्बन्धिद्वये वर्तते। घटो यथा संयोगसम्बन्धेन भूतले वर्तते संयोगोऽपि तद्वद्घटे भूतले च वर्तते। अतएव तत्रापि घटसंयोगयोः भूतलसंयोगयोश्चापर एकः सम्बन्धोऽपेक्षते। संयोगः गुणविशेषः। अतएव स समवायसम्बन्धेनैव घटादिद्रव्ये वर्तते। स संयोगः पुनरपि समवायसम्बन्धेन भूतले (द्रव्ये) वर्तते। अतएव तयोः सम्बन्धः समवाय एव।

'घटत्वं घटे वर्तते' - इत्यत्र घटघटत्वयोः यः सम्बन्धः स समवाय एव। तत्र समवायोऽपि अपरेण केनचित्सम्बन्धेन घटे वर्तते घटत्वेऽपि वर्तते। घटे (सम्बन्धिनि) वर्तते स सम्बन्धः स्वरूपसम्बन्धः। समवायः पुनः स्वरूपसम्बन्धेन सम्बन्धिनि घटत्वे वर्तते। अतएव तयोः सम्बन्धः स्वरूपसम्बन्धः। स्वरूपसम्बन्धः स्वस्य सम्बन्धिस्वरूपत्वादर्थाद्विशेष्यविशेषणस्वरूपत्वात् सोऽपरं कमपि सम्बन्धं नापेक्षते। अतएवायं सम्बन्धः खलु स्वरूप-(स्वस्वरूप) सम्बन्धः। इदं हि स्वरूपसम्बन्धस्य वैशिष्ट्यम्।

साक्षात्परम्पराभेदात् सम्बन्धो द्विविधो भवति। सम्बन्धान्तराघटितः सम्बन्धः साक्षात्सम्बन्धः। स च संयोग-समवाय-स्वरूपादिभेदाद् बहुविधो भवति। सारणिमाध्यमेन साक्षात्सम्बन्धो निम्ने प्रदर्श्यते–

१. गुणः —— धर्मः/विशेषणम्/आधेयः/प्रतियोगी
समवायः
गुणी —— धर्मी/विशेष्यम्/आधारः/अनुयोगी

२. क्रिया —— धर्मः/विशेषणम्/आधेयः/प्रतियोगी
समवायः
क्रियावान् —— धर्मी/विशेष्यम्/आधारः/अनुयोगी

३. जातिः —— धर्मः/विशेषणम्/आधेयः/प्रतियोगी
समवायः
व्यक्तिः —— धर्मी/विशेष्यम्/आधारः/अनुयोगी

४. अवयवी —— धर्मः/विशेषणम्/आधेयः/प्रतियोगी
समवायः
अवयवः —— धर्मी/विशेष्यम्/आधारः/अनुयोगी

५. विशेषः —— धर्मः/विशेषणम्/आधेयः/प्रतियोगी
समवायः
नित्यद्रव्यम् —— धर्मी/विशेष्यम्/आधारः/अनुयोगी

६. क) 'जलवत्पात्रम्' इति स्थले –




ख) 'पात्रे जलम्' इति स्थले –




– 'पात्रे जलम्' इत्यत्र वृत्तितासम्बन्धेन पात्रं जले वर्तते ।

७. क) 'पटाभाववद् गृहम्' – इति स्थले –




ख) 'गृहे पटाभावः' – इति स्थले –




– 'गृहे पटाभावः' इत्यत्र वृत्तितासम्बन्धेन गृहं पटाभावे वर्तते

८. क) 'जलवत् पात्रम्' – इति स्थले –




– अत्र 'पात्रम्' गुणी, 'संयोगः' गुणः। अतएव तयोः सम्बन्धः समवायः। पुनः 'जलम्' गुणी, 'संयोगः' गुणः। अतएव तयोः सम्बन्धः समवायः।

ख) 'पात्रे जलम्' इति स्थले –




– अत्र 'जलम्' गुणी, 'संयोगः' गुणः। अतएव तयोः सम्बन्धः समवायः। पुनः 'पात्रम्' गुणी, 'संयोगः' गुणः। अतएव तयोः सम्बन्धः समवायः। 'पात्रे जलम्' इत्यत्र वृत्तितासम्बन्धेन पात्रं जले वर्तते।

९.




किन्तु स्वरूपसम्बन्धः खलु स्वस्वसम्बन्धिस्वरूपम् अर्थाद्विशेष्यविशेषण-स्वरूपम्। अतएव स कमपि सम्बन्धं नापेक्षते। अतएव स्वरूपम् – स्वस्वरूपम्। इदमेव स्वरूपसम्बन्धस्य वैशिष्ट्यम्।

'घटाभाववद् भूतलम्' इत्यभावप्रत्यक्षे चक्षुर्भूतलयोर्यः सम्बन्धः स संयोगः। 'भूतलम्' विशेष्यम् अतएव तत्र विशेष्यता वर्तते। 'घटाभावः' विशेषणम्, अतएव तत्र विशेषणता वर्तते। विशेषणताविशेष्यतयोः यः सम्बन्धः स निरूप्य-

---

* जलम् – धर्मः / विशेषणम् / आधेयः / प्रतियोगी / गुणी

** पात्रम् – धर्मी / विशेष्यम्/आधारः/अनुयोगी / गुणी

*** पात्रम् – धर्मः / विशेषणम् / आधेयः / प्रतियोगी / गुणी

****जलम् – धर्मी / विशेष्यम्/आधारः/अनुयोगी / गुणी

निरूपकभावसम्बन्धः। चक्षुर्घटाभावयोर्यः सम्बन्धः स संयुक्तविशेषणतासम्बन्धः। अतएव चक्षुःसंयुक्तभूतलनिष्ठविशेष्यतानिरूपितघटाभावनिष्ठविशेषणतासम्बन्ध एव चक्षुर्घटाभावयोः सम्बन्धः। सम्बन्धान्तरघटितः अर्थाद् यस्य सम्बन्धस्य निर्माणे सम्बन्धान्तरापेक्षा विद्यते तादृशः सम्बन्धः परम्परासम्बन्धः। तन्तोः रूपं स्वसमवायि-समवेतत्वरूपेण सामानाधिकरण्यनामकेन परम्परासम्बन्धेन पटे वर्तते। अयं सम्बन्धः समवायघटितः। सारणिमाध्यमेनायं सम्बन्धो निम्ने प्रदर्श्यते-




दण्डकमण्डलुधारिणि पुरुषे गृहे तिष्ठति सति स्व-संयोगि-संयोगित्वरूपेण स्वाश्रयाश्रयत्वेन परम्परासम्बन्धेन दण्डकमण्डलू अपि गृहे तिष्ठतः, अयं सम्बन्धः संयोगघटितः। सारणिमाध्यमेनायं निम्ने प्रदश्यते-




*****जातिः – धर्मः / विशेषणम् / आधेयः / प्रतियोगी / गुणी
******व्यक्तिः – धर्मी / विशेष्यम्/आधारः/अनुयोगी / गुणी

पुनश्च सम्बन्धो द्विविधः- 'वृत्तिनियामको वृत्त्यनियामकश्चेति'[१]। यस्मिन् सम्बन्धे सति एकस्मिन्नापरस्य वृत्तिता, आधार-आधेयभावः, आश्रयाश्रयिभावो वा प्रतीयते स सम्बन्धो वृत्तिनियामकः। यथा- 'भूतले घटः' अस्मिन् वृत्तिनियामकसम्बन्धस्थले आधारे सप्तमीविभक्तिर्भवति। आधेये च मतुबादिप्रत्यया भवन्ति। यथा- 'घटवद्भूतलम्' - अत्र 'घटः' आधेयः, 'भूतलम्' आधारः।

१२. 'घटवद्भूतलम्' इति स्थले –




यस्मिन् सम्बन्धे एकस्मिन्नपरस्य वृत्तिता, आधाराधेयभावो न प्रतीयते केवलं सम्बन्धितामात्रं प्रतीयते स सम्बन्धो वृत्त्यनियामकः। तत्र सप्तमीविभक्तेर्मतु-बादिप्रत्ययस्य च प्रयोगो न भवति। अत्र सम्बन्धित्व-बोधकाः इन्-ईय्प्रभृतयः प्रत्ययाः (कदाचित् मतुप्प्रत्ययप्रयुज्यन्ते। परम्परासम्बन्धः प्रायशः सर्व एव वृत्त्यनियामकाः। अतएव शिखिनि पुरुषे गृहे तिष्ठति स्वाश्रयपुरुषाश्रयत्वसम्बन्धेन 'शिखावद् गृहम्' इति न प्रयोगः।

'अयं न द्वौ, किन्तु द्वित्ववान्' इति प्रतीतौ 'द्वौ', 'द्वित्ववान्' इति पदयोः अर्थबोधाय पर्याप्तिनामकः सम्बन्धविशेषः स्वीक्रियते[२]। स साकल्येन सम्बन्धः। अर्थात् यस्य यावन्त आश्रयाः सन्ति तावत्स्वेवाश्रयेषु मिलितेष्वेव सम्बन्धः। सारणिमाध्यमेनायं निम्ने प्रदर्श्यते–




पर्याप्तिसम्बन्धेन द्वित्वसंख्या मिलितयोरेव द्वयोर्वर्तते, न त्वेकस्मिन्।

१४. क)

घटत्वम्

समवायः

पर्याप्तिः

समवायः

प्रथमघटः द्वितीयघटः तृतीयघटः चतुर्थघटः पञ्चमघटः ......... इत्यादयः

अथवा

ख)

पटत्वम्

समवायः

पर्याप्तिः

समवायः

प्रथमपटः द्वितीयपटः तृतीयपटः चतुर्थपटः पञ्चमपटः ......... इत्यादयः

संख्यदीनामिव अवच्छेदकताया अपि पर्याप्तिसम्बन्धोऽङ्गीक्रियते ।

१५.

अवच्छेदकता

पर्याप्तिः

कपालत्वम् जलत्वम् चक्रत्वम् चक्रभ्रमित्वम् दण्डत्वम्

कुलालत्वम् कारणता कारणता कारणता कारणता कारणता कारणता

कुलालः कपालम् जलम् चक्रम् चक्रभ्रमि दण्डम्

कार्यता

घटत्वम्

कारणसामग्री घटः

कार्यम्

विषयता विषयिता चेति अपरौ द्वौ वृत्यनियामकौ सम्बन्धौ स्तः। तत्र विषया घटपटादयो ज्ञानेच्छादौ विषयितासम्बन्धेन वर्तन्ते। विषयतासम्बन्धेन च ज्ञानेच्छादयो घटपटादौ विषये तिष्ठन्तीति।[5]

१६. क)







ख)




ग)




यच्च यत्र वर्तते तत्तस्याधेयमाश्रितं तद्वृत्तीति चोच्यते। यत्र तु यद्वर्तते तत्तस्याधिकरणमाधार आश्रय इति चोच्यते। यथा– कुण्डे वदरं वर्त्तते, गृहे पटो वर्तत इति। वदरं पटश्च आधेयम्, कुण्डं गृहञ्च आधार इति। यच्च यस्याधेयम्, तस्मिन् तन्निरूपिता वृत्तिता वर्तते। एवं यच्च यस्याधिकरणम्, तस्मिन् तन्निरूपिताधिकरणता वर्तते[6]। यथा– 'कुण्डे वदरं वर्तते– इत्युदाहरणे वदरे कुण्डनिरूपितवृत्तिता वर्तते। कुण्डे च वदरनिरूपित-अधिकरणता वर्तते। 'गृहे पटो वर्तते' इत्युदाहरणे पटे गृहनिरूपितवृत्तिता वर्तते, गृहे च पटनिरूपित-अधिकरणता वर्तते। एकस्य वृत्तितायामपरस्याधिकरणतावश्यम्भाविनी। एकस्याधिकरणतायामपरस्य वृत्तिता नियता। अतएव वृत्तिताधिकरणयोः परस्परनियतसापेक्षतया वृत्तिताधिकरणतयोश्च परस्परं निरूप्यनिरूपकभावोऽस्ति। वृत्तितानिरूपिताधिकरणता, अधिकरणतानिरूपिता च वृत्तितेति[7]। सारणिता-माध्यमेन निम्ने प्रदर्श्यते–

१७. क)




अपरपक्षे,

ख)




अपरपक्षे,

१८.




अपरपक्षे,

'घटस्याभावः' इत्यत्र घटः प्रतियोगी, अभावश्च अनुयोगी। योऽभावस्य विरोधी स प्रतियोगी। यत्र घटाभावोऽस्ति तत्र घटो नैव तिष्ठति'– इति घटाभावो घटस्य विरोधी। रूपाभावस्य रूपं प्रतियोगी, सोऽभावः यत्र वर्तते सोऽनुयोगी। यथा– वायुः रूपाभावस्यानुयोगी, रूपं प्रतियोगी। प्रतियोगिनि प्रतियोगिता वर्तते, अनुयोगिनि चानुयोगिता वर्तते।

१९. 'रूपाभाववान् वायुः'– इत्यत्र रूपप्रतियोगिक-वाय्वनुयोगिकाभाव इति शाब्दबोधः, निम्ने प्रदर्श्यते–




'चन्द्रवद् मुखम्'- इत्यत्र चन्द्रसादृश्यं मुखे वर्तते। मुखमनुयोगी, चन्द्रसादृश्यं प्रतियोगि। अतएवात्र शाब्दबोध एवं भवति- चन्द्रप्रतियोगिकमुखानुयोगिकसादृश्यम्।

प्रतियोगी चन्द्रः सादृश्यम्




भावप्रत्ययवदभावोऽपि व्याप्यव्यापकभेदेन द्विविधो भवति। य सर्वमेवाधारांशम्, कालम्, देशं वा अवलम्ब्य वर्तते स व्याप्यवृत्तिः। यथा– मनुष्ये मनुष्यत्वम्, आकाशे रुपाभावः, शशे विषाणाभावः।




स्वाधारेऽपि यस्याभावो वर्तते, सः अव्याप्यवृत्तिः। यथा- वृक्षे कपिसंयोगः, कपिसंयोगभावश्चाव्याप्यवृत्तिः[१]।



अवच्छेदके विशेषणीभूतो धर्मोऽवच्छेदकताया अवच्छेदको भवति। अवच्छेदके विशेषणीभुतो धर्मो येन सम्बन्धेन तिष्ठति स सम्बन्धोऽवच्छेदकतासम्बन्धे भवति। यथा- दण्डी (मठे) अस्ति, दण्डी (गृहे) च नास्ति- इत्यत्र यो बोधो भवति स सारणिमाध्यमेन निम्ने प्रदर्श्यते-

२३.




'दण्डी नास्ती'- इत्यस्य शाब्दबोध एवं भवति- समवायसम्बन्धावच्छिन्न-दण्डत्वनिष्ठ-अवच्छेदकता-निरूपित-संयोग-सम्बन्धावच्छिन्न-दण्डनिष्ठ-अबच्छेदकता-निरूपित-संयोगसम्बन्धावच्छिन्न-दण्डनिष्ठ-प्रतियोगिता-निरूपकोऽभावः[१०]।

एवं रूपेण न्यायशास्त्रे सम्बन्धस्य प्रकारा वहवः सन्ति। अत्र निबन्धे सामान्यरूपेण दिग्दर्शनं कृतम्। सम्बन्धानां सम्यग् ज्ञानं विना न्यायदर्शने प्रवेशाधिकारो न भवति। न्यायदर्शने विशेषतो नव्यन्यायग्रन्थेषु विभिन्नानां पारिभाषिकशब्दानां तथा सम्बन्धस्वरूपाणां बहवः प्रयोगा दरीदृश्यन्ते। अतएव ये तावन्नव्यन्यायग्रन्थान् पठन्ति तेषां कृते सम्बन्धज्ञानस्यापेक्षातीव वर्तते। येषां सम्बन्धस्य सम्यग् ज्ञानं नास्ति ते नव्यन्यायग्रन्थपाठे अनधिकारिण इति पण्डितैः स्वीक्रियते। अतएव प्राथमिकरूपेण सम्बन्धविषयकमालोचलमत्र कृतमिति दिक्।

## तथ्यसूत्रम्-

१. व्युत्पत्तिवादः, पत्राङ्कः - १.
२. भाषापरिच्छेदः, कारिका - ११.
३. न्यायकोशः, पत्राङ्कः - ९२१.
४. नव्यन्यायभाषाप्रदीयः, पत्राङ्कः - १९-२०.
५. नव्यन्यायभाषाप्रदीयः, पत्राङ्कः - २२.

६. नव्यन्यायभाषाप्रदीयः, पत्राङ्कः - २४-२५.
७. नव्यन्यायभाषाप्रदीयः, पत्राङ्कः - २६.
८. नव्यन्यायभाषाप्रदीयः, पत्राङ्कः - २८.
९. नव्यन्यायभाषाप्रदीयः, पत्राङ्कः - ३९.
१०. नव्यन्यायभाषाप्रदीयः, पत्राङ्कः - ४८.

## सहायकग्रन्थपञ्जी–


१. ए प्राइमार अफ् नव्य-न्याय-ल्याङ्गुयेज एण्ड मेथडोलजि, उज्ज्वला झा, एशियाटिक सोसाइटि, कलिकाता, २००४.
२. तत्त्वचिन्तामणिः, कामाख्यानाथतर्कवागीशः, चौखम्बा-संस्कृत-प्रतिष्ठानम्, दिल्लि, १९९०.
३. तर्कसंग्रहः, श्रीसत्कारिशर्मा, चौखम्बा-संस्कृत-संस्थानम्, वाराणसी, २२१००१.
४. नव्यन्याया-भाषाप्रदीयः, म.म. श्रीमहेशचन्द्रन्यायरत्नः, संस्कृतमहाविद्यालयः, कलिकाता, १९७३.
५. न्यायकोशः, भीमाचार्य झालकीकरः, भाण्डारकर-प्राच्यविद्यासंशोधनमन्दिरः, पुना, ४११००४, १९९३ खीष्टाब्दः।
६. न्यायदर्शनम्, न्यायचतुर्ग्रन्थिका, अनन्तलालठक्कुरः, मिथिला विद्यापीठ, १९६७.
७. न्यायदर्शनम्, श्रीयुक्त फणिभूषणतर्कवागीशः, पश्चिमवङ्ग-राज्य-पुस्तक-पर्षद्, कलिकाता, १९८३ वङ्गाब्दः।
८. न्यायमञ्जरी, सूर्यनारायणशुक्लः, चौखम्बा-संस्कृत-संस्थानम्, वाराणसी, २२१००१.
९. न्यायलीलावती, विन्ध्येश्वरी प्रसाद द्विवेदी, वाराणसी, १९१०.
१०. न्यायसिद्धान्तमुक्तावली, पं. श्रीकृष्णवल्लभाचार्य्यः, चौखम्बा-संस्कृत-संस्थानम्, वाराणसी, वि.सं.२०६३.
११. प्रकरणपञ्चिका, श्रीसुब्रह्मण्य शास्त्री, वेनारसहिन्तुविश्वविद्यालयः।
१२. प्रमाणवार्त्तिकम्, बौद्धभारती सिरिज, वाराणसी-संस्कृत-विश्वविद्यालयः, १९६८.
१३. भारतीयदर्शनकोषः, श्रीमोहनभट्टाचार्य्यः, दीनेशचन्द्रभट्टाचार्य्यशास्त्री, संस्कृत-महाविद्यालयः, कलिकाता, १९७८.

१४. भारतीय दर्शनेर भूमिका, सुरेन्द्रनाथदासगुप्तः, कलिकाता।
१५. मानमेयोदयः, योगीन्द्रानन्दः, चौखम्बा-विद्याभवनम्, वाराणसी।
१६. मीमांसाश्लोकवार्त्तिकम्, कुमारिलभट्टः, डॉ. विजयशर्मा, भारतीय-विद्यासंस्थानम्, वाराणसी, २००२.
१७. वङ्गे नव्यन्यायचर्चा, दीनेशभट्टाचार्य, वङ्गीय-साहित्य-परिषत्, कलिकाता, १४१४ वङ्गाब्दः।
१८. वेदान्तदर्शनम्, पण्डितश्रीनलिनीनाथझा, वसुमति-साहित्य-मन्दिरः, कलिकाता, १३४१ वङ्गाब्दः।
१९. वेदान्तपरिभाषा, श्रीपञ्चाननभट्टाचार्य्यशास्त्री, कलिकाता, १८८३ शकाब्दः।
२०. व्याप्तिपञ्चकम्, श्रीयुक्ताराजेन्द्रनाथघोषः, पश्चिमबङ्ग-राज्य-पुस्तक-पर्षद्, कलिकाता, १९८२.
२१. श्लोकवार्त्तिकम्, भि.ए. रामस्वामी, त्रिवान्द्रम्, १९४३.
२२. सप्तपदार्थी, जे.एम्. जेटली, दलपतभाइ, भारतीय-संस्कृति-विद्यामन्दिरः, आहमेदावादः।
२३. सांख्यकारिका, पूर्णचन्द्रवेदान्तचुञ्चुसांख्यभूषणः, साहित्याचार्यः, कलिकाता, २००७.
२४. सांख्यतत्त्वकौमुदी, नारायणचन्द्रगोस्वामी, संस्कृत-पुस्तक-भाण्डारः, कलिकाता, १४०६.

# मीमांसादर्शनानुसारेण सम्बन्धपरीक्षा

संबन्धो हि विशिष्टबुद्धिनियामकः। यथा घटभूतलयोः घटवद्भूतलमिति विशिष्टबुद्धिनियामकत्वं संयोगे विद्यत इति। तथा च विशिष्टबुद्धिनियामकत्वं सम्बन्धत्वमित्यायातम्। संयोगसमवायस्वरूपकालिकपर्याप्तिस्वाभाववद्वृत्तित्वादयः सम्बन्धाः वृत्तितानियामकाः, निरूप्यनिरूपककोटिप्रविष्टविषयत्वादयः न वृत्तितानियामका इत्यादिविचारः न्यायशास्त्रे बहुत्र प्रदर्शितोऽपि मीमांसाशास्त्रे सूत्रारूढः सम्बन्धविचारः कथं प्रवर्तितः इति विचिकित्समानः मीमांसाशास्त्रानुरोधं सम्बन्धविचारं प्रस्तोतुं लेखनीं व्यापारयत्ययं जनः।

भगवान् जैमिनिः "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम् अनिमित्तं विद्यमानोपलम्भत्वात्"[1] इति प्रत्यक्षस्वरूपं सूत्रयामास। इन्द्रियाणां विषयैः सति संयोगे पुरुषस्य जायते या बुद्धिः तत्प्रत्यक्षमिति फलितम्। तथा सति भ्रमात्मकज्ञानेऽपि प्रत्यक्षलक्षणस्यातिव्याप्तिः स्यात्। पुरोवर्तिपदार्थस्य चक्षुषा सह संयोगे सति हि भ्रम उपजायते। अतः तत्र तत्सतोः सूत्रघटितयोः पदयोः व्यत्ययः कार्यः। तथा हि- सत्सम्प्रयोगे इत्यत्र सत् इति पृथक् पदं प्रथमैकवचनान्तम्। तत्प्रत्यक्षमित्यत्रापि तदिति पृथक् पदम्। तच्च तृतीयान्तमव्ययं तेनेत्यर्थकम्। तच्छब्दस्य सम्प्रयोग इत्यतः पूर्वं सदित्यस्य च प्रत्यक्षमित्यतः पूर्वं योजना कर्तव्या। तथा च तत्- तेन विषयेण इन्द्रियाणां सन्निकर्षे जायमाना या बुद्धिः सा तत्समीचीनं प्रत्यक्षम्। इदमर्थे प्रत्यक्षे यत् प्रकारतया भासते तेन साकमिन्द्रियसन्निकर्षे सति चेत् प्रत्यक्षं भवति तत् समीचीनं प्रत्यक्षम्। शुक्तिरजतादिभ्रमे च प्रकारतया भासमानेन रजतेन्द्रियसंयोगो नास्ति। असन्निकृष्टस्य आपणस्थरजतस्यैव स्मृतस्य पुरोवर्तिनि प्रकारतया भानात्। अतो भ्रमे नातिव्याप्तिरिति मन्वानः प्राह पार्थसारथिमिश्रः – "तत्सतोर्व्यत्ययात् आभासासंकरसिद्धिः। तदिति चाव्ययं तृतीयान्तम्"[2] इति।

एतेन "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमिति। एतदपि संशयाद्युत्पत्तिनिमित्तत्वात् अलक्षणम्"[3] इति न्यायवार्तिकवचनम्, एवमेव "इन्द्रियाणां सत्सम्प्रयोगे पुरुषस्य जायमाना बुद्धिः तत्प्रत्यक्षम् इति सूत्रार्थः, तथा चातिव्याप्तिः संशयविपर्ययबुद्ध्योरपि इन्द्रियसंप्रयोगजत्वेन प्रत्यक्षत्व-

प्रसङ्गात्"[४] इति न्यायमञ्जरीवचनं च प्रत्याख्यातम्। तथा च प्रत्यक्षलक्षणं मीमांसासूत्रारूढमिति प्रतीमो वयम्।

इदमत्राभिधेयम्– तदिदं सूत्रं न प्रत्यक्षलक्षणपरम् अत एव नोक्तातिप्रसङ्ग-शङ्का। अपि तु धर्मे प्रत्यक्षस्याप्रमाणत्वज्ञापनाय प्रवृत्तमिदं सूत्रमिति शबरस्वामिनामाशयः। तथा च सूत्रकारस्य लक्षणकथने तात्पर्याभावादिति प्रतीमः। अथैवं सति "सत्संप्रयोगे" इत्यादि सूत्रभागः किमर्थं प्रवृत्त इति चेत् - उच्यते। प्रत्यक्षं धर्माधर्माविषयकमिति साधयितुमिदं सूत्रं प्रवर्तते। तत्र च साक्षाद्धेतुः "विद्यमानोपलम्भनत्वादिति"। प्रत्यक्षस्य विद्यमानविषयकत्वादेव कालान्तरभावित्वेन अविद्यमानस्वर्गनरकघटितयोः स्वर्गसाधनत्वनरकसाधनत्वरूपधर्माधर्मयोः ग्राहकत्वासम्भवादेव तत्र प्रत्यक्षं प्रमाणं न प्रवर्तत इति तदाशयः। प्रत्यक्षस्य विद्यमानविषयकत्वमेव कुत इत्याशङ्कायां तत्र हेतुः– "सत्संप्रयोग इत्यादिना कथ्यते। यतः प्रत्यक्षं वर्तमानसन्निकर्षजन्यम् अतः विद्यमानविषयकमिति। तदुक्तं शास्त्रदीपिकायां – सत्संप्रयोगजत्वमाभासेऽपि तुल्यत्वादलक्षणमिति नैयायिका दूषयन्ति। तत्तु लक्षणानभिधानाददूषणम्। न हीदं लक्षणं प्रत्यक्षस्य। किं तु अनिमित्तस्य कथनमात्रम्। तत्र हेतुः विद्यमानोपलम्भनत्वात्। तत्साधनं च सत्सम्प्रयोगजत्वम्" इति। तथा च प्रत्यक्षलक्षणं सूत्रारूढं तदनारूढमिति पक्षद्वयं समुपलभ्यत इत्यलमतिचर्चया।

मानमेयोदयकारः नारायणस्तु तत्र "इन्द्रियसन्निकर्षजं प्रमाणं प्रत्यक्षमिति"[५] प्रावोचत्। गागाभट्टस्तु न्यरूरुपत् प्रत्यक्षलक्षणं त्रेधा भाट्टचिन्तामणौ[६]–

१. इन्द्रियार्थसम्बन्धजन्यं ज्ञानं प्रत्यक्षम्

२. ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्

३. जन्यज्ञानजन्यमात्रवृत्तिजातिशून्यज्ञानत्वं वा इति।

एवं सुगृहीतनामधेयैः चिन्नस्वामिशास्त्रिवर्यैः नव्यमीमांसकैरेवम् अभ्यधायि– "तत्र विषयेन्द्रियसंप्रयोगजन्यं ज्ञानं प्रत्यक्षम्। संप्रयोगश्च साक्षात् सम्बन्धः"[७] इति।

तथा च इन्द्रियार्थयोः विद्यमानस्सम्बन्धः सन्निकर्षशब्देनोच्यते। सन्निकर्षशब्दः प्रथमं न्यायसूत्रकारेण प्रायोजि। मीमांसादर्शने तु सम्प्रयोगः योग इत्यादिना सम्बन्धः वर्णितः। तथा सम् + अव इत्युपसर्गद्वयपूर्वः इण्धातुः समवायमभिदधाति तथा सम् + नि + कर्षः - सन्निकर्षशब्दः 'सम्बन्धं बोधयति।

## भाट्टमतेन सन्निकर्षविचारः

कुमारिलभट्टस्त्वाह–

प्राप्तिमात्रं हि सम्बन्धो नेन्द्रियस्याभ्युपेयते।
माभूत् कारणमात्रेण त्वचा रूपावधारणम्।।[८]इति।।

"योग्यतालक्षणो वाच्यः संयोगः कार्यलक्षितः"[९] इति च।

अत्रेदमाकूतम्– योग्यतासहिता प्राप्तिः सन्निकर्ष इत्यभिधीयते। प्राप्तिमात्रस्य सन्निकर्षत्वे त्वक्संयुक्तसमवायस्य रूपेऽपि सद्भावात् रूपस्यापि त्वाचप्रत्यक्षापत्तिः। अतो योग्यतासहितैव प्राप्तिः सन्निकर्ष इति सिद्ध्यति।

सोऽयं सन्निकर्षः संयोगः, संयुक्ततादात्म्यं चेति द्विविध इति मानमेयोदयकारोऽभिप्रैति। तथा हि– पृथिव्यप्तेजसां चक्षुस्त्वगिन्द्रियाभ्यां संयोगात् प्रत्यक्षं जायते। वायोस्त्वक्संयोगात् प्रत्यक्षं भवति। दिगाकाशतमसां चक्षुस्संयोगात् प्रत्यक्षं भवति। शब्दस्य द्रव्यत्वात् तस्य श्रोत्रेण संयोगात् प्रत्यक्षं समुत्पद्यते। तथा च द्रव्यप्रत्यक्षं प्रति इन्द्रियसंयोगः सन्निकर्षविधया कारणमित्युक्तं भवति। द्रव्यगतानां जातिगुणकर्मणां प्रत्यक्षं संयुक्ततादात्म्यरूपसन्निकर्षादुत्पद्यते। धर्मधर्मिणोरभेदस्याभ्युपगमात्। परं तु गुणगतानां गुणत्वरूपत्वादिजातीनामिन्द्रियसंयुक्तद्रव्यतादात्म्यस्याभावात् कथं प्रत्यक्षं भवितुमर्हतीत्यत्र द्वेधा समाधानम्–

१. गुणगतजातेः साक्षाद्द्रव्यतादात्म्याभावेऽपि स्वाश्रयगुणस्य द्रव्यतादात्म्यात् आश्रयद्वारा द्रव्यतादात्म्यमस्ति।

२. यद्वा गुणगतजातिप्रत्यक्षे संयुक्ततदात्मतादात्म्यं सन्निकर्ष इति। एतत्पक्षे संयोगः, संयुक्ततादात्म्यं, संयुक्ततदात्मतादात्म्यं चेति त्रिविधः सन्निकर्षः।

नैयायिकसम्मतयोः संयुक्तसमवेतसमवाययोः समवायपदस्थाने तादात्म्यपदं समवेतसमवायपदस्थाने तदात्मतादात्म्यपदं चाभिषिञ्चन्ति भाट्टा इति विशेषः।

"एतयैव दिशा वाच्या शुक्लादेरपि नित्यता।
संसर्गमात्रभेदेन स्यात् तत्रापि हि भेदधीः।।
स्वरूपं तु तदेवेति को जातिं कथयिष्यति।।"[१०]

इति श्लोकवार्तिकवचनमत्रानुसन्धेयम्। उक्तवार्तिकानुसारं सन्निकर्षस्य द्वैविध्यमेव भाट्टः पक्षः इति प्रतीमः। तथा चैतन्मते शब्दस्य गुणत्वाभावात् समवायाख्यः समवेतसमवायाख्यश्च सन्निकर्षौ न स्तः। अभावस्य प्रत्यक्षत्वाभावात् समवायस्य अनङ्गीकारात् विशेषणविशेष्यभावरूपः सन्निकर्षोऽपि नास्ति।

तत्राद्यं त्रिविधं तावत् नाममात्रेण भिद्यते।
समवायादयस्त्वन्ये सन्निकर्षा निराश्रयाः।।[११]

इति मानमेयोदयवचनमत्रानुसन्धेयम्।

भाट्टचिन्तामणिकारस्तु संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः इति नैयायिकवत् समवायपदार्थं स्वीकुर्वाणः सन्निकर्षस्य त्रैविध्यमुपापीपदत्।[१२]

एवं समवायपदार्थमङ्गीकुर्वाणेन प्राभाकरमतानुयायिना संयोगः, संयुक्तसमवायः समवायश्चेति सन्निकर्षस्य त्रैविध्यमेव न्यरूपि। विस्तरस्तु प्रकरणपञ्चिकादौ द्रष्टव्य इत्यलमक्षरक्षरणेन।

## प्रभाकरग्रन्थेषु समवायः

अत्राहुः प्राभाकराः अयुतसिद्धानामाधाराधेयभूतानां यः संबन्धः इह प्रत्ययहेतुभूतः स समवायः यथा कणभक्षमुनिना "इहेदमिति यतः कार्यकारणयोः स समवायः"[१३] इति निर्दिष्टं तथैव प्राभाकरैरपि स्वीकृतम्। परं तु अस्मिन् मते समवायः नित्ययोः समवायः नित्यः, अनित्ययोस्तु अनित्य इति न सर्वत्र नित्यः एकश्च वैशेषिकवत्। तदुक्तं शालिकाचार्यैः "समवायं च न वयं काश्यपीया इव नित्यमुपेमः"[१४] इति। समवायो नित्ययोर्गगनमहत्त्वयोर्नित्यः, अवयवावयविनोः अनित्ययोस्तु अनित्यः। अनित्ययोरन्यतरोत्पत्तिकारणादुत्पद्यते। तस्मात् यथा संयोगः प्रतिसंबन्धि भिन्नः, तथा समवायोऽपि प्रतिसंबन्धिभिन्नः संबन्धत्वात्।

## समवायनित्यत्वनिराकरणम्

एतेन सर्वस्यैव कार्यस्योत्पत्तौ कारणत्रयापेक्षिततत्वनियमेन समवायस्य समवायिकारणाभावात्, अत एव तत्प्रत्यासत्तिविरहेण असमवायिकारणस्याप्य-सत्त्वात् उत्पत्त्यसंभव इति नित्यः समवाय इत्यपि परास्तम्।

## समवायः अनुमेयः इत्युपपादनम्

किं च समवायस्तु न प्रत्यक्षः, अपि तु अनुमेयः। तल्लिङ्गं तु परस्परसाकाङ्क्ष-गुणगुणिनोः नियमेन सहोपलब्धिरेव। अथवा आगमसन्निधिहीनस्य परतन्त्रतया भानम् समवायलिङ्गम्। आश्रयो यत्र यत्र प्रकाशते तत्र तत्र अवस्थानं पारतन्त्र्यम्। अत एवोक्तं नयविवेककृता "आगमसन्निधिहीनस्यापि उत्पन्नवस्तु परतन्त्रतया भानादेव संयोगविलक्षणः संबन्धः कल्पितः स समवाय शब्दवाच्यः"[१५] इति।

तस्मात् अयुतसिद्धयोस्संबन्धस्समवायः, स च नित्ययोर्नित्यः, अनित्ययोरनित्यः, नित्यानुमेयश्चेति सिद्धम्।

## न्यायमतानुगाः प्राभाकरा इति निरूपणम्

एतावता नैयायिकैः वैशेषिकैर्वा प्रसाधितोऽयं समवायः प्राभाकरैरपि तथैव अन्वसारीत्यत्र न कापि विप्रतिपत्तिः दार्शनिकानाम्। तथा हि- "इहेदमिति यतः कार्यकारणयोस्स समवायः"[१६] इति हि काणादं सूत्रम्। सूत्रमिदं प्रशस्तपादैः **"अयुतसिद्धानामाधाराधेयभूतानां यस्संबन्ध इहेति प्रत्ययहेतुस्समवायः"**[१७] इति व्यवारि। इदमेव विचिन्वानः शालिकाचार्यः **"प्रतीत्य ह्याधारमाधेयं च संबन्धं प्रतीयात्"**[१८] इति न्यरूपयत्। अपि च पृथग्गतिमत्त्वं पृथगाश्रयाश्रितत्वं च युतसिद्धिस्तद्विपरीता अयुतसिद्धिरिति प्रशस्तपादोऽभ्यधात्। प्रकरणपञ्चिका-व्याख्याता नारायणोऽपि एतमेव पक्षं न्यायसिद्धौ सविस्तरमुपस्थापयत्। एवं गुणगुणिनोः भेदः यथा न्यायवैशेषिकग्रन्थयोः निरूपितः तथैव गुरुमतानुगैरपि स्वीकृतः। तदाह प्रकरणपञ्चिकाकारः- **"इयं च भेदसाधने युक्तिः अन्वयव्यतिरेकाभ्यां हि वस्त्वन्तरमवसीयते, अवगम्यमानोऽपि चावयवी विलक्षणबुद्धिगोचरतामावहत्येव"**[१९] इत्यादिग्रन्थेन। अवयवात् भिन्नः अवयवी, तदनुपलम्भेऽप्युपलभ्यमानत्वात्, कुड्यघटवत्, अवयवी भिन्नः तेषां बहुत्वे सति एकत्वेनाबाधितप्रत्ययवेद्यत्वात् स्थूणासु वंशवत् इत्याद्यनुमानमानमत्र विवक्षितम्। अत एवं प्रतीमः गुरुमतस्य समवायराद्धान्ते वैशेषिकमतमेव मूलमिति। परंतु गुरुमतानुयायिनः समवायस्य नानात्वं नित्यगतस्य नित्यत्वं, अनित्यगतस्य अनित्यत्वमिति च वर्णयन्ति। तदाहुः- **"समवायं च न वयं काश्यपीया इव नित्यमुपेमः"**[२०]। इति।

## अलौकिकसंनिकर्षः

एवमलौकिकसंनिकर्षविवेचनावसरे मीमांसाप्रस्थाने मतभेदो दरीदृश्यते। न्यायदर्शनवासनावासितान्तःकरणात् गागाभट्टादन्ये भाट्टाः प्राभाकरा वा अलौकिकसंनिकर्षं नाभ्युपगच्छन्ति। गागाभट्टोऽपि सामान्यलक्षणाज्ञानलक्षणा-प्रत्यासत्तिभेदेन अलौकिकसंनिकर्षस्य द्वैविध्यमभ्युपागमत्। तथा हि- सामान्यलक्षणा च सामान्यज्ञानम् अथवा ज्ञायमानं सामान्यम्। अनेन संनिकर्षेण इन्द्रियसम्बद्धानां तत्सामान्याश्रयव्यक्तीनां प्रत्यक्षं जायेत। यदि सामान्यलक्षणः संनिकर्षः नाङ्गीक्रियते तर्हि प्रकृतगोपदार्थे शक्तिग्रहे इतरगोव्यक्तीनामप्रत्यक्षतया सर्वत्र गोव्यक्तिषु शक्तिग्रहो न स्यादिति सामान्यलक्षणाप्रत्यासत्तेः स्वीकारः आवश्यकः। तदुक्तं भाट्टचिन्तामणौ- **"वस्तुतः सिद्धसुखविषयकप्रवृत्त्यभावात् असिद्धसुखज्ञानार्थम् अरण्यस्थदण्डादौ प्रवृत्तिजनकघटहेतुताग्रहार्थं शक्तिग्रहार्थं च सामान्यलक्षणा आवश्यकीति"** इति[२१]।

एवं ज्ञानलक्षणाप्रत्यासत्तिनिरूपणावसरे "तत्र तज्ज्ञानमेव प्रत्यासत्तिरिति प्रोवाच गागाभट्टः। "सुरभि चन्दनम्" इति प्रत्यक्षे सौरभस्य भानं ज्ञानलक्षणां विना नोपपद्यते। तदिन्द्रियजन्यज्ञाने तदिन्द्रियग्रहणायोग्यधर्मस्य स्वरूपतो भाननिर्वाहार्थं ज्ञानलक्षणा। तथा च ज्ञानलक्षणाख्यसंनिकर्षानङ्गीकारे ज्ञातपूर्वस्य सुरभिचन्दनखण्डस्य चक्षुरिन्द्रियेण सह संनिकर्षस्याभावात्। अतः तज्ज्ञानमेव तत्र संनिकर्षः। तद्धर्मज्ञानात् तद्धर्मप्रत्यक्षोत्पत्तौ ज्ञानलक्षणेति व्यवहारः। स्वप्रकारीभूततद्धर्मवत्तासम्बन्धेन प्रत्यक्षं प्रति स्वविषयतद्धर्मवत्तासम्बन्धेन सामान्यलक्षणायाः कारणत्वम्। अलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति विषयतासम्बन्धेन ज्ञानलक्षणायाः हेतुत्वमिति विशेषः। एवं च उभयोः प्रत्यासत्त्योः ज्ञानरूपत्वेऽपि फलवैचित्र्यात् भेदेन व्यवहार इति दिक्।

## अथ शब्दार्थसम्बन्धमीमांसा

"अथातो धर्मजिज्ञासा"[२२] इति आरभ्य "अन्वाहार्ये च तद्दर्शनात्"[२३] इत्येवमन्तं मीमांसाशास्त्रम्। तत्र प्रथमसूत्रेण धर्मविचारस्यावश्यकतां स्थापयामास। "चोदनालक्षणोऽर्थो धर्म इति द्वितीयसूत्रेण चोदनैव लक्षणं यस्य, चोदनालक्षणमेव यस्येति अवधारणद्वयप्रदर्शनपुरस्सरं चोदनातिरिक्तानां प्रत्यक्षादीनां धर्मं प्रति अप्रमाणत्वं, चोदनाया अप्रामाण्ये किमपि कारणं नास्तीति अर्थद्वयं सूचितम्। "चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः"[२४] इति भाष्यवचनात् "चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः"[२५] इति वार्तिकाच्च चोदना नाम क्रियासु प्रवर्तकोपदेशः। अत्र प्रवर्तक इति निवर्तकस्याप्युपलक्षणम्। शब्दस्वरूपोपदेशात्मिकायाश्चोदनायाः स्वतोऽदृष्टायाः पुरुषदोषाधीनदुष्टत्वं न सम्भवतीति निरूपितम्। पुरुषानुप्रवेशश्च त्रेधा ह्यत्र भवति– पदपदार्थसम्बन्धद्वारेण, वाक्यवाक्यार्थसम्बन्धद्वारेण, ग्रन्थस्यैव वा भारतादिवत् पौरुषेयत्वादिति। तत्र भारतादिवत् पौरुषेयत्वं निराकारि वेदपौरुषेयत्वाधिकरणे। वाक्यार्थस्य पदार्थमूलकत्वव्यवस्थापनेन तद्भूताधिकरणे पुरुषानुप्रवेशो दूरोत्सारितः। औत्पत्तिकसूत्रेण पदपदार्थसम्बन्धरचनाद्वारा पुरुषानुप्रवेशो नास्तीति प्रत्यपादि। एवं शब्दनित्यत्वाधिकरणे शब्दस्य नित्यत्वम्, आकृत्यधिकरणे चाकृतेः पदार्थत्वमथ च तन्नित्यत्वं च व्यवस्थापितम्। तदनुसारेण नित्ययोः शब्दार्थयोर्विद्यमानस्सम्बन्धः किंरूपः? इति जिज्ञासा अत्र स्वावसरे प्रवर्तते।

अत्र इत्थं विचार्यते– शब्दार्थयोः नित्यत्वादेव कार्यकारणभावो वा निमित्तनैमित्तकभावो वा तत्सम्बन्धो न भवितुमर्हति न तावत् संयोगः, विप्रकृष्टत्वात् शब्दार्थयोः। न च क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे भवतः। अतः

शब्दार्थयोः विप्रकृष्टत्वादेव समवायो वैशिष्ट्यं वा तत्सम्बन्धो भवितुं नार्हति। सम्बन्धान्तराण्यपि नैवात्रात्मानं लभ्यन्ते। तथा च शब्दार्थयोस्सम्बन्धो दुर्निरूप इति चेन्न। प्रत्याय्यप्रत्यायकत्वरूपसम्बन्धो वर्तत एव। अयमेव वाच्यवाचक-भावापरपर्यायः संज्ञासंज्ञिलक्षणस्सम्बन्ध इति व्यवस्थितम्। पदसमुदायात्मकानि हि वाक्यानि श्रूयमाणानि अर्थविशेषं प्रत्याययन्ति। तत्र शब्दस्यार्थः प्रत्याय्यः अर्थस्य शब्दः प्रत्यायक इति। इदमेव प्रत्याय्यप्रत्यायकत्वं प्रत्ययशब्देनात्र पदार्थस्मृतेः परिग्रहो मा भूदिति तद्व्यावर्तनेनानुभाव्यानुभाव-कत्वमिति व्यवह्रियते।

प्रमाणानां प्रमेयैरस्माकं सार्वत्रिकस्सम्बन्धो वर्तते - यथा चक्षुरिन्द्रियं संयुक्ततादात्म्येन सम्बद्ध्यमानं रूपं प्रकाशयति, यथा धूमादिश्च व्याप्त्यादिना सम्बन्धेन वह्न्यादिकं, यथा च शब्दोऽपि प्रत्याय्यप्रत्यायकत्वरूपेण सम्बन्धेन अर्थं बोधयति इति। तत्र सर्वत्र सम्बन्धस्य अर्थप्रत्यायने मार्गद्वयं दरीदृश्यते। तत्रैकः स्वयमविज्ञात एव सम्बन्धः स्वरूपसन्नर्थावगमे निमित्तं भवति। यथा प्रत्यक्षे चक्षूरूपसन्निकर्षोऽनिर्ज्ञातेन्द्रियसन्निकर्षवृत्तान्तस्यापि विस्फारितनेत्रस्य रूपोपलब्धिदर्शनात्। अपरस्तु सम्बन्धः पूर्वगृहीतः स्मृतिपथमुपयन्नर्थावगमे कारणम्, यथा अनुमानादौ। न च खल्वगृहीतव्याप्तिसम्बन्धो विस्मृततत्सम्बन्धो वा धूमेन वह्निमनुमिमाने दृष्टः। तथैव शब्दप्रमाणेऽप्यानुभावकत्वं शक्तिरूपः सम्बन्धोऽपि पदपदार्थयोर्ज्ञायमान एवार्थप्रतिपत्तिहेतुरिति वक्तव्यम्।

इदमत्र बोध्यम्– यत्र वस्तुप्रयोजिका शक्तिः सा ज्ञाननिरपेक्षैव तद्वस्तु प्रयुङ्क्ते। ज्ञानप्रयोजिका तु शक्तिः स्वयं विज्ञातैव स्वकार्याय प्रभवतीति स्वीकारात्। अत एव शक्तिज्ञानसहकृतं पदज्ञानं पदार्थस्मृतिं कुर्वदेव शाब्दबोधं प्रति हेतुर्भवतीति सर्वतन्त्रसिद्धान्तः। एतेन यदि शक्तिरनुभवजननाकूलैव शब्दार्थसम्बन्धः, तर्हि तामजानतोऽपि अव्युत्पन्नस्य शब्दश्रवणे शाब्दबोधः प्रसज्यते। न चाजानतापि संस्पृष्टो न दहति पावक इति वाच्यम् इति प्रत्युक्तम्।

ननु अर्थावबोधे फले सति तदेकोन्नेयस्य शक्तिरूपसम्बन्धस्य ज्ञानं सम्बन्धज्ञानाच्चार्थावबोध इति अन्योन्याश्रयप्रसङ्ग इति चेत्- अत्रोच्यते। न ब्रूमो वयं यथा श्रोतारः सम्बन्धज्ञानात् शब्दार्थमवगम्य तदन्यथानुपपत्त्या सम्बन्धमव-गच्छन्तीति येनोक्तपरस्पराश्रयदोषप्रसङ्गः स्यात्। किं तर्हि? वृद्धव्यवहारादिभिरुपायैः शब्दार्थसम्बन्धं प्रतिपद्यन्ते प्रतिपन्नसम्बन्धाश्च व्युत्पन्नास्सन्तः शब्दश्रवणेऽर्थमव-बुध्यन्ते। एवं च सति न पूर्वोक्तदोषावसरः। ते चोपायाः वृद्धैरेवं परिगणिताः–

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।।[२८] इति।

नन्वेवं सति गामानयेत्यादि वृद्धव्यवहारो यो भवति, येन च बालो व्युत्पद्यते, सोऽपि शब्दार्थसम्बन्धज्ञानसव्यपेक्ष एव। स च यदि ततः पूर्वेण व्यवहारेण, सोऽपि ततः पूर्वेणेति उत्प्रेक्षाया अपर्यवसानात् अनवस्थादोषप्रसङ्गः स्यादिति चेत्- मैवम्, बीजाङ्कुरादिन्यायेन वृद्धव्यवहारपरम्पराया अनादित्वस्वीकारात्। अन्यथा उक्तानवस्थादोषपरिहाराय कुत्रचित् स्वाभाविकत्वस्वीकारः आवश्यको भवेत्। तथा सति प्रथमातिक्रमे कारणविरहात् प्रथम एव स्वाभाविकत्वं स्वीक्रियताम्। अत एव सूत्रकारेण निरदेशि "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायण-स्यानपेक्षत्वात्"[२७] इति। अत एव तन्त्ररहस्यकृता श्रीरामानुजाचार्येण न्यगादि शब्दार्थसम्बन्धस्यानादित्वम् "इत्थं वर्णानां नित्यत्वात् अर्थस्य च प्रवाहरूपेण नित्यत्वात् तत्सम्बन्धस्य अनादितया अपौरुषेयत्वं तथा हि- इदानीन्तनवृद्धव्यवहारे इदानीन्तनव्युत्पिपत्सूनां शक्तिग्रहः। तथा पूर्वव्युत्पिपत्सूनां पूर्ववृद्धव्यवहारे। तथा पूर्वतराणां पूर्वतरेदम्प्रथमे संस्कारमण्डले शब्दार्थपरम्परायाः अनादित्वात् तत्सम्बन्धस्यापि अनादित्वम्"[२८] इति।

शब्दस्य स्वाभाविके वाचकत्वे सत्यपि शब्दादर्थप्रतीतौ वृद्धव्यवहाराधीन-वाच्यवाचकभावधीस्सहकारिणीति प्रागुपापीपदाम। नैतावता तत्र शब्दस्य अर्थबोधनसामर्थ्याभावश्शङ्कनीयः। यथा चक्षुरिन्द्रियं रूपं प्रकाशयितुं समर्थमपि न बाह्येन प्रकाशेन विना तं प्रकाशयतीति नैतावता तत्र प्रकाशनसामर्थ्याभावः शङ्क्यते, तद्वदत्रापीति भाव्यम्। तत्र वाचकत्वं नाम शब्देन अर्थमभिधत्त इत्यादि व्यवहारानुरोधेन अर्थप्रतीत्युद्देश्यिकायां शब्दकरणिकायामभिधानक्रियायां शब्दज्ञानरूपायां यत् शब्दस्य करणत्वं तदेव। अभिधानक्रियाजन्यप्रतिपत्तिरूप-फलशालित्वेन यत् कर्मत्वमर्थस्य तदेव तस्य वाच्यत्वम्। सोऽयं वाच्यवाचक-भावरूपस्सम्बन्धः शक्तिरिति व्यवह्रियते।

"सम्बन्धः अनेकविधः वाक्यात् गम्यते"। क्वचित् क्रियाकारकसम्बन्धः। क्वचित् विशेषणविशेष्यसम्बन्धः। क्वचित् लक्ष्यलक्षणसम्बन्धः। इत्येवंप्रकाराः सम्बन्धविशेषाः[२९] इति दशमषष्ठे भाष्ये सम्बन्धनिरूपणं दृश्यते। एवं सम्बन्धः आकाङ्क्षापूर्वकः[३०] इति सम्बन्धोऽपि शब्दार्थयोर्नित्य[३१] इति च कुमारिलेनापि सम्बन्धस्य निरूपणात्।

।।इति शम्।।

## सन्दर्भ सूची-


१. पूर्वमीमांसा, १.१.४.
२. शास्त्रदीपिका, १.१.४.
३. न्यायवार्तिकम्, १.१.४.
४. न्यायमञ्जरी, १.१.४.
५. मानमेयोदयः, प्रत्यक्षखण्डः
६. भाट्टचिन्तामणिः, पृ. १५.
७. तन्त्रसिद्धान्तरत्नावली, ३२.
८. श्लो.वा., पृ. १३५.
९. श्लो.वा., पृ. १३०.
१०. श्लो.वा., पृ. ८३५-८३६.
११. मानमेयोदयः, पृ. १५.
१२. भाट्टचिन्तामणिः, पृ. १६.
१३. वैशेषिकदर्शनम्, ७.२.२६.
१४. प्रकरणपञ्चिका, पृ. १२.
१५. नयविवेकः, पृ. ९९.
१६. वैशेषिकदर्शनम्, ७.२.२६.
१७. प्रशस्तपादभाष्यम्, पृ. ३७.
१८. प्रकरणपञ्चिका, पृ. ९.
१९. प्रकरणपञ्चिका, पृ. ८५.
२०. प्रकरणपञ्चिका, पृ. ९२.
२१. भाट्टचिन्तामणिः, पृ. २३.
२२. मीमांसादर्शनम्, १.१.१.
२३. मीमांसादर्शनम् , १२.४.
२४. शाबरभाष्यम्, १.१.२.
२५. श्लोकवार्तिकम्
२६. न्यायसिद्धान्तमुक्तावली, शब्दखण्डः
२७. मीमांसादर्शनम्, १.१.५.
२८. तन्त्ररहस्यम्
२९. शाबरभाष्यम्, १०/६/२/३.
३०. तन्त्रवार्तिकम्, २/१/१/१.
३१. तन्त्रवार्तिकम्, १/१/५/५.

# मीमांसायां सम्बन्धविमर्शः

वैदिकावैदिकभेदेन द्विधा विभक्तेषु भारतीयदार्शनिकप्रस्थानेषु वैदिकवर्गे परिगणितेन वाक्यशास्त्रापरपर्यायेण मीमांसाशास्त्रेण वैदिकवाक्यार्थनिर्धारण-प्रक्रियायामेवात्मनो दार्शनिकस्वरूपमप्याविष्कृतम्। मीमांसाशास्त्रस्य प्रवर्त्तकत्वेन परमर्षिणा जैमिनिमुनिना "अथातो धर्मजिज्ञासा"[1] इत्यनेनारभ्य "अन्वाहार्ये च दर्शनादि"[2] त्यन्तपर्यन्तं कर्मात्मको धर्म एव निखिलायां द्वादशलक्षण्यां निरूपित इत्यर्थो धीधनानां समवाये प्रसिद्धः। "आम्नायस्य क्रियार्थत्वादि"[3]त्यनेन सिद्धान्तगर्भितेन पूर्वपक्षोत्थापितेन सूत्रेण कर्म पदार्थ एव धर्मस्वरूपेण निखिलायां मीमांसायां निरूपितो वर्तते। स्वयञ्च वर्त्तिककृताऽपि "धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्"[4] इत्यनेन वार्त्तिकेनायमेवार्थः प्रतिपादितः। धर्मोऽयं कर्मात्मकः वेदार्थरूपः, वैदिकवाक्यार्थावबोधनिष्पन्नः। वैदिकमपि वाक्यं, शब्दार्थावबोधधीमाध्यमेनैव धर्मप्रमाजनकमत एव शब्दवाक्यप्रतिपाद्यार्थ-धीज्ञानाधीनत्वाद्वेदगम्यार्थात्मको विद्यते धर्मस्तस्मादस्य वेदार्थस्वरूपस्य धर्मस्य ज्ञानं वाक्यार्थज्ञानाधीनम्। वाक्यार्थज्ञानं शब्दार्थज्ञानाधीनम्। उभयोरेतयोः शब्दार्थवाक्यार्थयोर्ज्ञानस्य शब्दार्थवाक्यार्थयोर्मध्येऽर्थबोधकत्वेनाभिमतस्य शक्त्याख्यसम्बन्धस्य ज्ञानाभावेऽशक्यत्वात् कर्मात्मकधर्मस्वरूपावधारणार्थं शब्दे वाक्ये च विद्यमानोऽयं शब्दार्थसम्बन्धो मीमांसायां प्राथम्येनापेक्षते।

विधिप्रधानवेदवाक्यार्थधीगम्यस्य धर्मस्य ज्ञाने सञ्जाते, अनुष्ठानप्रक्रिया-यामस्य सांसारिकाणां द्रव्यगुणकर्मसामान्यशक्तिरूपाणां पदार्थानां परस्पर-समन्वयार्थं संयोगतादात्म्यसंज्ञकौ वृत्तेर्नियामकत्वेनापेक्षेते द्वाविमौ सम्बन्धौ। एवमेव यागक्रियारूपेण धर्मेण सह पदार्थानां समन्वयार्थमपेक्ष्यते साक्षात्सम्बन्धेन सह परम्परासम्बन्धोऽपि।

मीमांसाशास्त्रे प्रधानपदार्थरूपेणाभिमतस्य धर्मस्यानुष्ठानेऽस्य पदार्थान्तरेण सम्बन्धस्यानिर्वार्यत्वान्मीमांसायां शब्दार्थसम्बन्धेन सह पदार्थसम्बन्धोऽपि विचारपदवीमनिवार्यरूपेण समारूढो वर्त्तते।

**शब्दार्थसम्बन्धः–**

शब्दार्थस्तु मीमांसायां वाक्यार्थरूपेणैव धर्मबोधकत्वादभीष्टः। यद्यपि वाक्यार्थस्याभिमतत्वाद्वाक्यार्थसम्बन्धस्यैव विचारयोग्यत्वं, परन्तु, वाक्यार्थस्य

शब्दार्थघटितत्वेन भाट्टवीथिकायां स्वीकाराद्वाक्यार्थज्ञानस्य शब्दार्थज्ञानाधीनत्वाद्वाक्यार्थसम्बन्धस्यापि शब्दार्थसम्बन्धाधीनत्वस्य स्पष्टत्वादादौ शब्दार्थाभ्यां सह तयोः सम्बन्धोऽपि विचारपदवीं समावलम्बते।

**शब्दार्थसम्बन्धानां त्रयाणामपि नित्यत्वम्–**

शब्दार्थस्तु मीमांसायां वाक्यार्थरूपेणैव धर्मावबोधकत्वादभिष्टः। यद्यपि वाक्यार्थस्याभिमतत्वाद्वाक्यार्थसम्बन्धस्यैव विचारयोगयत्वं, परन्तु वाक्यार्थस्य शब्दार्थघटितत्वेन भाट्टवीथिकायां स्वीकाराद्वाक्यार्थज्ञानस्य शब्दार्थज्ञानाधीनत्वाद्वाक्यार्थसम्बन्धस्यापि शब्दार्थसम्बन्धाधीनत्वं स्पष्टमेव परिलक्ष्यते। परमर्षिणा जैमिनिना **'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध'**[५] इत्यादिना औत्पत्तिकसूत्रेण शब्दार्थसम्बन्धानां त्रयाणामपि औत्पत्तिकत्वं प्रतिपादितम्। भाष्यकृता शबरस्वामिनाऽत्रौत्पत्तिक इति नित्यं ब्रूम[६] इत्यनया पङ्क्त्या शब्दार्थसम्बन्धस्य नित्यत्वं स्पष्टतः प्रतिपादितम्। शब्दार्थसम्बन्धस्य नित्यत्वान्यथानुपपत्त्याऽर्थापत्त्या शब्दार्थयोरपि नित्यत्वमर्थबलादेव समागतम्। यद्यपि शब्दार्थयोरेतयोः नित्यत्वं भाट्टप्राभाकराभ्यामुभाभ्यामपि सम्प्रदायाभ्यामभिमतन्तथाप्येतयोः स्वरूपविषये सम्प्रदाययोरुभयोर्वतते मतवैभिन्यम्।

**प्राभाकरमतम्–**

प्राभाकरैर्यद्यपि, तार्किकानुरूपं शब्दस्याकाशगुणत्वमङ्गीक्रियते तथाप्येतेषां नये शब्दे गुणत्वेऽपि[७] **'कारणरहितत्वात् स एव गकार'**[८] इति प्रत्यभिज्ञानान्नित्यस्य शब्दस्योच्चारणादिध्वनिभिरभिव्यक्तिरङ्गीक्रियते। इमे प्राभाकरा अन्विताभिधानवादिनः। एतेषां नये अर्थावबोधिका प्रत्यायकत्वसम्बन्धरूपा शक्तिः शब्दार्थयोर्न स्वीक्रियतेऽपितु वाक्ये एव वाक्यार्थावबोधिका शक्तिरिति इमे प्रतिपादयन्ति। वाक्येऽपि **'यजेत'** इत्यादिषु वैदिकवाक्येषु कार्यत्वेनाभिमतेनापूर्वेण समन्विते वाक्ये एवार्थावबोधिकायाः प्रत्यायकत्वसम्बन्धरूपायाः शक्तेरिमे प्रतिपादका सन्ति।[१] लौकिकवाक्येषु अपूर्वस्याशक्यत्वात् कार्यत्वशब्दस्य लक्षणया क्रियया सहान्वितानां वाक्यानामर्थावबोधिका शक्तिरेभिः प्रतिपाद्यते।

**भाट्टाभिमतः शब्दार्थसम्बन्धः–**

भाट्टमतावलम्बिभिर्मीमांसकैः वर्णात्मकस्य शब्दस्य नित्यत्वं यद्यपि प्राभाकराणामनुरूपमेव स्वीक्रियते परन्तु, प्राभाकराणामिव इमे शब्दस्य गुणत्वं नैव स्वीकुर्वन्ति अपितु, **'स एव गकार'** इति प्रत्यभिज्ञानेन सह विविधैरनुमानैरपि

महता संरम्भेण नित्यत्वेनैव[10] सहास्य द्रव्यत्वमपि संसाधयन्ति। एतेषां भाट्टानां मते यथा घटादयः शब्दाः नित्यास्तथैवेतेषामाकृतिरपरपर्यायाः घटत्वादयः शब्दार्थरूपाः जातयोऽपि नित्याः।[11] उभयोरेतयोः शब्दार्थयोर्नित्यत्वदुभयोः प्रत्यायकत्वरूपः शक्त्यात्मकः सम्बन्धोऽप्येतेषां नये नित्यत्वात्त्रयाणामेव शब्दार्थसम्बन्धानां नित्यत्वमेतेषामभिमतं मतम्।

शाब्दबोधप्रक्रियायामादौ पदानामभिहितत्वात्तेषु पदार्थावबोधिका शक्तिः पदपदार्थयोर्मध्ये सम्बन्धरूपेण स्वीक्रियते। कमलाकरभट्टपादैस्तावदत्र **'शब्दार्थसम्बन्धश्च शक्त्याख्यो नित्य'**[12] इत्यनया पङ्क्त्या शब्दार्थयोः शक्त्याख्यसम्बन्धस्य नित्यत्वं साध्यते। भाट्टचिन्तामणौ श्रीविश्वेश्वरभट्टापर-नामधेयेन गागाभट्टमहाभागेन **'अव्यवधानेन शब्दजन्यप्रतीत्यनुकूलो वृत्तिः शक्ति'**[13]**रित्थं'** शक्तिलक्षणमुपस्थाप्य तार्किकाभिमतमस्याईश्वरेच्छात्मकत्वं निरस्य पदार्थान्तरत्वं प्रत्यपादि।

शक्तिमत्पदैः पदार्थाभिधाने सञ्जाते पदार्थानां वाक्यार्थावबोधं भाट्टमीमांसकाः लक्षणावृत्त्या प्रतिपद्यन्ते। एतदर्थमेतेषां नये शाब्दबोधार्थं शक्त्या सह लक्षणावृत्तेरपि स्वीकारोऽनिवार्यः। एवमेव **'यजमानः प्रस्तरः, आदित्यो यूपः,** इत्यादिषु स्थलेषु मुख्यार्थस्यानुपपत्त्या लक्षणावृत्तिरनिवार्या वर्तते। एवमेव, **'वायुर्वै क्षेपिष्ठा देवता'** इत्यादिषु स्थलेषु शब्दार्थस्यानन्यलभ्यत्वसिद्धान्तस्याभिमतत्वाद्वायुयाग-प्राशस्त्यात्मकस्यार्थस्य प्रकाशनार्थं लक्षणावृत्तेरनिवार्यता स्पष्ट एव विजृम्भते। एवञ्च भाट्टाभिमतेषु शाब्दबोधप्रक्रियासु शक्तिलक्षणे द्वौ सम्बन्धौ स्वीक्रियेते।

**वृत्तिनियामकाः सम्बन्धाः–**

वृत्तिनियामकाऽनियामकभेदेन सम्बन्धतत्त्वस्य द्वैविध्यं शास्त्रेषु परिलक्ष्यते। एतयोः सम्बन्धयोर्मध्ये येन सम्बन्धेन कस्यचित्पदार्थस्य कस्मिञ्चिदन्यस्मिन् पदार्थेऽस्तित्वं प्रतिपाद्यते सः सम्बन्धो वृत्तिनियामको सम्बन्ध इत्युच्यते। आधाराधेयभावरहितयोः पदार्थयोः सम्बन्धो वृत्तेरनियामको वर्तते सम्बन्धः। अनया दृष्ट्या विचारे कृते विवेचितो शब्दार्थसम्बन्धो वृत्तेरनियामकः सम्बन्धः। अन्ये संयोगसमवायस्वरूपकालिकतादात्म्यादिभेदेनानेकविधा वृत्तिनियामकाः सम्बन्धा विजृम्भते। एतेषु संयोगसमवायौ प्राधान्येन वृत्तिनियामकत्वेन न्यायनयेऽभिमतौ। प्राभाकरैरपि इमावेव संयोगसमवायौ वृत्तिनियामकसम्बन्ध-त्वेनाङ्गीकृतौ। भाट्टवीथिकायामेतयोर्मध्ये संयोगस्तु वृत्तिनियामकत्वेन सम्बन्धेन स्वीक्रियते परन्तु, समवायस्य स्थाने भाट्टैस्तादात्म्यसम्बन्धस्य प्रतिपादनं विधीयते।

## अनित्यसंयोगस्य त्रैविध्यम्–

सर्वद्रव्यवर्तित्वेन सामान्यगुणत्वेन चाभिमतस्य संयोगसम्बन्धस्य नित्यानित्यत्वेन द्वैविध्यमङ्गीक्रियते।[१४] तत्र नित्यविभूनामाकाशादीनां मिथः संयोगो नित्यः। अनित्यस्य संयोगस्य १- अन्यतरकर्मजः, २- उभयकर्मजः, ३. संयोगजसंयोगश्चेति त्रयो भेदाः भाट्टैः प्रतिपाद्यन्ते। मानमेयोदयग्रन्थस्य मेयविभागे एतेषां त्रयाणामुदाहरणान्यपि प्रदर्शितानि सन्ति। एतेषु–

१. स्थाणुश्येनयोः संयोगोऽन्यतरकर्मजन्यसंयोगो वर्तते। उभयोरेतयोः श्येनस्यैव क्रियाजन्यत्वादयं संयोगोऽन्यतरकर्मजन्यः संयोगः।

२. युध्यतोर्मल्लकृष्णयोः संयोग उभयकर्मजसंयोगस्योदाहरणत्वेन प्रकाशितः।

३. हस्ततरुसंयोगाज्जायमानः कायतरुसंयोगः संयोगजसंयोगस्योदाहरणत्वेन मानमेयोदयस्य मेयभागे प्रकाशितः।[१५]

## समवायनिरसनपुरस्सरं तादात्म्यस्य सम्बन्धत्वेन स्थापनम्–

न्यायवैशषिकाभ्याम् 'अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स समवाय' इत्यनया पङ्क्त्या पञ्चस्थानेषु वृत्तिनियामकसम्बन्धत्वेन समवायः प्रतिपादितः।[१६] एवमेवास्य नित्यसम्बन्धत्वमप्यङ्गीकृतमित्युपभ्यते। तार्किकाणामिव वृत्तिनियामकत्वेन रूपेणायं समवायसम्बन्धः प्राभाकराणामप्यभिमतो वर्तते परन्तु, इमे समवायस्य नित्यत्वमात्रं न स्वीकुर्वन्ति। यथा नित्यानां सम्बन्धिनां समवायस्य नित्यत्वं वर्तते तथैव, अनित्यानां सम्बन्धिनां समवायसम्बन्धस्याप्यनित्यत्वमेभिः प्रतिपाद्यते।[१७] उभाभ्यामेताभ्यां तार्किकप्रभाकराभ्यां सम्प्रदायाभ्यां भिन्ना एव दृष्टिरत्र प्रकाश्यते भाट्टानाम्। एभिर्वृत्तिनियामकत्वेन समवायसम्बन्धो न स्वीक्रियते। अस्य समवायसम्बन्धस्य निराकरणार्थमेभिरुच्यते यदपृथग्गतिमत्त्वमपृथगाश्रयाश्रयिभावरूपेण च इष्यते समवायसम्बन्धः, परन्तु समवायस्य लक्षणमिदमवयवावयविनोरपि न घटते। अवयविनः निष्क्रियत्वेऽपि शाखादिष्ववयवेषु गतेरवलोकनादवयविनो गतेरभावादत्रापृथग्गतिमत्त्वं न सङ्गच्छते। एवमेव अवयवेष्वाश्रितत्वादवयविनः, अवयवानामपि स्वावयवाश्रितत्वादेतेषामाश्रयाणां पार्थक्यादपृथगाश्रयाश्रयिभावलक्षणमपि समवायस्य नोपपद्यते।[१८]

समवायनिराकरिष्णुना नारायणेनोत्थापितोऽयं प्रश्नः यत्समवायो यद्यङ्गीक्रियते, किमस्यास्तित्वे मानम्? प्रत्यक्षमित्युच्यते चेत्केनेन्द्रियेण केन सन्निकर्षेण

निष्पद्यते इदं समवायप्रत्यक्षम्? विशेषणविशेष्यभाव–संज्ञकेनेन्द्रियसमवाय-सम्बन्धोऽत्र वर्तते इति चेदस्य विशेषणविशेष्य– भावस्य सम्बन्धत्वमेव नोपपद्यते।[१९] तर्कभाषायाः कर्त्रा केशवमिश्रेणापि समवायस्य सम्बन्धत्वं, पूर्वपक्षिणां मीमांसकानामेव दृष्ट्या भिन्नोभयाश्रितैकत्वाभावात् निराकृतं वर्तते।[२०]

समवायस्यानभिमतत्वान्नारायणपण्डितेन "तस्मादवयवावयविनोर्गुण-गुणिनोर्जातिजातिमतोः क्रियाक्रियावतोश्च परस्परं तादात्म्यमेव सम्बन्धः" इत्यनया पङ्क्त्या एतेषु स्थलेषु वृत्तिनियामकत्वेन सम्बन्धेन समवायसम्बन्धस्य स्थाने तादात्म्यसम्बन्धः प्रतिपादितः।[२१] ग्रन्थस्य मानभागस्य निर्मात्रा नारायणभट्टेनापि प्रत्यक्षप्रमाणसन्दर्भे सन्निकर्षविचारस्थले तार्किकैः प्रतिपादितानां संयुक्तसमवायसंयुक्तसमवेतसमवायसमवायसंज्ञकानां त्रयाणां सन्निकर्षाणां स्थाने संयोगेन सह संयुक्ततादात्म्यस्य इन्द्रियार्थसम्बन्धत्वमङ्गीकृत्य "संयुक्ततादात्म्य-तादात्म्यं नाम तृतीयः सन्निकर्षोऽस्तु, का हानिः?" इत्यनया पङ्क्त्या द्वाभ्यां सह संयुक्ततादात्म्यतादात्म्यसंज्ञकः तृतीयोऽप्ययं सम्बन्धः स्वीकृतः। एवञ्चैभिः त्रयः सन्निकर्षाः स्वीकृताः सन्तिं। विषयेषु विद्यमानानां–

१. पृथिव्यप्तेजसां प्रत्यक्षं, चक्षुस्त्वगिन्द्रियाभ्यां संयोगसन्निकर्षात्सम्बन्धा-देभिः प्रतिपाद्यते।

२. एवमेव, शब्दस्य द्रव्यत्वाच्छ्रोत्रस्यापि दिग्द्रव्यत्वादुभयोः शब्दश्रोत्रयोः संयोगसम्बन्धस्योपपद्यमानत्वाच्छब्दग्रहणं संयोगसम्बन्धादेव भाट्टैः प्रतिपाद्यते।

३. कालस्यापि ग्रहणमेभिर्मीमांसकैः सर्वैरपीन्द्रियैः संयोगात्स्वीक्रियते।

४. द्रव्यग्रहणानन्तरं, पृथिव्यादिषु द्रव्येषु तादात्म्यभूतानां जातिगुणकर्मणां ग्रहणं संयुक्ततादात्म्येन सम्बन्धेन स्वीकृत्य एतेषां जातिगुणकर्मगतानां सत्तारूपत्व-कर्मत्वादीनां ग्रहणं नारायणपण्डितेन संयुक्ततादात्म्यतादात्म्यसंज्ञकेन तृतीयेन सम्बन्धेन प्रतिपाद्यते।[२२]

५. अथ च शब्दस्य द्रव्यात्वाच्छ्रोत्रशब्दयोः संयोगसम्बन्धादेव ग्रहणादनपेक्षित एवाऽयं समवायसम्बन्धः।

६. शब्दत्वस्य संयुक्ततादात्म्येनैव सम्बन्धेन भानाद्व्यर्थ एव समवेत-समवायोऽपि सन्निकर्षः।

७. एवमेव 'सम्बन्धो हि सम्बन्धिभ्यां भिन्नः उभयाश्रितश्चैकश्च' एतत् स्वीक्रियते सम्बन्धलक्षणम्। अस्य सम्बन्धलक्षणस्य विशेषणविशेष्यभावसम्बन्धे-ऽशक्यत्वान्नेष्यतेऽयमपि सम्बन्धः।

अनया दृष्ट्या कृतस्य विचारस्य इन्द्रियार्थानां सम्बन्धत्रयाणां प्रतिपादने एव तात्पर्यं परिलक्ष्यते। मानमेयादयस्य मानभागे अष्टम्या कारिकया अस्यार्थस्यैव संक्षेपः प्रकाशितः–

तत्राद्यं त्रिविधं तावन्नाममात्रेण भिद्यते।
समवायादयस्त्वन्ये सन्निकर्षाः निराश्रयाः।[२३]

**तादात्म्यसम्बन्धस्य भेदाभेदात्मकत्वप्रतिपादनम्–**

विवेचितस्य तदात्म्यसम्बन्धस्य विषये 'ननु किमिदं तादात्म्यम्?' इमं प्रश्नं समुत्थाप्यास्य 'तेन भेदाभेदौ तादात्म्यमिति' न्यायरत्नाकरे भेदाभेदेन स्वरूपेण तादात्म्यसम्बन्धो व्यवस्थापितः।[२४] मीमांसायां काणादाभिमतस्य विशेषपदार्थस्यास्वीकारात्परमाणुषु विशेषपदार्थस्य वृत्तिनियामकत्वेन कस्यापि सम्बन्धस्यावश्यकता एव नास्ति। एवञ्च मीमांसाशास्त्रे सम्बन्धरूपेण विवेचितयोः संयोगतादात्म्यसम्बन्धयोरेव प्रतिपादनं प्रायशः सर्वत्रोपलभ्यते। उभाभ्यामेताभ्यां वृत्तिनियामकाभ्यां सम्बन्धाभ्यामन्येषु कार्यकारणभावव्याप्यव्यापकभावादिषु संयोगतादात्म्ययोर्विद्यमानं यदुभयनिरूपणं, अस्योभयनिरूपणसादृश्यवशादेवैतेषु स्वीक्रियते सम्बन्धस्यौपचारिकी प्रवृत्तिः।

**साक्षात् सम्बन्धः परम्परासम्बन्धश्च–**

कर्मात्मकधर्मस्यावबोधार्थं तस्य कर्मानुष्ठानार्थञ्च वैदिकवाक्यानामर्थप्रतिपत्त्यर्थमङ्गीकृतेषु सिद्धान्तेषु मीमांसकानां साक्षात्सम्बन्धेन सह परम्परासम्बन्धोऽपि विविधेषु स्थलेषु प्रकाशितो वर्तते। स्थालीपुलाकन्यायमनुसृत्योभयोरपि सम्बन्धयोः कतिपयैरुदाहरणैः सङ्गतिः प्रदर्श्यते।

**१. शाब्दीभावनायामार्थीभावनायाः साक्षात्सम्बन्धः–**

वैदिकवाक्यानामर्थावबोधप्रक्रियया कर्मात्मकस्य धर्मस्यावबोधनार्थं प्रवृत्ताया मीमांसायाः प्रवर्त्तनावबोधस्थले वर्तते प्रवर्तनात्मिकायाः शब्दीभावनायाः स्वसाध्यरूपयाऽर्थीभावनया सह साक्षात्सम्बन्धः। तथाहि 'दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः'[२५] इत्यत्र यजेत इत्यस्मिन्पदेऽख्याततत्वलिङ्त्वांशाभ्यां सम्पन्नो वर्तते 'त' प्रत्ययः। अत्र 'त'-प्रत्ययनिष्ठाख्यातेनार्थीभावना प्रवृत्त्यपरपर्याया यथोच्यते, तथैवात्र लिङ्त्वांशेन प्रवर्तनात्मिका शाब्दीभावनोऽप्युच्यते। उभयोरेव समानप्रत्ययात्मिकायाः श्रुतेरवबोध्यमानत्वाच्छाब्दीभावनायां यदा समुत्पद्यते मम साध्यं किमित्याकारिका साध्यविषयिणी जिज्ञासा तदा, समानप्रत्ययगम्यत्व-(समानाभिधानश्रुतिगम्यत्व)-सम्बन्धेनार्थीभावना शाब्दीभावनायां साध्यत्वेन साक्षात्संबध्यते।

२. 'दध्ना जुहोति' इत्यत्रापि साक्षात्सम्बन्धः–

वेदवाक्यपरामर्शेणावबोधितस्य होमादिकर्मानुष्ठानस्यानन्तरं कर्मानुष्ठान-काले 'अग्निहोत्रं जुहोति'[२६] इत्यनेन श्रुतिवाक्येन कर्मणः होमस्य प्राप्तौ सञ्जातायां 'दध्ना जुहोति'[२७] इत्यनेन श्रुतिवाक्येन होमेन सह होमद्रव्यात्मकस्य गुणस्य (यागहेतुत्वाद्गौणभूतस्य) दध्नः सङ्घटते साक्षात्सम्बन्धः।

मीमांसायाः पदार्थमीमांसायामुभयविधः सम्बन्धः–

मीमांसायाः भाष्टाभिमतायां पदार्थमीमांसायां द्रव्यगुणकर्मसामान्यशक्त्य-भावसंज्ञकाः षट्संख्यकाः पदार्थाः स्वीकृताः। एतेषु सर्वेष्वपि पदार्थेषु "आम्नायस्य क्रियार्थत्वादित्यादिना सूत्रेण 'कर्म'-पदार्थस्य प्राधान्याङ्गीकारादन्येषां सर्वेषामेषां षण्णां पदार्थानां यागानुष्ठानात्मके धर्मत्वेन मीमांसायामभिमते कर्मणि समन्वयादेव स्वीक्रियतेऽर्थवत्त्वम्। एतेषां पदार्थानां केषाञ्चित् कर्मणि सङ्गच्छते साक्षात्सम्बन्धः। येषां साक्षात् सम्बन्धो न सङ्गच्छते तेषां कर्मणि पार्ष्ठिकः परम्परासम्बन्धो वोपपाद्यते।

१. कर्मणा सह द्रव्य-सम्बन्धः–

'व्रीहीभिर्यजेत'[२८] इत्यत्र व्रीह्यात्मकस्य पुरोडाशप्रकृतिभूतस्य द्रव्यस्य यागात्मके कर्मणि निष्पद्यते साक्षाद्विनियोगात्मकः सम्बन्धः।

२. कर्मणा सह गुण-सम्बन्धः–

'लोहितोष्णीषा ऋत्विजः प्रचरन्ति'[२९] इत्यत्र ज्योतिष्टोमस्य यागस्य विकृतौ श्येनयागे पठितेनानेन वाक्येन उष्णीषोद्देश्येन लौहित्यमात्रस्य विधानमपेक्ष्यते। अत्र लौहित्यस्य गुणपदार्थस्य उष्णीषद्रव्येण सह साक्षात् सम्बन्धः। अस्य गुणस्य उष्णीषद्रव्यस्य माध्यमेन श्येनयागेन कर्मणा सह मन्ये निष्पद्यते पार्ष्ठिकः परम्परा-सम्बन्धः। एवमेव, 'अरुणया पिङ्गाक्ष्यैकहायन्या (गवा) सोमं क्रीणाति।'[३०] इत्यत्रापि गुणस्यारुण्यस्य क्रयकर्मणि साक्षात्सम्बन्धस्याशक्यत्वादेक-हायनीद्रव्यस्य (गोः) माध्यमेन स्वीक्रियते पार्ष्ठिकः परम्परा-सम्बन्धः।

३. कर्मणा सह कर्म-सम्बन्धः–

दर्शपूर्णमासप्रकरणे श्रूतानामश्रुतफलानां 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति'[३१], इत्यादयः पञ्च प्रयाजाः श्रुताः। एतेषु यथा, फलानां श्रवणं नास्ति, तथैव, दर्शपूर्णमासयागे इतिकर्तव्यतायाः श्रवणमपि नास्ति। एवञ्च उभयोर्यागयोः परम्पराकाङ्क्षत्वादितिकर्तव्यताकाङ्क्षा-युक्तेन दर्शपूर्णमासयागेन कर्मणा सह फलाकाङ्क्षायुक्तानां पञ्चप्रयाजानामङ्गभूतानां कर्मणां स्वीक्रिते विनियोगात्मकः साक्षात्सम्बन्धः।

३. 'व्रीहीन्प्रोक्षति'[३२] इत्यत्र प्रोक्षणकर्मणः व्रीहिद्रव्येण सह साक्षात्सम्बन्धः। यागात्मकेन कर्मणा सहास्य व्रीहिद्रव्यस्य माध्यमेन निष्पद्यते परम्परासम्बन्धः।

४. कर्मणा सह सामान्य-सम्बन्धः—

'यस्य पर्णमयी जुहुर्भवति न (स) पापं श्लोकं शृणोति'[३३] इत्यत्र सामान्यविधिना (अनारभ्याधीतेन) यागात्मके निखिले कर्मणि (यागमात्रे) पलाशत्वस्य (सामान्यापरपर्यायस्य) जातेः वर्तते जुहुपात्रेण सह साक्षात्सम्बन्धः। तस्य च जुहुपात्रस्य माध्यमेनास्य सामान्यस्य यागेन कर्मणा सह मन्ये निष्पद्यते परम्परासम्बन्धः।

एवमेव, 'औदुम्बरो यूपो भवति'[३४] इत्यत्र विकृतौ यूपानुवादेन विधीयमानस्य उदुम्बरत्वस्य सामान्यस्य प्रथमतः यूपेन द्रव्येन सह वर्तते साक्षात्सम्बन्धः। अस्य यूपात्मकस्य द्रव्यस्य माध्यमेन निष्पद्यते यागात्मकेन कर्मणा सह पार्ष्ठिकः परम्परा-सम्बन्धः।

५. कर्मणा सह शक्तेः सम्बन्धः—

यद्यपि मीमांसायां वृत्तिनियामकत्वेन संयोगतादात्म्ययोरेव सम्बन्धत्वमङ्गीक्रियते तथापि, उभयनिरूपणीयसादृश्यवशाद्धेतुहेतुमद्भावव्याप्यव्यापकभावकार्यकारणभावादीनामौपचारिकः सम्बन्धोऽपि स्वीक्रियते। अस्मादेव कारणाद्यागजन्यापूर्वात्मिकायाः शक्तेः योगेन सह कार्यत्वसम्बन्धत्वेन सहैव यागजन्यफलेन सह कारणत्वसम्बन्धस्योपपत्तये स्वीक्रियते औपचारिकः कार्यकारणभावसम्बन्धः। यागात्मिकायाः क्रियायाः त्रिक्षणावस्थायित्वाद्यागजन्यफलनिष्पत्तेरन्यथानुपपत्त्याऽपूर्वात्मिकायाः शक्तेः फलेन सहाऽपेक्ष्यतेऽयं कार्यकारणभावसम्बन्धः।

६. कर्मणा सहभावस्योपकारकत्वसम्बन्धः—

यद्यपि, मीमांसायां प्राभाकरा अभावस्याधिकरणत्वमङ्गीकुर्वन्तः पृथक्पदार्थत्वेनास्यास्तित्वं नैव स्वीकुर्वन्ति तथापि, भाट्टैस्तावदस्य अभावस्यापि पृथक्पदार्थतयास्तित्वं स्वीक्रियते। भाट्टाभिमतायां पदार्थमीमांसायामन्येषां पदार्थानां यथा कर्मोपकारकत्वं विद्यते तथाऽभावपदार्थस्यापि यथाकथञ्चित्परिलक्ष्यत एवेदं कर्मोपकारकत्वम्।

तथाहि 'दीक्षितो न ददाति, न जुहोति,[३५] न होतारं वृणीत'[३६] इमानि वाक्यानि श्रूयन्ते। एभिः प्रतिषिद्धानां दानहोमहोतृवरणानामनुष्ठानेन पुरुषार्थे वैगुण्यं नोत्पाद्यतेऽपित्वनुष्ठीयमाने यागात्मके कर्मण्येवेतेषामनुष्ठानेन वैगुण्यं

जायते। यदा त्वेतेषां यागे प्रतिषिद्धानां न क्रियते समाचरणं तदानीं, प्रतिषिद्धाचरणाभावेनापि क्रियमाणे यागकर्मणि वैगुण्याभावात्मकस्योपकारस्य जननादभावस्यापि यागेन कर्मणा सह-सङ्गच्छते उपकार्योपकारकत्वलक्षणौपचारिकः सम्बन्धः।

अनया दिशा विचारे कृते स्पष्टं प्रतिभाति यन्मीमांसा यद्यपि कर्मावबोधनार्थं कर्मानुष्ठानसङ्गतिप्रतिपादनार्थञ्च प्राधान्येन प्रवृत्ता अत एवास्याः प्रक्रियायां कर्मोपकारत्वेनैवोपपद्यतेऽन्येषां पदार्थानमप्यर्थवत्वम्। यथा शास्त्रेऽस्मिनन्येषां पदार्थानां कर्मोपकारत्वेनैव विद्यते चरितार्थता, तद्वत् सम्बन्धपदार्थस्यापि कर्मान्वितत्वेन प्रयोजनवत्वं स्पष्टं परिलक्ष्यत इत्यलम्।

## सन्दर्भसूची–


१. अथातो धर्मजिज्ञासा, जैमिनिसूत्रम्, १,१,१.
२. अन्वाहार्येच दर्शनात्, जैमिनिसूत्रम्, १२,४,४७.
३. आम्नायस्य क्रियार्थत्वात्, जैमिनिसूत्रम्, १,२,११.
४. धर्माख्यं विषयं वक्तुं, मीमांसाश्लोकवार्तिकम्, पृ. ५३, कामेश्वरसिंहदरभङ्गासंस्कृत-विश्वविद्यालय, दरभङ्गा, १९७९.
५. औत्पत्तिकस्तु, जैमिनिसूत्रम्, १,१, ५.
६. औत्पत्तिक इति, मीमांसादर्शनम्, पृ.१७०, भारतीयविद्याप्रकाशनम्, वाराणसी, १९७९.
७. एवञ्च शब्दगुणत्वाच्छ्रोत्रस्य, प्रकरणपञ्चिका, पृ.३२५, का.हि.वि.वि.वाराणसी, १९६१.
८. कारणरहितत्वात् स एव गकारः, प्रकरणपञ्चिका, पृ ३२५.
९. प्राभाकरास्तु कार्यान्विते पदानां शक्तिः, भाट्टचिन्तामणि, पृ.१८७, चौखम्बासंस्कृत-सीरिज-आफिस, बनारस, १९३३.
१०. शब्दोऽपि प्रत्यभिज्ञानात् प्रागस्तीत्यवगम्यते। मीमांसाश्लोकवार्तिकम्, पृ. ८९६.
११. आकृतिव्यतिरिक्तेऽर्थे सम्बन्धो नित्यतास्य च।
न सिध्येतामिति ज्ञात्वा तद्वाच्यत्वमिहोच्यते।। मीमांसाश्लोकवार्तिकम्, पृ. ६५२.
१२. शब्दार्थसम्बन्धश्च नित्यः। मीमांसाकुतूहलम्, पृ. ७९, सम्पूर्णानन्दसंस्कृत-विश्वविद्यालय, वाराणसी, १९८७.
१३. अव्यवधानेन, भाट्टचिन्तामणि, पृ. ५६.
१४. संयोगः सर्वद्रव्यवर्ती सामान्यगुणः। स च नित्यानित्यभेदेन द्विविधः।
मानमेयोदयः, पृ. २३३.
१५. द्रष्टव्यो मानमेयोदयः, पृ.२३३-२३४.
१६. अवयवावयविनो. न्यायसिद्धान्तमुक्तावली, पृ.५३-५४.
१७. समवायञ्च न वयं काश्यपीया इव नित्यमुपेमः।
प्रकरणपञ्चिका, पृ.९२.

१८. यद्येवमवयवावयविनोः सम्बन्धः समवायो न स्यात्। विनाप्यवयविचलनेनावयवानां चलनात्। शास्त्रदीपिका, पृ. १००, कृष्णदासअकादमी, वाराणसी, १९८८.
१९. मानमेयोदयः, पृ. २७२.
२०. विशेषणविशेष्यभावश्च सम्बन्ध एव न सम्भवति भिन्नोभयाश्रितैकत्वाभावात्, तर्कभाषा, पृ.२१८, चौखम्बासुरभारतीप्रकाशन, वाराणसी, १९९०.
२१. तस्मादवयवावयविनो, मानमेयोदयः, पृ. २७५.
२२. मानमेयोदयः, पृ.१५-१६.
२३. मानमेयोदयः, पृ.१६.
२४. मीमांसाकुतूहलम्, पृ. १२.
२५. दर्शपूर्णमासाभ्यां, शतपथब्राह्मण, २,६,४,१७.
२६. अग्निहोत्रं जुहोति, तैत्तिरीयसंहिता, १,५,९,१,१८.
२७. दध्ना जुहोति, आपस्तम्बश्रौतसूत्र, ६,२५.
२८. व्रीहीभिर्यजेत, आपस्तम्बश्रौतसूत्र, ६,३१,१४.
२९. लोहितोष्णीषा ऋत्विजः, मीमांसान्यायप्रकाश, न्यायबोधिनी, पृ. ६३. चौखम्बाविद्याभवनम्, वाराणसी, सन् २००३.
३०. अरुणया पिङ्गाक्षैकहायन्या, तैत्तिरीयसंहिता, ७,१,६,२.
३१. समिधो यजति, तैत्तिरीयसंहिता, २,६,१,
३२. व्रीहीन्प्रोक्षति, तैत्तिरीय-ब्राह्मण, ३,२,५.
३३. यस्य पर्णमयी, तैत्तिरीयसंहिता, ३,५,७,२.
३४. औदुम्बरो यूपो भवति, मीमांसान्यायप्रकाश, न्यायबोधिनी, पृ. २२८.
३५. दीक्षितो न ददाति, न जुहोति, मीमांसान्यायप्रकाश, न्यायबोधिनी, पृ.२२८.
३६. न होतारं वृणीत, मीमांसान्यायप्रकाश, न्यायबोधिनी, पृ. २३४.

# पूर्वमीमांसादर्शनानुसारं सम्बन्धविमर्शः

सम्बन्धशब्दोऽयं सर्वेष्वपि दर्शनेषु विद्यते, स्व-स्वमतानुसारं विविच्यते च। 'सम्'-उपसर्गपूर्वकात् 'बन्ध्'धातोः भावार्थके करणार्थके वा घञ्प्रत्यये कृते सति सम्बन्धशब्दस्य निष्पत्तिः भवति। सम्यक् बध्यते इति सम्बन्धः अथवा सम्यक् बध्यते अनेन इति सम्बन्धः। अस्मिन् जगति प्रत्येकं पदार्थस्य केनाप्यन्येन सह सम्बन्धो विद्यते। जगति असम्बद्धः कोऽपि नास्ति। सम्बन्धाः यथा लोके सन्ति तथैव शास्त्रेष्वपि, अतश्शास्त्रेष्वपि सम्बन्धविवेचनं विद्यते। शास्त्रेषु सम्बन्धशब्दस्य स्थाने बहुत्र संसर्गशब्दस्यापि प्रयोगो दृश्यते। शास्त्रीयसम्बन्धेषु तावत् सम्बन्धस्य द्विविधं वर्गीकरणं कर्तुं शक्यते–

१. मुख्यः सम्बन्धः।

२. अमुख्यः सम्बन्धः।

तत्र मुख्यसम्बन्धो नाम तत्तद्दर्शनानुसारं संयोगः, समवायः, तादात्म्यं, स्वरूपम् च। अयं सम्बन्धः उभयनिष्ठः (अनुयोगिनि प्रतियोगिनि च), एकनिष्ठश्च द्विप्रकारको वर्तते। यथा– संयोगः, समवायश्च उभयनिष्ठौ सम्बन्धौ स्तः, परन्तु तादात्म्यं च एकनिष्ठः सम्बन्धो वर्तेते। मुख्यसम्बन्धस्य उपयोगः अन्तर्भावश्च प्रायेण प्रत्यक्षसन्निकर्षे भवतः।

अमुख्यः सम्बन्धोऽपि उभयनिष्ठः एकनिष्ठश्चेति द्विप्रकारको भवति। यथा– विशेषणविशेष्यभावः, अङ्गाङ्गिभावः, जन्यजनकभावः, सेव्यसेवकभावः इत्यादयः उभयनिष्ठाः सम्बन्धाः सन्ति। एवं च आधेयत्वम्, आधारत्वं, प्रकारत्वं, विशेष्यत्वं, प्रयोज्यत्वं, प्रयोजकत्वम् इत्यादयः एकनिष्ठाः सम्बन्धाः सन्ति।

अथ च अन्यरीत्या सम्बन्धस्य अन्यच्च भेदद्वयं वक्तुं शक्यते। यथा–

१. साक्षात् सम्बन्धः।

२. परम्परासम्बन्धश्चेति।

उपरि ये संयोगसमवायादयः सम्बन्धाः उक्ताः, ते सर्वे साक्षात् सम्बन्धाः सन्ति। परन्तु सामानाधिकरण्यादयः ये सम्बन्धाः सन्ति, ते परम्परासम्बन्धाः। यथा एकस्मिन् भूतले स्थितयोः घटपटयोः परस्परं सामानाधिकरण्यरूपपरम्परा-सम्बन्धो विद्यते।

तत्र सामान्यतः सम्बन्धस्य लक्षणं वर्तते–

विशिष्टप्रतीतिनियामकत्वं सम्बन्धत्वम्।

अस्मिन् लक्षणे 'अनुयोगिप्रतियोगिभ्यां भिन्नत्वे सति', 'द्विष्ठत्वे सति' इति विशेषणद्वयम् यद्यपि अन्यैः दार्शनिकैः निवेश्यते, परन्तु स्वरूप-तादात्म्य-आधेयत्वाद्येकनिष्ठसम्बन्धान् स्वीकुर्वद्भिः नैयायिकमीमांसकादिभिः अस्य विशेषणद्वयस्य निवेशः न कृतः।

सम्बन्धविषये सर्वेषां दार्शनिकानां नैकमतानि सन्ति। तत्र उपर्युक्तमुख्य-सम्बन्धविषये मीमांसकेषु मतद्वयं वर्तते–

१. भाट्टमतम्–

भाट्टमतानुसारं सम्बन्धः (प्रत्यक्षसन्निकर्षान्तर्गतः) द्विविधः वर्तते-

(१) संयोगः– युतसिद्धयोः प्राप्तिः संयोगः। सम्बन्धिनोः परस्परविभागाश्रयत्वयोग्यता च युतसिद्धेः लक्षणम्। तत्र पृथिव्यप्तेजसां चक्षुस्त्वगिन्द्रियाभ्यां संयोगात् ग्रहणं भवति। वायोस्त्वक्संयोगात् ग्रहणं भवति। दिङ्नभस्तमसां दृक्संयोगात्, शब्दस्य श्रोत्रसंयोगात्, आत्मनो मनःसंयोगात् ग्रहणं भवति।[१] तार्किकमतवत् अयं संयोगसम्बन्धोऽपि गुणान्तर्गतो वर्तते।[२]

अयं द्विविधः– नित्यः अनित्यश्च। तत्र नित्यविभूनां व्योमकालादीनां परस्परसंयोगः नित्यः। अनित्यः संयोगः त्रिविधः– अन्यतरकर्मजः उभयकर्मजः संयोगजश्चेति। यथा– स्थाणुश्येनयोः संयोगः अन्यतरकर्मजः, युध्यतोर्मल्लकृष्णयोः संयोगः उभयकर्मजः, हस्ततरुसंयोगात् कायतरुसंयोगः संयोगजः संयोगः।[३]

२. प्राभाकरमतम्–

प्राभाकरमतानुसारमपि सम्बन्धः (प्रत्यक्षसन्निकर्षान्तर्गतः) द्विविधः वर्तते–

(१) संयोगः– अयं तार्किकभाट्टमतवत् गुणान्तर्गत एव विद्यते। अस्य स्वरूपं भाट्टमतानुसारमेव प्राभाकरैरपि स्वीक्रियते।

(२) समवायः– समवायो नाम तार्किकवत् प्राभाकराणां पृथक् पदार्थः।[४] भाट्टानां तादात्म्यस्थाने प्राभाकरैः समवायसम्बन्धः स्वीकृतो वर्तते। अयुतसिद्धानामाधार्याधारभूतानां विशेषणविशेष्यभावधीहेतुः सः सम्बन्धः समवायः। सः अनुमेयो वर्तते। अनुमानप्रयोगः एवं भवति– समवायोऽनुमेयः इन्द्रियसम्बन्ध-रहितत्वात्, कर्मवत्। समवायस्तु अनेको वर्तते। समवायिनोरेकस्य उभयोर्वा अनित्यत्वे समवायोऽपि अनित्य एव, नित्ययोः समवायसम्बन्धः नित्यः।

शाबरभाष्यस्य प्रभाकररचितबृहतीटीकायाः उपरि शालिकनाथेन विरचितायाम् ऋजुविमलाटीकायामुक्तं वर्तते–

**समवायलक्षणः सम्बन्धः अपौरुषेयः व्यक्तेः जात्या सह, क्रियायाः कारकैः सह, अवयविनामवयवैः सह, गुणानां गुणिभिः सहेति। जातिक्रिया-गुणावयविनः व्यक्त्यादिभ्यः अन्यत्र अनाश्रिताः। व्यक्तिगुणकारकावयवास्तु यद्यपि अन्यत्राश्रिताः तथापि अपृथग्गतिमन्तः इति अयुतसिद्धाः।**[६]

वस्तुतस्तु सम्बन्धस्य क्षेत्रम् अत्यन्तं व्यापकं वर्तते। सम्बन्धः सर्वदा आकांक्षापूर्वको एव भवति। विधीयमानः सम्बन्धो हि सम्बन्धिनमाक्षिपति इत्यस्मिन् विषये न्यायसुधायामुक्तम्–

**'सम्बन्धो विधीयमानः सम्बन्धिनं तावदाक्षिपेत्' इति वार्तिकोक्तन्यायेन सम्बन्धाक्षिप्तयोः सम्बन्धिनोः अक्रियाङ्गत्वेन अननुष्ठेयत्वात् अनुष्ठेयत्वसिद्धयै क्रियाङ्गत्वेन तयोरपि विधानापत्तेस्तुल्यो वाक्यभेदः।**[७]

सर्वैरपि दार्शनिकैः अनुमानप्रमाणस्य महत्त्वपूर्णं तत्त्वं व्याप्तिरपि एकः सम्बन्धः इति स्वीक्रियते– स्वाभाविकः सम्बन्धो व्याप्तिः।[८] मीमांसकैः शब्दार्थयोः नित्यसम्बन्धः स्वीकृतो वर्तते– औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः, तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्।[९] अयं शब्दार्थयोः सम्बन्धः संयोगः, समवायो वा नास्ति, अपि तु कोऽपि अपूर्वः सम्बन्ध एव वर्तते। पूर्वमीमांसायां सम्बन्धः एकः विधिरपि वर्तते। यथोक्तम्–

**उभयप्राप्तौ अनुभयप्राप्तौ वा सम्बन्धविधिः इति हि जाघन्याधिकरणे (३.३.१०) उक्तम्।**[१०]

मीमांसकेषु भट्टमतेन चत्वारः हेत्वाभासाः सन्ति– असिद्धः विरुद्धः, अनैकान्तिकः, असाधारणश्चेति। तत्र असिद्धमध्ये एकः सम्बन्धासिद्धहेत्वाभासो वर्तते। हेतोः पक्षसम्बन्धाभावे सम्बन्धासिद्ध इत्युक्तम्।[११] यथा– शब्दोऽनित्यः चाक्षुषत्वादिति।

सम्बन्धस्य द्विविधभेदयोः मध्ये संयोगनाम्ना एकः न्यायोऽपि मीमांसायां वर्तत– संयोगपृथक्त्वन्यायः इति। उक्तं च जैमिनीयसूत्रे–

**एकस्य तु उभयत्वे संयोगपृथक्त्वम्।**[१२]

अस्मिन् विषये शाबरभाष्ये विवेचनं कृतम् वर्तते।[१३] अग्निहोत्रे श्रूयते– दध्ना जुहोति इति। पुनश्च 'दध्नेन्द्रियकामस्य जुहुयात्' इति। तथा अग्नीषोमीये पशौ आम्नायते 'खदिरे बध्नाति' इति, पुनश्च 'खादिरं वीर्यकामस्य यूपं कुर्यात' इति। अत्रायं संदेहो भवति यत् दधिविधायकं खादिरविधायकं च यत् द्वितीयं

वाक्यं वर्तते तत् किं नित्यकर्मविधायकम् अथवा काम्यकर्मविधायकम्। तदा सिद्धान्तानुसारं कथ्यते- एकस्य उभयत्वे संयोगपृथक्त्वम्। अस्य तात्पर्यं वर्तते यत् एकस्य कर्मणः उभयत्वे नित्यत्वे काम्यत्वे च प्राप्ते संयोगपृथक्त्वं (संयोगस्य पृथक्त्वम् भिन्नत्वम्) कारणम्। यथा अस्मिन् उदाहरणद्वये संयोगपृथक्त्वम् वर्तते। एकः संयोगः 'दध्ना जुहोति' इति। अन्यः संयोगः 'दध्नेन्द्रियकामस्येति'। तथैव अपरस्मिन्नुदाहरणे एकः संयोगः 'खादिरे बध्नाति' इति। अपरः संयोगः 'खादिरं वीर्यकामस्येति'। अतः संयोगस्य पृथक्त्वात् 'दध्ना जुहोति, खादिरे बध्नाति' इति नित्यकर्मविधायकं वाक्यम्। अन्यच्च वाक्यं काम्यकर्मविधायकमिति निर्णयो भवति।

अमुख्यसम्बन्धेषु बहवः अमुख्यसम्बन्धाः मीमासकैः स्वीकृताः सन्ति। वस्तुतः अमुख्यसम्बन्धास्तु अनन्ताः सन्ति। तत्र अङ्गाङ्गिनोः मध्ये अङ्गाङ्गिभावः सम्बन्धो विद्यते। भाट्टतन्त्ररहस्ये आख्यातार्थकृतौ लिङर्थरूपायाः प्रेरणापरपर्याय-शाब्दीभावनायाः अन्वयः स्वज्ञानजन्यानुमितिप्रयोज्यत्वरूपपरम्परासम्बन्धेन कृतो वर्तते–

अत एव साक्षात् सम्बन्धपरित्यागेन स्वज्ञानजन्यानुमितिप्रयोज्यत्वसंसर्गेण आख्यातार्थप्रवृत्तौ प्रेरणायाः प्रकारत्वम्।[13]

अयं प्रयोज्यत्वसम्बन्धः एकनिष्ठो वर्तते।

मीमांसकैः सङ्गतिनामकोऽपि एकः अपरः सम्बन्धः स्वीक्रियते। मीमांसायां सहस्रमधिकरणानि सन्ति। तेषामेवापरं नाम न्यायोऽपि वर्तते। एतेषु अधिकरणेषु परस्परं सङ्गतिः स्वीकृता वर्तते। इयं सङ्गतिः यथा अधिकरणयोः परस्परं भवति, तथैव प्रत्येकाधिकरणस्य पादेन, अध्यायेन, शास्त्रेण च सङ्गतिः वर्तते। अत एव सङ्गतिः चतुर्विधा कथिता–

१. पादसङ्गतिः– अधिकरणस्य तेन पादेन सह सङ्गतिः।

२. अध्यायसङ्गतिः– अधिकरणस्य तेन अध्यायेन सह सङ्गतिः।

३. शास्त्रसङ्गतिः– अधिकरणस्य तेन शास्त्रेण सह सङ्गतिः।

४. अवान्तरसङ्गतिः– कस्यापि अधिकरणस्य पूर्वापराधिकरणाभ्यां सङ्गतिः। इयं षड्विधा वर्तते– आक्षेपसङ्गतिः, दृष्टान्तसङ्गतिः, प्रत्युदाहरणसङ्गतिः, प्रासंगिक-सङ्गतिः, उपोद्घातसङ्गतिः, अपवादसङ्गतिश्चेति।

शास्त्रेऽध्याये तथा पादे न्यायः सङ्गतस्त्रिधा।
शास्त्रादिविषये ज्ञाते तत्तत्सङ्गतिरूह्यताम्।।[14]
ऊहित्वा सङ्गतीस्तिस्रस्तथावान्तरसङ्गतिम्।
ऊहेताक्षेपदृष्टान्तप्रत्युदाहरणादिकाम्।।[15]

इत्थं मीमांसाशास्त्रे सम्बन्धविषये यत् प्रमुखरूपेण निरूपितं वर्तते, तत् सर्वं संक्षिप्यात्र प्रस्तुतम्। वस्तुतस्तु सम्बन्धिनामनन्तत्वात् अनन्तसम्बन्धानामाद्योपान्तं निरूपणं तु दुःशकमित्यत्रैव विरम्यते।

## संदर्भ सूत्री–


१. मानमेयोदयः पृष्ठसं. १५.
२. भाट्टमतानुसारं द्रव्य-जाति-गुण-कर्म-अभावाः पंच पदार्थाः सन्ति। तत्र गुणाः चतुर्दश सन्ति। तेषु एकः गुण संयोगो वर्तते।
३. मानमेयोदयः पृष्ठसं. २३३, २३४.
४. मानमेयोदयः पृष्ठसं. १६.
५. प्राभाकरमतानुसारं अष्टौ पदार्थाः सन्ति- द्रव्यम्, गुणः, कर्म, सामान्यम्, शक्तिः, संख्या, सादृश्यम्, समवायः।
६. ऋजुविमला, पृष्ठसं. १८८.
७. न्यायसुधा, तन्त्रवार्तिकस्य टीका, पृष्ठसं. ७७३.
८. मानमेयोदयः, पृष्ठसं. ३१.
९. जैमिनीयसूत्रम्, १.१.५.
१०. बालमीमांसाप्रकाशः, पृष्ठसं. ११४.
११. मानमेयोदयः, पृष्ठसं. ७६.
१२. जैमिनीयसूत्रम्, ४.३.५.
१३. शाबरभाष्यम्, ४.३.५.
१४. भाट्टतन्त्ररहस्यम्, विधिवादः, पृष्ठसं. १५.
१५. जैमिनीयन्यायमाला विस्तरश्च, १.१.१०.
१६. जैमिनीयन्यायमाला विस्तरश्च, १.१.२८.

# ज्योतिषशास्त्रे सम्बन्धविमर्शः

सम्बन्धविचारस्तु प्रतिशास्त्रे स्वानुरोधेन वर्त्तते। सुप्तिङन्तं पदं तथा सम्बन्धे षष्ठीति शब्दशास्त्रप्रमाणेनापि यत्र सम्बन्धः सूच्यते तत्र षष्ठीविभक्तिः। कर्त्तुः सम्बन्धेन सर्वेऽवयवाः प्रवर्त्तन्ते। यदि ज्योतिषशास्त्रदृष्ट्या विचार्यते तदा भूगोलीयसम्बन्धः भूगोलस्य सौरमण्डलीयसम्बन्धः ग्रहमण्डलीयसम्बन्धस्तथा सूर्यस्य सौरमण्डलीयसम्बद्धानां ग्रहोपग्रहाणां नक्षत्रमण्डलीयसम्बन्धश्च विभिन्नरूपेण विचार्यते। अतः प्रायशः सर्वे सम्बन्धाः दिग्देशकालपात्रभेदैश्चान्तर्भुक्ताः भवन्ति। महान् गणितज्ञः भास्करोऽपि लग्नं लग्नाश्रयेण ग्रहमण्डलीयसम्बन्धं गोलीयसम्बन्धं च कथं जातमात्रं प्रभावयतीति निरूपितवान्। गणितीयसम्बन्धेन गोलज्ञानं गोलीयसम्बन्धेन लग्नाश्रयेण विभिन्नरूपकगोलीयप्रभावाः कथं सम्बद्धा इति निरूपयति यथा-

ज्योतिषशास्त्रफलं पुराणगणकैरादेश इत्युच्यते।
नूनं लग्नबलाश्रितं पुनरयं तत्स्पष्टखेटाश्रयम्।।
ते गोलाश्रयिणोऽन्तरेण गणितं गोलोऽपि न ज्ञायते।
तस्माद्यो गणितं न वेत्ति स कथं गोलादिकं ज्ञास्यति।।

सि.शि.गोलाध्यायः, गो.प्रा.

अत्र गोलीयग्रन्थेऽपि कथं प्रभावशास्त्रं योजितमिति विमर्शनीयः पक्षः। लग्नं क्रान्तिवृत्तीयं। क्षितिजसंयोगत्वेन राशीनामुदयो लग्नम् ते तु मेषवृषादय इति कोषप्रमाणेनापि स्व-स्वदेशीयसम्बन्धेन लग्नमानभेदः दृश्यते। ग्रहाः लग्नं च गोलाश्रितं गोलश्च गणितेन वेधेन गम्यः। अतः गणितं, गोलः, तर्कः यन्त्रं च चत्वारोऽवयवाः बुद्धियोगेन गम्याः सन्ति। फलपुराणमपि चतुर्भिः सम्बन्धैः प्रवर्त्तते। अत एव गणितमूलेन गोलज्ञानं गोलज्ञानेन ग्रहर्क्षादीनां ज्ञानं लग्नज्ञानं च सर्वविध-सम्बन्धः सम्बन्धनिष्पत्या सम्पद्यते। अस्य शास्त्रस्य त्रिस्कन्धात्मकं स्वरूपं वराहः निरूपितवान् यथा-

ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितं,
तत्कात्स्न्योंपनयस्य नाममुनिभिः संकीर्त्यते संहिता।

स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानास्त्वसौ,
होराऽन्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः।।

बृ.स.अ.१, श्लो.१-वराहः।

इति सम्बन्धभेदेन ज्योतिषस्य त्रिस्कन्धात्मकं स्वरूपं भवति। अत्र होरा-स्कन्धे सम्बन्धभेदाः। यथा-

होराशास्त्रेऽपि च राशिहोराद्रेष्काणनवांशद्वादशभागत्रिं शद्भागबलाबलपरिग्रहोग्रहाणां दिक्स्थानकालचेष्टाभिरनेकप्रकारैर्बलनिर्धारणं प्रकृतिधातुद्रव्यजाति-चेष्टादिपरिग्रहो निषेकजन्मकालविस्मापनप्रत्ययादेशसद्योमरणायुर्दाय-दशान्तर्दशाष्टकवर्गराजयोगचन्द्रयोगद्विग्रहादियोगानां नामसादीनां च योगानां फलान्याश्रयभावावलोकननिर्माणगत्यनूकानितत्कालप्रश्नशुभाशुभनिमित्तानि विवाहादीनां च कर्मणां करणम्। (बृ.सं.अ.२, श्लो.१७-वराहः) इत्यनेन होरास्कन्धेऽपि सम्बन्धभेदाः व्यक्ता भवन्ति। एभिः जातकप्रभावः सम्बन्धश्च सुस्पष्टो भवति।

**ग्रहर्क्षाणां सम्बन्धभेदाः-**

मानवीयसम्बन्धनिर्धारणे ग्रहर्क्षाणां सम्बन्धभेदैः कथं मानवीयक्षमता भेदश्च समुत्पद्यत इति पञ्चमहापुरुषलक्षणाध्याये-वराहः-

ताराग्रहैर्बलयुतैः स्वक्षेत्रस्वोच्चगैश्चतुष्ट्यगैः।
पञ्चपुरुषाः प्रशस्ता जायन्ते तानहं वक्ष्ये।।१।।

अर्थात् ग्रहाणां बलभेदनिष्पत्या स्वक्षेत्रस्वोच्चकेन्द्रादिभेदनिष्पत्या पञ्चताराग्रहैः योगैः पञ्चविधमहापुरुषाः समुत्पद्यन्ते।

**पञ्चमहापुरुषयोगाः-**

जीवेन भवति हंसः सौरेण शशः कुजेन रुचकश्च।
भद्रो बुधेन बलिना मालव्यो दैत्यपूज्येन।।२।।

अर्थात् यदिः गुरुः बलवान् बलिना शुभग्रहेण युतः स्वगृहेस्वोच्चे केन्द्रे त्रिकोणे वा भवेत्तदा हंसयोगस्तावदेवमेव शनिना शशः, कुजेन रुचकः, बुधेन भद्रः, शुक्रेण मालव्ययोगश्च समुत्पद्यते।

स्वस्थानसम्बन्धस्त्वेकः। उच्चनीचसम्बन्धः द्वितीयः। केन्द्रसम्बन्धस्त्रिकोण सम्बन्धः, ग्रहयोगः, ग्रहदृष्टिस्तथा बलसम्बन्धनिष्पत्या विभिन्नभेदाः समुत्पद्यन्ते।

सूर्यचन्द्रयोर्बलभेदाः–

सत्त्वमहीनं सूर्याच्छारीरं मानसं च चन्द्रबलात्।
यद्राशिभेदयुक्तावेतौ तल्लक्षणः स पुमान्।।३।।

तद्धातुमहाभूतप्रकृतिद्युतिवर्णसत्त्वरूपाद्यैः।
अबलरवीन्दुयुतैस्तैः सङ्कीर्णो लक्षणैः पुरुषः।।४।।

बृ.स.अ.६९, श्लो.३-४–वराहः

इत्यनेन सूर्याच्छत्वं बलं चन्द्रान्मानसिकं बलं सम्बन्धनिष्पत्या बलभेदनिष्पत्या च जायते। राशिहोरा द्रेष्काणनवांश द्वादशांश त्रिंशांशादिभेदैः तद्धातुमहाभूतप्रकृतिद्युतिवर्णसत्वरूपाद्यैः पुरुषस्य स्वरूपं सम्बन्धान्तरनिष्पत्या विभेति। अबलरवीन्दुना पुरुषः सङ्कीर्णत्वमेति। परीक्षणं सत्यापनं च कर्तुं शक्यते त्रिगुणसम्बद्धैः पञ्चमहाभूतसम्बद्धैश्च।

मानवस्य ग्रहसम्बन्धः–

भौमात्सत्त्वं गुरुताबुधात्सुरेज्यात् स्वरः सितात् स्नेहः।
वर्णः सौरादेषां गुणदोषैः साध्वसाधुत्वम्।।५।।

अर्थात् भौमात् सत्वं, बुधात् गुरुत्वं, सुरेज्यात् स्वरः, सितात् स्नेहः चिक्कणत्वं, शनिश्चरात् वर्ण इति बलभेदनिष्पत्या शुभाशुभत्वसम्बन्धनिष्पत्या च निश्चीयते।

संकीर्णलक्षणे विशेषः–

सङ्कीर्णाः स्युर्न नृपा दशसु तेषां भवन्ति सुखभाजः।
रिपुगृहनीचोच्चच्युतसत्पापनिरीक्षणैर्भेदाः।।६।।

एवं सम्बन्धनिष्पत्या बलभेदः बलभेदनिष्पत्या च शुभाशुभत्वेन विविध भेदाः समुत्पद्यन्ते। संकीर्णत्वेऽपि सुखकारकत्वनिष्पत्या भवत्येव।

कालपुरुषस्याङ्गविभागः–

शीर्षास्य बाहु हृदयं जठरं कटि बस्ति मेहनोरूयुगम्।
जानूजङ्घे चरणौ कालस्याङ्गानि राशयोऽजाद्याः।।
कालनरस्यावयवान् पुरुषाणां कल्पयेत्प्रसवकाले।
सदसद् ग्रहसंयोगात्पुष्टाः सोपद्रवाश्चापि।।

सारावल्याम्, अ.३, श्लो.५-६.

अत्र कालपुरुषस्याङ्गविभागः शीर्षादिचरणान्तः विद्यते। तत्र मेषादितः मीनान्तं यावत् द्वादशराशीनां शीर्षादिचरणान्तं निवेशं विधाय कालपुरुषस्य व्यक्तस्वरूपं मन्यते। संहितोक्तप्रभावस्तु समग्रभूगोलानुरोधेन नक्षत्रकूर्मव्यूहनिष्पत्या ग्रहसंचारानुरोधेन ग्रहभक्तियोगेन शुभाशुभग्रहसंयोगनिष्पत्या च भूगोलीयफलं

देशफलं च शुभाशुभत्वमेति। मानवीयदृष्टया कालपुरुषस्याङ्गविभागानुरोधेन मानवशरीरे शीर्षादिचरणान्तं लग्नादिव्ययान्तं भावान्निवेश्य मानवीयाङ्गानां पुष्टिः क्षीणत्वं च ग्रहास्थित्यनुरोधेन शुभाशुभत्वेन च बोध्यमेव बलनिष्पत्या च विचार्यते।

कालपुरुषस्याङ्गविभागसम्बन्धेन ग्रहसंचारानुरोधेन संहितोक्तं फलं जातकोक्तं च द्विविधं सम्बद्धमस्ति। राशिशीलं, ग्रहशीलं, मिश्रलं च संयोज्य विभिन्नरूपकं मानवीयफलं कथं समारोऽत्र होराशास्त्रं जातकशास्त्रं च प्रमाणभूतमस्ति।

यथा च कालपुरुषस्य शीर्षभागे मेषः वर्त्ततेऽतः मेषस्थितनक्षत्रभाष्यापि-कूर्मविभागे यत्र पतन्ति तत्र शुभाशुभग्रहयोगेन शुभाशुभफलं वाच्यम्।

| कालपुरुषः अंगानि | राशयः |
|---|---|
| शीर्ष | मेषः |
| मुखम् | वृषः |
| बाहूः | मिथुनः |
| हृदयः | कर्कः |
| उदरम् | सिंहः |
| कटिः | कन्या |
| वस्तिः | तुला |
| गुह्यम् | वृश्चिकः |
| ऊरुः | धनुः |
| जानू | मकरः |
| जंघे | कुम्भः |
| चरणौ | मीनः |

मानवीयविचारे तु लग्नं शीर्षभागे निवेश्य यज्जन्मलग्नं यद्वर्षलग्नं च तयोः मूलत्वं स्वीकृत्य कालपुरुषसापेक्षत्वेन मानवीयशुभाशुभफलं वाच्यम्। यथा कालपुरुषस्याङ्गविभागनिष्पत्या मानवीयजन्मलग्नं प्रथमं मत्वा लग्नक्रमेण मानवीयाङ्गविभागस्तन्निष्पत्तये सदसद्ग्रहसंयोगाच्छुभाशुभाफलं निश्चीयते तथैव ग्रहाणामात्मादिविभागोऽपि महत्वपूर्णोऽस्ति। कथमेते विभागाः प्राचीनैः कल्पिता अत्रागम एव प्रमाणम्।

**कालपुरुषस्यात्मादिविभागः–**

कालस्यात्मा भास्करश्चित्तमिन्दुः सत्त्वं भौमः स्याद्वचश्चन्द्रसूनुः। देवाचार्यः सौख्यविज्ञानसारः कामः शुक्रो दुःखमेवार्कसूनुः।।१।। जातकपरिजाते, अ.२, श्लो.१ कल्याण वर्मा।

कालपुरुषस्यात्मा सूर्यः, मनश्चन्द्रः, सत्त्वं मंगलः,- वाक् बुधः, सुखं ज्ञानं च देवगुरुः, कामः शुक्रः, शनिः दुःखं चेति। एवमेव पाराशरादारभ्य प्रतिग्रन्थे सम्बन्धः प्रभावश्च निर्धारितोऽस्ति। सरावल्यामस्य प्रयोजनमपि यथा-

आत्मादयो गगनगैर्बलिभिर्बलत्तराः।
दुर्बलैर्दुर्बलास्ते तु विपरीतं शनेः स्मृतम्।। अ.४, श्लो.२.

अतः राशयः लग्नादि व्यायान्तं द्वादशभावरूपेण नक्षत्रमण्डलस्य प्रभावं सूर्यादयः शन्यन्तं ग्रहाः राहुः केतुश्च-सौरमण्डलीयं प्रभावं परस्परसम्बन्धानुरोधेन योगान्तरनिष्पत्या च द्विविधत्वेन प्रकटयन्ति।

भावः, भावेशः, भावगतग्रहप्रतिः भावगतग्रहदृष्टिश्चेत्येकः पक्षः। भावभावेशयोः सम्बन्धः द्वितीयपक्षः। भावस्य भावेशस्य द्वादशभावेशैः सम्बन्धः तृतीयपक्षः। भावेशेन युक्तग्रहः भावेशे ग्रहदृष्टिश्च चतुर्थपक्षः। भावभावेशयोः साक्षात् सम्बन्धः पञ्चमपक्षः। भावस्य स्फुटबलं भावेशस्य स्फुट बलं च षष्ठपक्षः। भावभावेशयोर्गोचरजन्यनिष्पत्तिस्तथाष्टवर्गजन्यनिष्पत्तिश्च सप्तम पक्षः। एतेषां सर्वेषां सम्बन्धानां विमर्शं विधाय स्फुटं भावफलं निश्चीयते। तत्र बलाबल ज्ञापक सूत्राणि शुभाशुभज्ञापकसूत्राणि समीक्ष्यन्ते तदैव यथार्थफलं ज्ञायते।

**भावेभ्यो विमर्शणीयविषयाः-**

लघुपाराशरी ग्रन्थे ग्रहाणां राशिगतसम्बन्धेन सूर्यादिभिः सूर्यसम्बन्ध निष्पत्या च लग्नादिद्वादशभावाः सफलं समीक्षिताः।

**१. लग्नम् –** प्रथमभावः शीर्षभागः शरीरस्य। शरीरं रूपं वर्णः ज्ञानं प्रभृतयः प्रथमभावाद्विचार्यन्ते।

**२. धनम् –** द्वितीयभावः शरीरे मुखभागः, स्थायि धनं दक्षिणनेत्रं पैतृकधनं मारकश्चास्माद् भावाद्विचार्यन्ते।

**३. सहजः –** शरीरस्य भुजभागः कनिष्ठानुजादयः पराक्रमादिविचारश्च तृतीयभावात् ज्ञायते।

**४. सुहृत् –** हृद्भागः, गृहभूमिभवनवाहनमातृजन्यविचारः मित्राणि च चतुर्थभावात् विचार्यन्ते।

**५. सुतः –** उदरभागः। सन्ततिः विद्या, बुद्धिः–विद्यात्मकविकासश्चास्मात् क्रियते। विद्यया ज्ञानं ज्ञानादेव बुद्धिविवेकयोः निवेशश्चापि भवति। सन्ततिः परम्परया लग्नसार्यते।

**६. रिपुः –** कटिभागः। शत्रुः रोगः मातुलः प्रभृतयश्च षष्ठभावात् विचार्यन्ते।

७. जाया – शरीरस्य बस्तिभागः। भार्या, उपपत्नी, कामसम्बन्धः कामना, मारकः वृद्धिः व्यापारश्च सप्तमभावाद् विचार्यन्ते।

८. मृत्युभावः – छिद्रभावः मृत्युः विदेशयात्रा, गुह्याङ्गं गुह्यरोगश्च तथा युद्धप्रभृतयोऽष्टमभावादेव विचार्यन्ते।

९. धर्मभावः – ऊरूप्रदेशः। धर्मजन्यविचारः चतुर्विधधारणाशक्तिः देवोपासना, भाग्यं पितृजन्यविचारः तपश्चेति नवमभावाद् विचार्यते।

१०. कर्मभावः – जानूद्वयमस्मिन् भावे गृह्यते। कर्म, राज्यं, पिता, पालकः, तातप्रभृतयः दशमभावाद् विचार्यन्ते।

११. आयभावः – जंघे जंघाद्वयं धनागमस्रोतांसि तथाग्रजाश्चैकादशभावाद्विचार्यन्ते।

१२. व्ययः – पादभागः गतिभागः व्ययः व्ययस्य स्रोत्रांसि वामनेत्रं चास्मिन् भावे गण्यन्ते। एतेलग्नादि व्ययान्तं द्वादशभावाः यत्र नक्षत्रपुञ्जात्मक राशिमण्डलेन सम्बद्धाः सन्ति तत्र शरीरस्यापि मानवीयसम्बन्धेन शीर्षादिचरणान्तं मुख्याङ्गानां द्योतकाः सन्ति। लघुपाराशर्यां भावसम्बन्धमनुसृत्य निरूपितमपि यथा–

बुधैर्भावादयः सर्वे ज्ञेयाः सामान्यशास्त्रतः।
एतच्छास्त्रानुसारेण संज्ञां ब्रूमो विशेषतः।।४।।

अतः सामान्यतो द्वादशभावेभ्यो विमर्शनीयविषयाः मया संकेतितास्तत्र मानवीयशरीरसम्बन्धेन द्वादशभावाः द्वादशविधमानवीयसम्बन्धानपिव्यञ्जयन्ति। कथितमपि–

लग्नात् तनुर्धनं भ्राता‌सुखपुत्ररिपुस्त्रियः।
मृत्युधर्मौ च कर्मायौ व्ययो भावाः क्रमादमी।।

लग्नादिद्वादशभावाः कालपुरुषस्य सम्बन्धेन भूपृष्ठीयमानवानां द्वादशभावाः लग्नादिव्ययान्तं तथा द्वादशाङ्गानि शीर्षादि चरणान्तं सृजन्ति। यथा लघुजातके वराहः–

शीर्षमुखबाहुहृदयोदराणिकटिबस्तिगुह्यसंज्ञानि।
ऊरू जानू जंघे चरणाविति राशयोऽजाद्याः।।
कालनरस्यावयवान् पुरुषाणां चिन्तयेत्प्रसवकाले।
सदसद्ग्रहसंयोगाद् पुष्टाः सोपद्रवास्ते च।।

अ.२, श्लो. १,२, वराहः।

इति वराहोक्तं सूत्रं पराशरेणापि बहुपूर्वमेव निवेशितमतोऽस्यान्वेषणमस्य मूलं महाभारतकालिकमेवास्ति। राशिमण्डलस्याचलप्रभावः। सौरमण्डलीय संचारेण संयोगेन भावस्थग्रहफलं प्रकाश्यते। सौरमण्डलीयग्रहैः भूमण्डलीय सम्बन्धेन मानवीयशुभाशुभत्वं निश्चीयते।

ध्यातव्यमस्ति यन्मेषादिमीनान्तं निरयणराशिचक्रमचलं कालनरात्मकमेवा चलप्रभावमूलमस्ति। द्वादशराशय एव द्वादशभावरूपेण लग्नादिव्ययानां मानवीयशुभाशुभत्वे हेतवो भवन्ति। तत्र सूर्यादिग्रहाणां युत्या दृष्ट्या च भूगोलीय विभिन्नविभागेषु नक्षत्रकूर्मानुरोधेन नक्षत्रव्यूहजन्यवर्गीकरणानुरोधेन ग्रहभक्तिनिष्पत्या च सम्बद्धाः सन्तः परस्परसम्बन्धनिष्पत्या शुभाशुभ-फलान्युत्पादयन्ति।

कालपुरुषस्य सौरचक्राधिष्ठानत्वेन सम्वत्सरात्मकं कालचक्रं ग्रहसंचार सम्बन्धेन शुभाशुभाधिष्ठितग्रहसम्बन्धेन राशिजन्ययोगजसम्बन्धेन ग्रहदृष्टि सम्बन्धेन च वर्षस्य देशस्य भागविशेषे शुभाशुभप्रभावं च समुत्पादयति। एवमेव मानवसम्बन्धेन जैवसम्बन्धेन च लग्नादिक्रमेण शुभाशुभग्रहयोगानां निष्पत्या च कथं शुभाशुभफलमापततीति प्रबन्धेऽस्मिन् पूर्वमेव समीक्षितम्।

**ग्रहराशिसम्बन्धः-**

राश्याधिपतिः ग्रहः स्वाधिपत्यजन्यसम्बन्धेन भावाधिपतिः भूत्वा मानवीय शुभाशुभप्रभावाणां नियामको भवति। राज्यसम्बन्धेन नृपः सचिवः सैन्याधिपतिः प्रभृतयश्च गोलीयसम्बन्धनिष्पत्या राशीनां ग्रहाधिपत्यं मानवीयसम्बन्धेन भावाधिपत्यं व्यञ्जयन्ति।

यथाधिपतिग्रहाः-

सिंहस्याधिपतिः सूर्यः कर्कस्याधिपतिः शशी।
मेषवृश्चिकयोर्भौमः बुधो मिथुनकन्ययोः।।
जीवो मीनधनुस्वामी शुक्रो वृषतुलाधिपः।
प्राज्ञैरधिपतिः प्रोक्तः शनिः मकरकुम्भयोः।।

अर्थात् सूर्यः सिंहाधिपतिः। चन्द्रः कर्काधिपतिः। मेषवृश्चिकयोर्भौमः मिथुनकन्ययोर्बुधः धनुमीनयोः गुरूः वृषतुलयोः शुक्रः मकर कुम्भयोरधिपतिः शनिः कथितः। प्रकृतिगुणसाम्यानुरोधेन भूगोलाभिप्रायिकप्रभावनिष्पत्या राशीनां ग्रहाधिपत्यं प्राज्ञैर्निर्धारितमिति। इति भूगोलाभिप्रायिकप्रभावक्रमः। अस्य देवाधिपत्यं नक्षत्रपुञ्जाभिप्रायेण प्राप्यते। यथा-

ना सत्यान्तकवह्निधातृशशभृद्रुद्रादितीज्योरगा,
ऋक्षेशाः पितरोभगोर्यमरवीत्वष्टासमीरः क्रमात्।
शक्राग्नीखलुमित्रशक्रनिर्ऋतिक्षीराणि विश्वेविधि-
र्गोविन्दो वसु तोयपाजचरणाहिर्बुध्न्यपूषाभिधाः।।१।।
मु.चि.अ.२, श्लो.१, रामाचार्यः।

अत्र देवाधिपत्येन नक्षत्राणां दिव्याधिपतित्वं द्योत्यते। अस्य मूलं तैत्तिरीय संहितायां प्राप्यते। सपादनक्षत्रद्वयं राशिरिति प्रमाणेन नक्षत्राणां दिव्याधिपतित्वं राश्यभिप्रायेणाऽपि बोध्यम्।

अत्र ग्रहाणां राश्याधिपतित्वे प्रश्नोऽस्ति यत् सौरमण्डले सूर्यः जगदात्मरूपेण मुख्यतमः। चन्द्रः भूगोलाभिप्रायेण मनसतत्त्वस्य नियन्त्रक-त्वान्मुख्यस्तर्हि कथमनयोरेकराश्याधिपतित्वं तथा पञ्चताराग्रहाणां द्विराश्याधिपतित्वमिति। अस्य समाधानं त्रिस्कन्ध ज्योतिषमर्मज्ञाचार्यः झोपाख्यामिध सीतारामः निम्नाङ्कितरूपेण प्रस्तुतवान् यथा–

शशी सूर्यौ तु राजानौ युवराजौ बुधः स्मृतः।
भौमो नेता शनिर्भृत्यो मन्त्रिणौ गुरुभार्गवौ।।

अनेन सूर्यचन्द्रौ नृपौ बुधः युवराजः मंगलः नेता सैन्याधिपतिः शनिराहुकेतव-श्चानुचरा इति दिव्यविभाग एवास्ति। तर्हि कथं द्विराश्याधिपतित्वमिति यथा पण्डितप्रवरः झोपाख्यामिधः सीतारामः–

चक्रार्धस्य पतिः सूर्यः चक्रार्धस्य पतिः शशी।
अन्ये ग्रहास्तयोर्गेहे मैत्र्यादित्वेन संस्थितः।।

केन क्रमेण सूर्यचन्द्र नृपौराश्याधिपतित्वं प्रयच्छत इति प्रमाणं यथा–

सिंहाद् भषट्कं रविणा गृहीतं कर्काद् भषटकं शशिना विलोमात्।
ताभ्यां च दत्तं गृहमेकमेकं कुजादिकेभ्यो द्विभपाधिपस्ते।।

अतः सिंहान्मकरान्तमधिपतिः सूर्यः कर्कात् कुम्भान्तमधिपतिश्चन्द्रस्तु विलोमेन वर्त्तते। आत्मतत्त्वाधिपतिः सूर्यस्तस्मादनुलोमेन कन्याधिपतिः बुधः तुलाधिपतिः शुक्रः वृश्चिकाधिपतिः मंगलः धनाधिपतिः गुरुः मकराधिपतिः शनिश्चेति। चन्द्रात् मनसोऽधिपतिश्चन्द्रस्तस्माद्विलोमेन मिथुनस्य बुधः वृषस्य शुक्रः मेषस्य मंगलः मीनस्य गुरुः कुम्भस्य शनिरधिपतिः वर्त्तते। अतः सूर्याच्चन्द्रच्चैकैकं राशिभागं प्राप्य कुजादयो द्विराश्याधिपाः सन्ति। यथा– नृपस्यासन्ने युवराजः बुधः मिथुनकन्ययोः कामनापूर्तौ सहायकः शुक्रः युवराजस्यासन्ने तुलावृषयोस्ततः

नेतृत्व कारकः रक्षकश्च कुजः वृश्चिकमेषयोरधिपतिस्ततः ज्ञानविवेकयोरधिपतिः गुरूः धनुमीनयोरधिपतिस्ततः भृत्यत्वेन शनिः मकरकुम्भयोरधिपतिः सर्वविधकार्यसम्पादकत्वेन सम्बन्धितोऽस्ति। स्पष्टार्थं चक्रम्:-

राशिमण्डलम्-

ग्रहमण्डलम्-




अत्र गोलीय सम्बन्धः भूपृष्ठीयसम्बन्धश्चापि व्यक्तो भवति। मानवीय सम्बन्धस्यापि द्योतनं जायते। सौरमण्डले आत्मतत्त्वाधिपतेः सूर्यस्य तथा मनसः कारकश्चन्द्रः सर्वाधिकप्रभावयुक्तोभवति। तत्सापेक्षत्वेनान्ये ग्रहाः प्रभावयन्ति। आत्मतत्त्वात्परमेश्वरान्तमनुलोमगत्या मनसः विषयसम्बद्धत्वेन प्रतिलोमगत्या विश्वस्य विस्तारकत्वेन बन्धनकारकत्वेन च सूर्यचन्द्रौ प्रभावयतः। अत्रैव मनसः द्विधागतिः विषयाभिप्रायेण जगदुन्मुखी तथा आत्मतत्त्वानुरोधेन अन्तर्मुखी च सिद्ध्यति। अतः बन्धनं मोक्षश्च चन्द्रसूर्ययोः सापेक्षत्वेन ज्ञायते।

आत्मतत्त्वेन मनसा सापेक्षत्वेन-

वाणी कामशक्तिः बलं रक्षणसामर्थ्यं नेतृत्वसामर्थ्यं बुद्धिः विवेकः स्वातन्त्र्यं संयमः क्षमतायाः परिसीमनं च सम्बद्धमस्ति। यथा वराहः-

आत्मा रविः शीतकरस्तु चेतः सत्वं धराजः शशिजोऽथ वाणी।
ज्ञानं गुरुः दैत्यगुरुः सुखं च ज्ञेयः शनिः कालनरस्य दुःखम्।।६।।

लघुजातके अ.२, वराहः।

अतः संयमाभावात् दुःखस्य प्रवृत्तिः शनेः सम्बन्धेन कालनरसापेक्षत्वेन मानवीयजन्मलग्नवशात् सिद्ध्यति।

अतः ज्योतिषशास्त्रीयत्रिस्कन्धात्मकं पञ्चस्कन्धात्मकं विधानं त्रिगोलीय सम्बन्धैः सापेक्षत्वेन शुभाशुभसम्बन्धनिष्पत्या लग्नादिव्ययान्तं ग्रहसम्बन्धेन भावाधिपत्येन च शुभाशुभफलमुत्पादयति। यथा आत्मतत्त्वाधिपतिः सूर्यः वर्त्ततेऽतः मानवीयमात्मबलं बलमात्रा अस्थिस्तथास्य दृढत्वं मुक्तिस्तथात्मज्ञानं च मुख्यत्वेन सूर्येण सम्बद्धम्। ज्ञानान्मोक्षस्तत्त्वात्मकज्ञानेन सम्भवति।

"चन्द्रः मनसोऽधिपतिः। मनएव मनुष्याणां कारणं बन्धमोक्षयोरिति मनसः ऊर्ध्वगत्या विमलबुद्ध्या आत्मज्ञाने मोक्षस्तथा विषयोन्मुखत्वेन बन्धनमधो गतिश्चेति सर्वविधप्रभावेषु सूर्यचन्द्रयोरेव मुख्यत्वं सिद्ध्यति।

अत एव नक्षत्रात्मकं राशिमण्डलं सूर्यः सौरमण्डलीयग्रहोपग्रहाः भूगोलीय सम्बन्धेन भूगोलं तथा भूपृष्ठीयमानवैः सम्बन्धेन मानवं दिव्यनाभसभौम मिश्रभेदात्मकैः प्रभावैः सम्बन्धिताः भवन्ति।

स्वकर्मानुबन्धेन मानवः प्रारब्धसंचितक्रियमाणभेदैश्च शुभाशुभकर्मफलं भुङ्क्ते। शुभाशुभकर्मफलमेव शुभाशुभस्वरूपसंरचनासंचरणगुणदोषादिभिः प्रारब्धयोगेन मानवः भुङ्क्ते। अतः गीताकारेण निरूपितं यत् "आवश्यमेव भोक्तव्यं कृतं कर्मशुभाशुभमिति" तथा च "कर्मणैव हि संसिद्धिर्मास्थिताः जनकादय" इत्यपि तदेव प्रमाणं प्रस्तौति।

अतएव फलितशास्त्रेऽपि कर्मसिद्धान्तः। मीमांसोक्तः पुनर्जन्मसिद्धान्तश्च प्रयुक्तः दृश्यते। अयं विचारः दार्शनिकविमर्शे द्रष्टव्यः।

वराहेण वर्त्तमानफलं प्रारब्धेन सम्बद्धं पूर्वजन्मजन्यप्रभावमेव व्यञ्जयति सूचयति च। यथा– लघुजातके–

यदुपचितमन्यजन्मनि शुभाशुभं कर्मणः तस्य पक्तिम्।
व्यञ्जयति शास्त्रमेतत् तमसि द्रव्याणि दीप इव।।

अ.१, श्लो.२ वराहः

अत्र ग्रहाणां स्वस्थानाधिष्ठितराशिवशादेव परस्परं दृष्टिः पूर्णपादोनार्धपाद प्रमाणेन भवतीति। सर्वे ग्रहाः सप्तमं पूर्णदृष्ट्या पश्यन्ति। शनिकुजगुरवः दिक्क्षासु भ्रमन्त्यतः क्रमेण ३,१०,४-८,५-९ स्थानं पूर्णदृष्ट्या पश्यन्ति। अयं दृष्टिसम्बन्धः ग्रहाणां परस्परं रश्मेः योगवियोगनिष्पत्तेरपि द्योतनं करोति। प्रकाशानां परस्परयोगवियोगनिष्पत्या समुत्पन्नस्वतन्त्रयोगजप्रभावयोः द्योतनमपि दृष्टिसम्बन्ध-विमर्शेन ज्ञायते। तत्र शनिजीवकुजान् विहायान्ये ग्रहाः पाददृष्ट्या ३,१० अर्धदृष्ट्या ९-५ तथा त्रिपाददृष्टया ४-८ तथा पूर्णदृष्ट्या सप्तमं पश्यन्ति। अयं विचारः बृहज्जातकादिषु वर्त्तते।

उपर्युक्तदृष्टिसम्बन्धः गोलीयकक्षाभेदेन रश्मिजन्ययोगवियोगाभ्यां समुत्पन्नफलान्तरमपि व्यञ्जयति। पं.सीतारामझामहोदयः गोलीयसम्बन्धस्य लौकिकं भूपृष्ठीयस्वरूपं सम्बन्धमपि प्रकाशितवान्। यथा स्वस्थानात् सप्तमस्थ पूर्णदृष्टेर्लौकिकं कारणम्–

स्वधर्मं स्वप्रसूतिं च जाया रक्षति रक्षिता।
सर्वे जायागृहं तस्माद् ग्रहाः पश्यन्ति सप्तमम्।।

अन्यकारणान्तरमपि यथा ऋषिः देवोऽपि नारी मुखं दृष्ट्वा यदा मोहिताः भवन्ति तदान्येषां का कथा। अतः पत्नीभावत्वेन सप्तमे सर्वे ग्रहाः पूर्णदृष्ट्या पश्यन्तीति लौकिकपक्षः।

तृतीयदशमदृष्टिसम्बन्धः–

तृतीयं विक्रमं स्थानं दशमं राज्यमेव च।
भृत्याधीनं द्वयं तस्मात् शनिः पश्यति तद्द्वयम्।।

पञ्चमनवमदृष्टि सम्बन्धः–

विद्याया पञ्चमं स्थानं धर्मस्य नवमं मतः।
गुर्वाधीनं द्वयं तस्माद् गुरुः पश्यति तद्द्वयम्।।

चतुर्थाष्टमदृष्टि सम्बन्धः–

सुखस्थानं चतुर्थं स्यादायुः स्थानं तथाष्टमम्।
नेत्रा रक्ष्यं द्वयं तस्मात् कुजः पश्यति तद्द्वयम्।।

गृहं भूमिः वाहनं मातृभूमिः मातुः सुखं च चतुर्थेन तथायुर्दायः मरणं युद्धं छिद्रं चाष्टमेन सम्बद्धमतः सैन्याधिपतिः कुजः चतुर्थमष्टमं च पूर्णदृष्ट्या पश्यति। एवं समग्रत्रिस्कन्धज्योतिषं सम्बन्धाश्रितमेवास्तीति शम्।

## दृग्दृश्यसम्बन्धविचारः

यदसङ्गमनध्यस्तमविद्याऽध्यस्तसङ्गकम्।
अवाच्यमप्रमेयं च तदौपनिषदं नुमः।।

संसर्गादिविवर्जितोऽपि सकलाधारोऽस्ति विश्वसृजां
सर्वस्यापि निवृत्तिरूपमसकृन्मायावृतं सज्यते।
सम्बन्धो व्यवहारसिद्धविषये नैवात्मबोधोदये
तस्माद्विद्धि निरस्तसङ्गममितं निर्वेद्यरूपं विभुम्।।

व्यवहारात्मकं सर्वं जगदेतत् प्रवर्तते।
ज्ञानं व्यवहृतौ हेतुस्तच्च ज्ञेयसमन्वयात्।।

लोके सम्बन्धमाहत्य ज्ञेयज्ञानसमन्वितिः।
न च सा परमार्थत्वे जगदेतद्विवर्जनात्।।

अविद्याजन्यसंसर्ग आविद्यं परितिष्ठति।
निरवच्छिन्नचैतन्यं सर्वसङ्गविवर्जितम्।।

सर्वव्यवहारजनको लोकप्रवृत्तिनिवृत्तिनिमित्तञ्च संसर्गः। तत्र जागतिकपदार्थ सम्बन्धो व्यवहारं जनयति। जडचेतनसम्बन्धो बन्धमोक्षयोर्हेतुर्भवति। सति विषयविषणयिणोः सम्बन्धे प्रवृत्तिव्यवहारविषयवितृष्णाः प्रवर्तन्ते। विषयविषयिणोः सम्बन्धाभावे न कश्चित् प्रवर्तते। ज्ञानमेव प्रवृत्तिनिवृत्त्योर्हेतुः, तच्च विषयसम्बद्धमेव।

### सम्बन्धस्वरूपविचारः–

सम्बन्धस्यानेकरूपत्वात् ज्ञानविषययोः सम्बन्धो विषयविषयिभावरूपः। क्वचित् स्वस्वामिभावः क्वचिज्जन्यजनकभावः क्वचिच्च कार्यकारणभावः। शब्दार्थयोः सम्बन्धो वाच्यवाचकभावरूपः स च तादात्म्यरूप एव। इत्थं पदार्थानामनेकत्वात् तेषां सम्बन्धोऽपि नैकविधः। क्वचिद्भेदात्मकः क्वचिच्चाभेदात्मकः। समवायस्यैकरूपात्वादभेदात्मकः सम्बन्ध एको नित्यश्च। भेदस्यानेकतया भेदात्मकःसम्बन्धोऽनेकविधोऽनित्यश्चास्ति। सम्बन्धश्च सम्बन्धिद्वयभिन्न उभयनिष्ठतया विशिष्टप्रतीतिनियामको भवति। "सम्बन्धो

हि सम्बन्धिद्वयभिन्नत्वे सति द्विष्ठत्वे च सति आश्रयतया विशिष्टबुद्धि- नियायकः[1] इति सम्बन्धस्वरुपं विद्यते घटवद्भूतलमित्यत्र संयोगसम्बन्धो घटभूतलरूप-सम्बन्धिभ्यामन्यः सन्नप्युभयवृत्तितया घटवृत्त्याधेयतानिरूपिताऽऽधारताश्रयत्वं भूतले बोधयति। भूतलवृत्त्याधारतानिरूपिताधेयताश्रयत्वं घटे बोधयति।

अत आह निरूपितत्वं षष्ठ्यर्थः। सम्बन्धो हि सम्बधिभ्यां निरूपितः सन् सम्बन्धिनोः विशेष्यविशेषणभावेन विशिष्टबुद्धिनियामको भवति। विशेष्य विशेषणसम्बन्धावगाहिज्ञानमेव विशिष्टबुद्धिस्तस्या नियामको विषयविधया संसर्गः।

घटोऽयमिति प्रत्यक्षात्मके घटत्वप्रकारकघटविशेष्यकज्ञाने जाते घटे यो घटत्वादीनां नीलरूपादीनां च सम्बन्धः स संयुक्तविशेषणतासंसर्गेण भासते। चक्षुः संयुक्तघटे घटत्वनीलरूपादीनां विशेषणत्वे तादृशसम्बन्धोऽपि विशेषणमेवास्ति। सम्बन्धस्य विशेषणत्वे तादृशसम्बन्धनिष्ठा विषयता संयुक्तविशेषणतासन्निकर्षप्रयोज्याऽस्ति। धर्मिविशेष्यकं सम्बन्धविधया धर्मविशेषणकमिदं ज्ञानम्। यत्र तु घटे घटत्वं घटे रूपमिति ज्ञानं तत्र धर्म्येव घटकत्वेन विशेषणं धर्मश्च घटत्वरूपविभक्त्यर्थनिरूपकतया विशेष्यो भवति। सर्वासां विभक्तीनां सम्बन्धनियामकत्वात्। तत्तद्विभक्तिसमभिव्याहारेण तत्तत्सम्बधाधिगमो नान्यत्र।

अतः पदार्थानां परस्परमनेकसम्बन्धत्वेऽपि तत्तत्सम्बन्धस्य तत्तत्सम्बन्ध-निरूपकविभक्तिसमवधाने सत्येव भानम्। नीलस्य घट इत्यत्र नीलपदेन नीलत्वावच्छिन्नविषयताया घटपदेन घटत्वावच्छिन्नविषयताश्चोपस्थितेः सत्त्वेऽपि, नीलघटयोरभेदस्य योग्यताज्ञानस्य सत्त्वेऽपि, अभेदसम्बन्धावच्छिन्न-नीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकज्ञानं न भवति। यतश्च समानविभक्तित्वं स्वाव्यवहिपूर्ववर्तिपदघटितत्वञ्चाभेदसम्बन्धस्य प्रयोजकं तयोरभावे न तादृशसम्बन्धेन भानं सम्भवति। "अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिना च पदेनोपस्थापितस्यैव संसर्गमर्यादया भासते[2]।

एवं भेदसम्बन्धोऽपि तत्तद्विभक्तिकृदादिप्रत्ययसमवधाने सत्येव भासते। सम्बन्धनियामकत्वाद्विभक्त्यादिप्रत्ययानाम्। यथा हि कर्मत्वसम्बन्धो द्वितीयाविभक्तिकर्मार्थककृदादिप्रत्ययसमवधान एव भासते। एवं कर्तृत्वसम्बन्ध-स्तृतीयाविभक्तिसमवधाने कर्त्रर्थककृदादिप्रत्ययसमवधाने च भासते, नान्यत्र।

सम्बन्धस्य सत्त्वेऽपि सम्बन्धावभासकप्रत्ययासन्निधाने न प्रतीयते। समवधाने च प्रतीयते, अतः सम्बन्धनियामकत्वं प्रत्ययानामिति। तत्तत्कारकसम्बन्धनियाकत्वं तत्तद्विभक्तिप्रत्ययानाम्। सम्बन्धसामान्यनियामकत्वं षष्ठ्या विभक्तेः। अतः सम्बन्धसामान्यविवक्षायामियं बाधिका सर्वांसां विभक्तीनाम्।

## षष्ठ्यर्थविचारः-

"षष्ठी शेषे[३]" इति सूत्रेण शेषत्वेन विवक्षिते षष्ठीविधानात्, पूर्वं शेषार्थो विमर्शितव्यो यत्र षष्ठी विधीयते। कर्मादीनां प्रकृतत्वात् तदपेक्षया शेषत्वं विज्ञायते। उपयुक्तादन्यः शेषइत्युच्यते। यदि उपयुक्तत्वेन कर्मादीनेव विजानीयात् तदा कर्मादिव्यतिरिक्तत्वेन प्रातिपदिकस्यापि ग्रहणं स्यात् । अतः प्रातिपदिकार्थोऽप्युपयुक्तः, कर्मादिप्रातिपादिकार्थव्यतिरिक्तः शेषपदेन ग्राह्यः, स च स्वस्वामिभावसम्बन्धादिः क्रियामन्तरेण सम्बन्धानुपपत्त्या क्रियायास्तन्निमित्तानां कारकाणाञ्च सर्वत्र सत्त्वात् कर्मादिभ्योऽन्यः प्रातिपदिकार्थव्यतिरिक्तो न सम्भवति। अत आह स्वस्वामिभावसम्बन्धविवक्षायां सन्नपि क्रियाकारकसम्बन्धो यत्र न विवक्ष्यते तत्र षष्ठी भवति। एतेनैव सम्बन्धसामान्यविवक्षायां सर्वत्रापि षष्ठीविधानं सङ्गच्छते।

"[४]सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः।
श्रुतायामश्रुतायां च क्रियायां सोऽभिधीयते।।

सम्बन्धश्च प्रतियोग्यनुयोगिनिरूपकः सन् विशिष्टबुद्धिनियामको भवति। अनुयोगितासम्बन्धेन प्रतियोगिनोऽनुयोगिवृत्तिनियामकः प्रतियोगितासम्बन्धेन चानुयोगिनः प्रतियोगिवृत्तिनियामकःसन् विशिष्टवैशिष्ट्यावगाहिज्ञानजनकः सम्बन्धः। स च प्रतियोग्यनुयोगिभ्यां भिन्नः, तस्य प्रतियोगिरूपत्वेऽनुयोगिरूपत्वे वा तयोर्वृत्तिनियामकत्वं न संगच्छेत्, स्वेनैव स्ववृत्तिनियाकत्वाभावात्। यथा घटवद् भूतलमित्यत्र संयोगसम्बन्धः अनुयोगितासम्बन्धेन घटरूपस्य प्रतियोगिनो भूतलरूपानुयोगिवृत्तित्वनियामकः घटरूपस्य प्रतियोगिनो भूतलरूपस्यानुयोगिनो प्रकारकत्वात्। अथ च प्रतियोगितासम्बन्धेन भूतलरूपस्यानुयोगिनो घटरूपप्रतियोगिवृत्तित्वनियामकः भूतलस्य घटे विशेषणत्वेनान्वयात्। घटत्ववत्प्रकारकभूतलत्वावच्छिन्नविशेष्यकज्ञानस्य नियामकश्च भवति। भूतले घट इत्यत्र स एव संयोगसम्बन्धः, भूतलत्ववत्प्रकारकः घटत्वावच्छिन्नविशेष्यकज्ञानस्य नियामको भवति। सच प्रतियोग्यनुयोगिसम्बद्धविशिष्टज्ञानस्य नियामकः सन्नप्युभयभिन्नः परार्थत्वाद् गुणान्वयमाध्ययेन प्रधानेऽन्वेति। एवमन्यत्राप्युह्यम्।

"[५]द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते।
तत्राभिधीयमानः सन् प्रधानेऽप्युपयुज्यते।।

## स्वस्वामिभावरूपसम्बन्धविचारः

कारकप्रातिपदिकार्थभिन्नस्वस्वामिभावादिरूपसम्बन्धे षष्ठी विधीयते। स च सम्बन्धः सम्बन्धत्वेन तत्तद्रूपेण च षष्ठ्यर्थो भवति। तात्पर्यवशात् क्वचित् तत्तद्रूपेण क्वचिच्च सम्बन्धत्वेन प्रतीयते। "राज्ञः पुरुषः इत्यत्र राजादिः सम्बन्धे विशेषणम्, सम्बन्धश्च पुरुषे विशेषणम्। राजसम्बन्धी पुरुषः इति बोधः। एवञ्च सम्बन्धस्य स्वस्वामिभावस्य द्विष्ठत्वेऽपि विशेषणवाचकात् राजशब्दादेव षष्ठी, न तु पुरुषादिपदात्, प्रकृत्यर्थं प्रति प्रत्ययार्थस्य प्राधान्यानुरोधात्।

यद्यपि षष्ठ्यर्थसम्बन्धस्य संसर्गतयैव भाष्यमते भानम्। तथापि प्रकारतायाः सांसर्गिकविषयताविशेष्यतोभयनिरूप्यतया प्रकारतानिरूपकविषयताशालित्व-रूपप्राधान्य-मक्षतमेवास्ति। पुरुषादिशब्दात् षष्ठ्यां सत्यां तु नेदं निर्वहेत्। "एकापि षष्ठी विषयभेदाद्भिद्यते। अतः संयोगादिसम्बन्धसत्त्वेऽपि स्वस्वामिभावसम्बन्धाभावे नेदं देवदत्तस्य वास इति भवति व्यवहारः। "एकशतं षष्ठ्यर्थो भवति। प्रतियोग्यनुयोगिनोर्यदभिप्रायेण नैकविधा हि सम्बन्धाः। यो यत्र येन सम्बन्धेन प्रतियोग्यनुयोगिनौ सम्बध्नाति स तत्र तेन रूपेण तयोः सम्बन्ध उच्यते।

द्वितीयादिविभक्तिसमवधाने क्रियाकारकभावस्यानुभवानुरोधेन कर्मत्व-क्रियात्वाद्यात्मकसम्बन्धस्य विशेषरूपेण बोधः। मातुः स्मरति इत्यादौ तु क्रियाकारकभावस्य विशेषरूपेण बोधं स्वीकुर्वन्ति नव्याः शाब्दिकाः, तार्किकाश्च मिश्रादयः। प्राञ्चस्तु तत्रापि क्रियाकारकभावमूलकं विशेषणत्वरूपं, विषयत्वं निमित्तत्त्वं वा सम्बन्धत्वेन विशेषरूपेण वा प्रतीयत इति वदन्ति।

सर्वत्रैव सम्बन्धो हि क्रियाकारकमूलक इत्यन्ये। "राज्ञः पुरुष इत्यत्र स्वस्वामिभावसम्बन्धोऽपि क्रियाकारकभावपूर्वक एव।" "यतो हि राजा पुरुषाय वेतनदानेन तस्य स्वामी भवति।" इत्यर्थकभाष्यमेवात्र मानं वर्तते। क्रिया हि सिद्धस्वभावानां द्रव्याणां क्रियां विना परस्परसम्बन्धमभजतां निराश्रयेण सम्बन्धं करोति। मातुः स्मरति, इत्यत्र क्रिया श्रुता "राज्ञः पुरुषः, इत्यत्र तु अश्रुता दानादिक्रियाऽनुमीयते।

## समवायस्वरूपविमर्शः–

अयुतसिद्धयोरवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोः नित्यद्रव्यविशेषयोश्च सम्बन्धः समवायः। स चैको नित्यश्च समवायोऽपि स्वसम्बन्धिभिन्नः सन् तदाश्रितः प्रतियोग्यनुयोगिसम्बन्धिनोर्विशिष्टबुद्धिनियामको भवति। समवायसद्भावे इह कपाले घटसमवाय इति प्रत्यक्षमेव मानं परिकल्पयन्ति

प्राञ्चः। भूतलं घटसंयुक्तमितिवद्गगनं घटसंयुक्तमिति प्रत्यक्षानुदयात् सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वेन समवायो न प्रत्यक्षविषयस्तस्यातीन्द्रियसाधारणत्वात् किन्त्वनुमेय इति नव्याः। अनुमानं चात्र "गुणक्रियादिविशिष्टबुद्धिर्विशेषण विशेष्यसम्बन्धविषया विशिष्टबुद्धित्वाद् दण्डी पुरुष इति विशिष्टबुद्धिवत्, दण्डवान् पुरुष इत्यत्र विशेषणं दण्डः विशेष्यश्च पुरुषस्तयोः सम्बन्धः संयोगः भवति हि तद्विषयिणी बुद्धिः।

एवं गुणवान् घट इत्यत्र विशेषणं गुणो विशेष्यो घटः तयोर्यः सम्बन्धः स समवाय एवेति तद्विषयकत्वं तादृशविशिष्टबुद्धावक्षतम्। तत्र संयोगादिसम्बन्धानाम-भावात्तादृशविशिष्टबुद्धिविषयस्य समवायस्यातिरिक्तसम्बन्धतया सिद्धिः। एवं क्रियावान् घट इत्याकारकविशिष्टबुद्धिः विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् गतिमान् पुरुष इति विशिष्टबुद्धिवत्, जातिमान् घट इत्याकारक विशिष्टबुद्धिः विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् पुरुषत्ववान् पुरुष इति विशिष्टबुद्धिवदित्यनुमानेऽप्यूह्ये। वस्तुतस्त्वत्र गुणाक्रियाजात्यन्यतर प्रकारकबुद्धित्वं पक्षतावच्छेदकम्, अतो न एकैकप्रकारकबुद्धित्वस्य पक्षतावच्छेदकत्वेऽपरस्य पक्षतावच्छेदककोटिप्रवेशाऽनुपपत्तिः। तथा च गुणवान् घटः क्रियावान् घटः जातिमान् घटः इत्याद्यन्यतमविशिष्टबुद्धिः पक्षः। विशेषणविशेष्यसम्बन्धविषयेत्यस्यायमर्थः विशेषणञ्च विशेष्यञ्च सम्बन्धश्च ते विषया यस्य सन्ति इति विग्रहबलात् विशेषणतानिरूपकत्वविशेष्यतानिरूपकत्व-संसर्गतानिरूपकत्वात्मकं प्रत्येकं साध्यत्वेनोरीक्रियते। द्रव्ययोरेव संयोग इति नियमाद् गुणगुणिनोः क्रियाद्रव्ययोर्जातिव्यक्त्योर्न संयोगः। गुणद्रव्ययोरैक्याभावान्न तादात्म्यम्, अयवस्ययैव दैशिकविशेषणतासम्बन्धस्वीकाराच्च समवायोऽतिरिक्त सम्बन्धोऽभिमतः।

समवायनानात्ववादिनां नव्यानां मते निरुक्तानुमानेन न समवायसिद्धिः। अतिरिक्तानन्तसमवायानां सम्बन्धत्वकल्पनाऽपेक्षया क्लृप्तानन्तस्वरुपाणामेव सम्बन्धत्वौचित्यादित्यतस्तन्मते समवायेन घटत्वावच्छिन्नं प्रति तादात्म्येन तन्तुत्वेन हेतुत्वात् कार्यतावच्छेदकसम्बन्धविधया समवायसिद्धिः। तथा चानुमानं तादात्म्यसम्बन्धावाच्छिन्नतन्तुनिष्ठकारणतानिरूपितपटत्वावच्छिन्नकार्यता किञ्चित्सम्बन्धावाच्छिन्ना कार्यत्वात्, अत्र यः कश्चित् सम्बन्धः स समवायः। वतुतस्तु प्रतियोगितासम्बन्धेन आश्रयनाशाजन्यरूपनाशं प्रति स्वानुयोगिता-समवेतत्वसम्बन्धेन विलक्षणतेजः संयोगस्य हेतुत्वं भवति। अत्र समवायानङ्गीकारे स्वानुयोगिसम्बद्धत्वसम्बन्धेन हेतुत्वं वक्तव्यम्, तत्र स्वानुयोगिघटादिना रूपस्य

न स्वरूपसम्बन्धस्तस्य तदानीं नाशत्। अत एव न कालिकः, विद्यामानस्यैव कालिकसम्बन्धस्वीकारात्, संयोगस्य बाधिततत्वाच्च तादृशसंयोगनिष्ठकारण-तावच्छेदकसम्बन्धघटकतया समवायसिद्धिः।

मीमांसकास्तु अयुतसिद्धयो र्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योः स्वरूपसम्बन्धमेव स्वीकुर्वन्ति। स च प्रत्यक्षसिद्धः तस्यानुमानेन साधने सिद्धसाधनं दोषः। समवायसाधनाय प्रवृत्तनैयायिकस्य मते च स्वरूपसम्बन्धस्य प्रकृतानुपयोगित्वेन अर्थान्तरं दोषः। समवायसम्बन्धवादिनः सङ्गिरन्ते अनन्तस्वरूपाणां सम्बन्धत्व-कल्पने गौरवाल्लाघवेनैकसमवायसिद्धिः। तथा हि गुणवान् घटः, क्रियावान् घटः, जातिमान् घटः, इत्यादिप्रतीतिषु घटस्वरूपमेव संसर्गः, क्रियास्वरूपमेव संसर्गः, जातिस्वरूपमेव संसर्गः। तत्र तत्र तत्प्रतीति-निरूपिता च संसर्गता भिन्ना भिन्ना कल्पनीयेति, तत्तत्प्रतीतिष्वनन्तस्वरूपाणां नानासंसर्गत्वकल्पने गौरव-मित्यर्थः। गौरवाच्च स्वरूपसम्बन्धा न स्वीक्रियन्ते, अतो न सिद्धसाधनमर्थान्तरं दोषौ।

अथ विपरीतमेव गौरवम् तथा हि नीलो घट इति प्रतीतौ घटस्वरूपमेव संसर्गः घटस्वरूपं च क्लृप्तमेव न तु कल्पनीयम्, तत्प्रतीतिनिरूपिता च या संसर्गता समवाये स्वीक्रियते, सैव मया घटस्वरूपेऽङ्गीक्रियत इति समानम्, एवं तत्तत्स्वरूपेषु स्वीक्रियन्ते इत्यपि समानम्। एवं विषयभेदेन विषयतानां भिन्नतया तत्तत्स्वरूपेषु तत्तत्प्रतीतिनिरूपितानां संसर्गतानां यथा भेदाऽऽपत्तिस्तथा विषयैक्येऽपि निरूपकविषयिताभेदेन विषयताभेदस्यावश्यकतया समवायनिष्ठानामपि संसर्गतानां घटपटादिविशेष्यताभेदेन भेदापत्तिरपि समाना तत्रैकस्मिन् समवाये बहुविषयताकल्पनापेक्षया बहुस्वरूपेष्वेकविषयताकल्पने लाघवम्। तथा च अतिरिक्ततया समवायकल्पनाप्रयुक्तं गौरवमपि परमते अतः समवायो न प्रामाणिकः।

अत्रोच्यते अस्ति तावद् अयं घटः अयं घटः इति ज्ञानात् इमे घटा इति ज्ञानस्य वैलक्षण्यम्, तच्च समूहालम्बने विशेष्यताभेदेन प्रकारतानां भेदः न तु इमे घटा इति ज्ञाने। तस्मिन् ज्ञाने नानाविशेष्यतानिरूपिता एकैव प्रकारता तन्निरूपिता च संसर्गता समवायस्वीकर्तृभिरेकैव स्वीकार्या, स्वरूपसम्बन्ध-वादिभिस्तु, तत्तद्व्यक्तिस्वरूपात्मकविषयभेदाद्भिन्ना एव संसर्गताः स्वीक्रियेरन्, इति व्यक्तमेव नीलपीतादिविशिष्टेष्वनन्तेषु भूतलादिस्वरूपेषु नीलादिप्रतियोगिकत्व-कल्पनापेक्षया एकस्मिन् समवाये तत्कल्पनायां लाघवम्।

ननु समवायस्यैकत्वे "सम्बन्धसत्त्वे सम्बन्धिसत्त्वमिति नियमात् यत्र यत्र समवायस्तत्र तत्र तत्समवायस्य सम्बन्धिनो रूपादेः सत्त्वमावश्यकम्। तथा च यथा वायौ स्पर्शस्य समवायो वर्ततेऽतस्तत्र समवायेन स्पर्शोऽपि वर्तते। तथैव तस्य समवायस्य सम्बन्धि यत् पृथिव्यादिगतं रूपं तस्यापि सत्त्वं वायावापद्येत, अत आह"[१] तत्र समवायसत्त्वेऽपि रूपाभावादिति वायौ स्पर्शप्रतियोगिकत्वविशिष्टसमवायस्य सत्त्वेऽपि रूपप्रतियोगिकत्वविशिष्टसमवायस्याभावात्। तथा च रूपप्रतियोगिकत्वविशिष्टसमवायः पृथिवीजलतेजःसु वर्तते, वायौ नास्ति। तादृशसम्बन्धाभावात् तत्सम्बन्धिनो रूपस्यापि वायावभावः। ननु विशिष्टं शुद्धान्नातिरिच्यत इति नियमात्, रूपप्रतियोगिकत्वविशिष्टसमवायो न समवायातिरिक्तः। वायौ समवायसमान्यसत्त्वे विशिष्टसमवायोऽस्त्येव।

अत्रोच्यते रूपप्रतियोगिकत्वविशिष्टसमवायनिष्ठनिरूपकताकानुयोगिताया वायावभावात्। वस्तुतस्तु स्फटिके लौहित्याश्रयसंयोगवत् कृष्णपाषाणादावपि लौहित्याश्रयसंयोग-सत्त्वेऽपि लोहितः पाषाण इति प्रतीत्यभावात् पाषाणनिष्ठलौहित्याश्रयसंयोगस्य यथा लौहित्यसम्बन्धत्वाभावस्तथा वायू रूपवानित्यनुभवाभावेन वायौ समवायस्य रूपसम्बन्धत्वं नास्ति।

## विषयविषयिभावसम्बन्धविचारः-

ज्ञानविषययोः सम्बन्धो विषयविषयिभावरूपः। स च निरूप्यनिरूपकभावरूप एव। विषयतानिरूपितविषयिता विषयितानिरूपितविषयता च भवति। यद्येन निरूपितं भवति तत्तदाश्रयेणापि निरूपितं भवति। अतो विषयताया आश्रयो विषयोऽपि ज्ञाननिष्ठविषयिताया निरूपको भवति। अथ च विषयिताया वृत्तिरूपतया सा व स्वाश्रयविषयिणा ज्ञानेनापि निरूपिता भवति। विषयिताया निरूपकाः ज्ञानं विषयता विषयश्च एते त्रयः सन्ति। निरूप्या च विषयिता अतो निरूपकतासम्बन्धेन विषयज्ञानयोः सहावस्थानमिति। स च निरूपकतासम्बन्धो विषयितारूपस्तदाश्रयो ज्ञानमतस्तेन सम्बन्धेन विषयो ज्ञाने विद्यते।

विषयितानिरूपिता विषयता भवति। यद्येन निरूप्यते तत्तदाश्रयेण निरूप्यत इति न्यायेन विषयता विषयिताऽऽश्रयविषयिणा ज्ञानेनापि निरूप्यते। अथ च विषयता वृत्तिरूपतया स्वाश्रयविषयेणापि निरूप्यते। विषयताया निरूपका विषयिता, विषयो ज्ञानञ्च, निरूप्या चात्र विषयता अतो निरूपकतासम्बन्धेन ज्ञानविषययोः सहावस्थानम्। यतश्चात्र निरूप्या विषयताऽस्ति, अतो निरूपकतासम्बन्धोऽपि विषयतारूपः, यतश्च विषयता विषयनिष्ठा, अतस्तेन सम्बन्धेन ज्ञानमपि विषयनिष्ठं भवति। अयमेव निरूप्यनिरूपकभावरूपः

सम्बन्धोऽस्ति ज्ञानविषययोः स च विषयविषयिभावपदेनापि अभिधीयते। तथा निरूपकतासम्बन्धेन विषयतारूपः विषयितारूप एवास्ति।

यद्यपि विषयविषयिभावसम्बन्धो वृत्तिनियामको नास्ति। तथापि सम्बन्धसत्त्वमेव सम्बन्धिसत्त्वमिति धिया, विषयस्य निरूपकतासम्बन्धो विषयितारूपः सा च स्वरूपसम्बन्धेन ज्ञानवृत्तिस्तत्सम्बन्धी विषयश्च विषयितारूपनिरूपकतासम्बन्धेन ज्ञानवृत्तिर्भवति। एवं ज्ञानस्य निरूपकतासम्बन्धो विषयतारूपः सा च स्वरूपसम्बन्धेन विषयवृत्तिस्तत्सम्बन्धिज्ञानञ्च विषयतारूपनिरूपकतासम्बन्धेन विषयवृत्तिर्भवति।

### वाच्यवाचकभावसम्बन्धः-

शब्दश्रवणान्तरमर्थबोधो जायते। अतोऽस्ति कश्चिच्छब्दार्थयोः सम्बन्धः येन शब्दः स्वार्थं बोधयति। अस्ति तादृशं सामर्थ्यं घटादिशब्देषु येन कम्बुग्रीवादिमत्वाद्यर्थस्य बोधः शब्दश्रवणाव्यवहितकाले भवति। तच्च सामर्थ्यं वृत्तिरूपं वाच्यवाचकभावरूप इति शाब्दिकाः। ईश्वरेच्छारूपसङ्केत इति नैयायिकाः। अर्थो वाच्यः शब्दश्च वाचकस्तयोः सम्बन्धो वाच्यवाचकभावरूपः। अर्थनिष्ठा वाच्यता पदनिष्ठवाचकतानिरूपिता भवति। पदनिष्ठा वाचकता च अर्थनिष्ठवाच्यता निरूपिता भवति। यद्येन निरूप्यते तत्तदाश्रयेणापिनिरूप्यते। अर्थनिष्ठा वाच्यता यथा वाचकतानिरूपिता भवति। तथैव वाचकताऽऽश्रयपदेनापि निरूपिता भवति। एवं वाच्यताया वृत्तिरूपतया सा स्वाश्रयवाच्येनापि निरूप्यते। अर्थनिष्ठवाच्यताया निरूपका वाचकता पदम् अर्थश्च। वाचकता स्वरूपसम्बन्धेन वाचकवृत्तिः निरूपकता-सम्बन्धेन वाच्यतावृत्तिर्भवति तेनैव सम्बन्धेन पदं वाच्यताऽश्रयार्थवृत्ति भवति।

एवं वाचकता यथा वाच्यतानिरूपिता भवति तथैव वाच्यताऽऽश्रयार्थ निरूपिता भवति। अथ च वाचकताया वृत्तिरूपतया स्वाश्रयपदेनापि निरूप्यते। वाचकताया निरूपका वाच्यता वाच्यं पदञ्च। वाचकता स्वरूपेण पदवृत्तिः निरूपकतासम्बन्धेन वाच्यतावृत्तिः। निरूपकताया वाचकतारूपतया तेन सम्बन्धेन पदं वाच्यवृत्ति भवति। अयमेव शब्दार्थयोर्निरूप्यनिरूपकभावाख्यः सम्बन्ध-स्तद्ग्राहकं शब्दार्थयोर्भेदाभेदघटिततादात्म्यं शाब्दिकनये। ईश्वरेच्छारूपसङ्केत-स्तार्किकमते। योऽर्थः स शब्दः यः शब्दः सोऽर्थः इत्याकारक इतरेतराध्यासात्मकः सङ्केतः वाच्यवाचकभावरूपां शक्तिं ग्राहयति।. अत एव "[10]तस्य वाचकः प्रणवः इति सूत्रे "[11]स्थितोऽस्य वाच्यस्य वाचकेन सम्बन्धः पतञ्जलिनोक्तं संगच्छते। शब्दार्थयोस्तादात्म्यस्वीकारादेव "श्लोकमश्रृणोदथार्थं श्रृणोति इति अर्थं वदति

इत्यादिव्यवहारः सम्पद्यते। "[१२]तादात्म्यं च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वमिति भेदाभेदसमनियतम्। अभेदस्याध्यस्तत्वाच्च न तयोर्विरोधः।

न्यायमते सङ्केतस्येच्छारूपत्वात् प्रथमं पदविशेष्यकं सङ्केतमाह "इदं पदममुमर्थं बोधयतु" प्रथमान्तार्थमुख्यविशेष्यकः शाब्दबोधस्तार्किकनये। अत्र वाक्ये पदशब्दस्य प्रथमान्ततया पदविशेष्यको बोधो जायते। तथाच गोत्वाद्यवच्छिन्नविषयतानिरूपकबोधनिरूपितजनकताऽऽश्रयो गवादिपदमिति फलितम्। गोत्वाद्यवच्छिन्नविषयतानिरूपकत्वं बोधे तादृशबोध-निष्ठजन्यता-निरूपितजनकता पदे। अर्थविशेष्यकसङ्केतश्च "अस्माच्छब्दादयमर्थो बोद्धव्यः, गवादिपदाद् गवादिपदार्थो बोद्धव्यः। तथा च गवादिपदजन्यबोधविषयता-ऽऽश्रयोऽर्थो गवादिकमिति।

गवादिपदजन्यबोधनिष्ठविषयितानिरूपितविषयताऽऽश्रयत्वं गवादौ। एवं बोधादिविशेष्यकोऽपि सङ्केतः सम्भवति यथा गोत्वाद्यवच्छिन्नविषयको बोधो गवादिपदजन्यो भवतु। इत्थमुभयमते निरूप्यनिरूपकभावरूपः सम्बन्धः सङ्गच्छते।

## कालिकसम्बन्धः–

सर्वस्यापि जन्यपदार्थस्य काले विद्यमानतया सर्वेषां जन्यपदार्थानां परस्परं कालिकसम्बन्धो वाच्यः। जन्यमात्रं कालोपाधिरिति नियमात्, जन्यानामेव कालिकः सम्बन्धो जन्यानामेव कालोपाधित्वम्। "[१३]जन्यानां जनकः कालो जगतामाश्रयो मतः" नित्यपदार्थेषु न कोऽपि कालिकसम्बन्धेन वर्तते नित्यास्तु कालिकसम्बन्धेन अनित्येषु वृत्तयो भवन्ति। नित्येषु कालिकायोगात्। कालिकसम्बन्धो नाम समनियतकालवृत्तित्वम्। नित्यानां जन्यविनाशराहित्यात् कालनिर्पेक्षत्वेन भिन्नकालीनयोर्जन्यनित्यपदार्थयोः विषयत्वान्यसम्बन्धेनाधाराधेयभावविरहः। एवं जन्येष्वपि भिन्नकालिकपदार्था न कालिकसम्बन्धेन वृत्तयो भवन्ति।

कालाख्यसम्बन्धविषये प्रमाणं दर्शयति "[१४]इदानीं घट इत्यादिप्रतीतिः सूर्यपरिस्पन्दादिकं यदा विषयीकरोति तदा सूर्यपरिस्पन्दादिना घटादेः सम्बन्धो वाच्यः मध्याह्नादौ घटोऽस्ति, इत्यादिप्रतीतिर्यदा सूर्यस्य परिस्पन्दादिरूपक्रियां विषयीकरोति, तदा सूर्यस्य गत्यात्मकक्रियया सह घटपटादिपदार्थानां कश्चित् सम्बन्धः स्वीकार्यः। स च न संयोगः सूर्यक्रियया सह घटादिपदार्थस्य संयोगासम्भवात्। नापि समवायः घटे सूर्यक्रियाया असमवायात्, नापि स्वरूपस्तयोरभावसमवायान्यतराभावात्। समवायाभावयोरेव स्वरूपसम्बन्धः प्रत्यासत्या स्वाश्रयतपनसंयोगिसंयोगात्मकः परस्परसम्बन्धः कल्पनीयः। स्वं

सूर्यक्रिया तदाश्रयस्तपनः सूर्यः तस्य संयोगी कालः तत्संयोगः घटे वर्तते, इति परस्परासम्बन्धघटकः काल एव पदार्थः। ननु आकाशादिरेव तत्सम्बन्धघटकः कल्प्यतामिति चेन्न, आकाशदिगात्मनां विनिगमनाविरहेण अतिरिक्तकालस्यैव संयोगिपदेन ग्रहणात्। अनुमानञ्चात्र इदानीं घटः इत्याकारकसूर्यपरिस्पन्द-प्रकारकघटविशेष्यकप्रतीतिः परस्परसम्बन्धविषया साक्षात्सम्बन्धाभावे सति विशिष्टबुद्धित्वात्।

अयं कालिकसम्बन्धो वृत्तिनियामक इत्थम् भवति परिस्पदाश्रयसूर्य-संयुक्तकालस्य संयोगः यथा घटे तथा पटेऽपि सत्त्वात्। तेन सम्बन्धेन घटादयः काले वर्तन्ते। कालस्य जन्यमात्रोपाधितया उपाधेयेषु जन्यपदार्थेस्वपि जन्यपदार्था वर्तन्ते। घटकालो नाम घटोपहितकालः। उपाधिवृत्तिपदार्था उपाधेयवृत्तयोऽपि भवन्तीति नियमात्। यथा घटवृत्त्युदकं घटोपहिताकाशेऽपि वर्तते। अत्रापि परस्परं जन्यपदार्थनिष्ठानुयोगिताप्रतियोगितयोर्निरूपकः कालः स च सम्बन्धत्वेन ग्राह्यः। काल एवाधारभूतजन्यपदार्थोपाधितयाऽनुयोगिता। स एव वृत्तिरूपजन्य-पदार्थोपाधितया प्रतियोगिता। उभयत्रापि कालस्यान्वयात्।

**स्वरूपसम्बन्धः–**

स्वं प्रतियोगि अनुयोगि वा रूपं यस्य स स्वरूपसम्बन्धः। निरूपककोटि-प्रविष्टा अभावप्रभृतयो द्रव्यादिपञ्चकभिन्नाः स्वरूपसम्बन्धेन स्वाश्रयेषु वृत्तयो भवन्ति। द्रव्यादिपञ्चकभिन्नानामाश्रयेषु वर्तमानत्वे स्वरूपसम्बन्ध एव सम्बन्धः। द्रव्यादिपञ्चकभिन्नभावरूपसमवायप्रत्यक्षे यः सम्बन्धः स न प्रतियोग्यनु-योग्यतिरिक्तः। यथा जातिव्यक्त्योः सम्बन्धः जातिप्रतियोगिको व्यक्त्यनुयोगिकः। जातिमतीषु द्रव्यगुणकर्मात्मकव्यक्तिषु यो जातिप्रतियोगिकः सम्बन्धः स जातिव्यक्त्यतिरिक्तसंयोगादिरूपो नास्ति। एवं गुणगुणिनोः सम्बन्धः गुणप्रतियोगिको गुण्यनुयोगिक एव तदतिरिक्तसंयोगादिसम्बन्धानपेक्षणात्। एवं प्रतियोगिताऽ-नुयोगितादयोऽपि स्वाश्रयेषु स्वसम्बन्धेन वृत्तयो भवन्ति।

चतुर्विधाभावप्रत्यक्षे स्वरूपसम्बन्ध एव नियामकः। अभावस्यानुयोगिनि स्वरूपेण भावात्। भवन्तु नाम प्रतियोगिवृत्तिप्रतियोगिताया अवच्छेदकाः संयोगादिसम्बन्धाः। अभावस्य स्वरूपेण तत्र भानात् संयोगादिसम्बन्धा नापेक्ष्यन्ते। भूतले घटाभावः पटे घटभेद इत्यादिप्रतीतिः अनुयोगिरूपभूतलादिकं विषयीकुर्वन्ती विशेषणविधया तद्वृत्त्यभावं विषयीकरोति। अतोऽभावविषयकप्रत्यक्षेऽपि प्रतियोग्यनुयोग्यतिरिक्तः कश्चित् सम्बन्धो नापेक्ष्यते। अत एव स्वरूपसम्बन्धेन सिद्धविषयाणामधिकरणस्वरूपं मत्वा द्रव्यादिपञ्चभावातिरिक्तपदार्थानामभाव इति

परिकल्पयन्ति मीमांसकाः। अधिकरणस्वरूपस्वीकारे समवायादीनामाधाराधेय-भावेन प्रतीतिर्न स्यात्। भवति च द्रव्ये गुणसमवायः, क्रियावति क्रियासमवाय इत्यादिप्रतीतिः। भूतले घटाभावः पटे घटभेदः इत्यादिप्रतीतिः। अधिकरण-व्यतिरेकेणाधेयतया समवायादीनां प्रत्ययदर्शनात्, तत्प्रत्ययनियामकः स्वरूपसम्बन्धः स्वीकार्यः। स च वृत्तिनियामकोऽप्यस्ति। द्रव्ये गुणसमवायः भूतले घटाभाव इति प्रतीतिदर्शनात्।

### तादात्म्यसम्बन्धः–

कार्यकारणयोः सहावस्थानमेव तयोर्नियामकसम्बन्धः। यत्र कार्यमुत्पद्यते तत्र कारणेनापि भाव्यम्। उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियञ्च परितिष्ठति। ततस्तत्र समवायेन गुणः क्रिया चोत्पद्येते। कार्यभूते गुणक्रिये यत्र द्रव्य उद्‌भवतस्तत्र कारणभूतेन द्रव्येणापि भाव्यम्। द्रव्यगुणयोः सहावस्थानमन्तरा कार्यकारणभावो नोपपद्यते। स्वस्य स्वेन सह तादात्म्यातिरिक्तसंयोगादिसम्बन्धो न भवितुमर्हन्ति, अतः समवायिकारणं स्वस्मिन् तादात्म्येन वर्तते। तत्रैव कार्यं समवायेन वृत्ति, इति सहावस्थानम्। स आत्मा स्वरूपं यस्य तदात्मा तदात्मनो भावः तादात्म्यमिति व्युत्पत्तेः। तादात्म्यसम्बधो वृत्तिनियामको नास्ति। वृत्त्यनियामकत्वं च वृत्तितानवच्छेदकत्वं तच्च तेन सम्बन्धेन तद्वानिति प्रतीत्यभावनिबन्धनम्। यथा कुशलतरोऽपि नटः स्वकन्धोपरि स्थातुं न शक्नोमि। तथैव स्वस्य स्वस्मिन् केनापि सम्बन्धेन वृत्तिर्न भवति।

### पर्याप्तिसम्बन्धः–

उभयत्वादिव्यासज्यवृत्तिधर्मा उभयत्वत्रित्वादिपरार्धपर्यन्तास्संख्या अवच्छेदकताश्च उभयत्वाद्यवच्छेदेनैव पर्याप्तिसम्बन्धेन उभयादिस्वाश्रयेषु वृत्तयो भवन्ति। उभयत्वम् उभयत्रैव पर्याप्तमिति नियमात्। उभयत्वाद्यवच्छिन्नावच्छेदकता उभयत्रैव पर्याप्ता। एकत्वावच्छिन्नावच्छेदकता चैकस्मिन्नेव पर्याप्तेति नियमात्, अवच्छेदता उभयत्वाद्यवच्छेदेन एकत्वाद्यवच्छेदेन च स्वाश्रयेषु वृत्तयो भवन्ति। अयमपि सम्बन्धो वृत्तिनियामको भवति। वृत्तिनियामकत्वञ्च वृत्तितावच्छेदकम्। तच्च तेन सम्बन्धेन तद्वानिति प्रतीतिनिबन्धनम्। उभयत्ववानुभयः, एकत्ववदेकमिति प्रतीतेः।

### स्वाभाववद्‌वृत्तित्वसम्बन्धः–

धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोगरूप उपाधिः स्वाभाववद्‌वृत्तित्वसम्बन्धेन वह्निरूपासद्धेतौ वृत्तिर्भवति। यद्वैशिष्ट्यं यत्र भासते स एव स्वपदेन गृह्यत इति

नियमात् स्वपदार्थ आर्द्रेन्धनसंयोगस्तस्याभावोऽयोगोले तन्निरूपितवृत्तित्वं वह्नौ वर्तते। आर्द्रेन्धनसंयोगवह्न्योः सम्बन्धो यद्यपि परम्परारूपःसम्बन्धस्तथापि धूमसाध्यसाधने वह्निरूपो हेतुरुपाधिमानिति प्रतीतिसद्भावाद् वृत्तिनियामकत्वेनाभिमतः स्वाभाववद्वृतित्वसम्बन्धः।

न सर्वे परम्परासम्बन्धा वृत्तिनियामका भवन्ति। यथा साध्याभाववदवृत्तित्वरूपो व्याप्तिसम्बन्धः यद्वा हेत्वधिकरणात्यन्ताभावाप्रतियोगित्वरूपसम्बन्धः। व्याप्तिरूपः सम्बन्धः साध्यसाधनयोः। प्रतीतिस्तु व्याप्तिमद्धेतुरिति। साध्यवद्धेतुः साधनवत्साध्यमिति वा प्रतीतिर्न भवति।

## व्याप्तिस्वरूपविचारः–

व्याप्यव्यापकयोरविनाभावसम्बन्धः स च व्याप्तिरित्युच्यते, तज्ज्ञानमनुमानम्। व्याप्तिश्च साध्याभाववदवृत्तित्वरूपा प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसमानाधिकरण्यरूपा च। अयमेव सहचार्यनियमः अविनाभावपदेन व्यपदिश्यते। अविनाभावत्वं नाम व्यापकमन्तरा व्याप्यस्यानुत्पत्तिः। स च द्विविधः कार्यकारणभावरूपः स्वभावरूपश्च। वह्निमन्तरा धूमो नोत्पयते, अतो वह्निना सह धूमस्य कार्यकारणभावरूपः अविनाभावसम्बन्धः। स्वभावश्चात्र तादात्म्यसम्बन्धः यथा वटवृक्षेण सह वृक्षस्य तादात्म्यसम्बन्धः स च अविनाभावरूप एवास्ति। वटवृक्षे वृक्षस्य तादात्म्येन सत्त्वात्।

उक्तञ्च–

"[१६]"कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमोऽदर्शनान्न च दर्शनात् ।।"

रूपरसयोरेतादृशोऽविनाभावसम्बन्धो नास्ति। रूपरसयोर्न तु कार्यकारणभावरूपसम्बन्धः, न च तादात्म्यसम्बन्धोऽस्ति। रूपवान् रसात्, इत्यत्र व्याप्तिश्च दृश्यते। अत एवोक्तम्, नान्तरीयकार्थदर्शनम्, व्याप्तिः। योऽर्थो यमर्थमन्तरेण न भवति स नान्तरीयकः नान्तरीयकश्चासावर्थश्चेति नान्तरीकार्थः तद्दर्शनं व्याप्तिश्च। अत्र लक्षणे लिङ्गेन सह लिङ्गिनो नान्तरीयकत्वसम्बन्धः स च अविनाभावरूप एवास्ति। अयं व्याप्तिरूपः परम्परासम्बन्धः वृत्तिनियामको नास्ति, वह्निमान् धूमः इति प्रतीतेः धूमवान् वह्निरिति प्रतीतेश्चाभावात्। इत्थं सामान्येन लौकिकाः सम्बन्धाः निरूपिताः। एते सम्बन्धा आत्मानात्मनोर्न सम्भवन्ति।

## दृग्दृश्यसम्बन्धनिरासः–

दृग्रूपात्मनो दृश्यरूपानात्मना सह कश्चित् लौकिकपरमार्थिकः सम्बन्धो न सम्भवति, तमःप्रकाशवद् विरुद्धस्वभावात्। इतरेतरभावरूपतादात्म्यसम्बन्धं निराकुर्वता भगवत्पादशङ्कराचार्येण उक्तम् अध्यासभाष्ये "[१६]युष्मदस्मत्प्रत्ययगोचर-योर्विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेभावानुपपत्तौ तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः, तमःप्रकाशयोर्यादृग्विरोधोऽभिमतस्तादृगेव आत्मानात्मनोरिति। नहि तावत्सहावस्थानलक्षणो विरोधः। दृश्यते हि मन्दप्रदीपे वेश्मनि अस्पष्टं रूपदर्शनम्, अन्यत्र च स्पष्टम्। तेन ज्ञायते तत्र तमसोऽपीषदनुवृत्तिः तथा च छायायामप्यौष्ण्यं तारतम्येनोपलभ्यमानमातपस्यापि तत्रावस्थानं सूचयति। एतेन शीतोष्णयोरपि युगपदुपलब्धेः सहावस्थानमुक्तम्। अत उच्यते परस्परात्मतालक्षणो विरोधः। न हि जातिव्यक्त्योरिव परमार्थतः परस्परसम्भेदः सम्भवति। इतरस्मिन् सतीतरस्य भावः सहावस्थानम्, इतरस्येतरभावः तादात्म्यं परस्परसम्भेदो वा। भवतु नाम सहावस्थानं तमःप्रकाशयोःपरस्परानात्मकतया तादात्म्यं नास्ति। यत्र तादात्म्यं तत्रैव अभेदसम्बन्धः स्वीक्रियते। तादात्म्याभावान्नाभेदसम्बन्ध आत्मानात्मनोरिति। अपि चाधिष्ठानसत्तया सत्त्वमारोप्यस्येति नियमात् सहावस्थानमपि नास्ति आत्मानात्मनोरिति।

तथा चानुमानं आत्मानात्मानौ तादात्म्यसून्यौ क्वापीतरेतरभावरहितत्वात् तमः प्रकाशवत्। अत्रापि हेतोर्नासिद्धिः विमतौ विरुद्धस्वभावौ युष्मदस्मत्-प्रत्ययगोचरत्वात् देवदत्ततद्वैरिवत्। अत्र विमतपदेन लोकसिद्धात्मानात्मानौ न गृह्येते। लोकसिद्धात्मानात्मनोः पक्षत्वे पूर्वोक्तयोरनुमानयोः सिद्धसाधनं दोषः। लोके चेतनदेहादिसङ्घात आत्मा पाषाणादिश्चानात्मा तयोः इतरेतरतादम्त्याध्यास-रहितत्वं तादात्म्यशून्यत्वं च सिद्धमेव। प्रभाकरतमे प्रमातृत्वकर्तृत्वभोक्तृत्वाध्या-साश्रयो जडस्वभाव आत्मा इन्द्रियादिप्रपञ्चश्चानात्मा। वेदान्तिभिस्तावदनात्वे-नाभिमतौ एकस्मिन्नेवात्मनि अध्यासस्य तादात्म्यस्य विरोधस्य चानङ्गीकारात्। वेदान्तिनस्तु शुद्धबुद्धमुक्तस्वभावं सद्रूपं चिद्रूपम् आनन्दरूपञ्चात्मेति मन्यन्ते तदतिरिक्त-देहेन्द्रियादिकं तदाश्रयञ्चानात्मेति स्वीकुर्वन्ति। तयोर्विरुद्धस्वभावान्न तादात्म्यसम्बन्धः। आत्मनो देशकालापरिच्छिन्नत्वात् देहादिप्रपञ्चस्य देशकालपरिच्छिन्नत्वाद् विरुद्धस्वभावत्वान्न तयोस्तादाम्त्यमिति। अथ चात्मनश्चिद्रूपत्वात् देहादिप्रपञ्चस्य जडस्वभावत्वान्न विरूपयोः कश्चित् तादात्म्यसम्बन्धो भवितुमर्हति। उक्तञ्च नैस्कर्म्यसिद्धौ-

"[17]ब्रह्मात्मा वा भवेत्तस्य यदि वानात्मरूपकम्।
आत्मानप्तिर्भवेन्मोहादितरस्याप्यनात्मनः।।

अन्यस्यान्याप्राप्तौ न कश्चिद्धेतुसंभवः।
तस्मिन् सत्यपि नो नष्टः परमात्मनं प्रपद्यते।।

**भेदसम्बन्धनिरासः–**

आत्मानात्मनोर्नापि भेदसम्बन्धः सर्वसम्बन्धहीनत्वादात्मनः। न सावच्छिन्नेनानात्मना सह निरवच्छिनस्यात्मनः कश्चित् सम्बन्धो भवतुमर्हीति। तथा च श्रुती "[18]असङ्गो न हि सज्यते" "[19]असङ्गोऽयं पुरुषः" स्मृतिरपि आत्मानात्मनोः सम्बन्धं निषेधयति।

"[20]इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः।।

भेदसम्बन्धेषु आत्मानात्मनोर्न संयोगसम्बन्धः। अव्याप्यवृत्तिकस्य संयोगस्य सावयवद्रव्ययोरेव सम्भवात्। अव्याप्यवृत्तिकत्वं नाम स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्। यत्र संयोगः समवायेन वर्तते तत्रैव स्वरूपसम्बन्धेन संयोगाभावोऽपि वर्तते। यथा शाखाऽवच्छेदेन वृक्षे कपिसंयोगः मूलावच्छेदेन कपिसंयोगाभावः। निरवयवे चैतन्ये संयोगो न सम्भवति। तस्यावच्छिन्नवृत्तिकत्वात्।

नापि समवायः तस्य नित्यत्वघटितया निरूपयितुमशक्यत्वात्। नित्यसम्बन्धत्वं समवायत्वसिति समवायलक्षणम्। ब्रह्मातिरिक्तस्य नित्यत्वास्वीकारात्। प्रागभावप्रतिगित्वे सति ध्वंसाप्रतियोगित्वम् नित्यत्वम्। तच्च त्रिकालाबाध्यसत्ताकम्। त्रिकालाबाध्यसत्ताकं ब्रह्मातिरिक्तं किमपि नास्ति। ब्रह्मातिरिक्तस्य सर्वस्यापि जन्यत्वात्। उत्पन्नं द्रव्यं क्षणं निर्गुणं निष्क्रियं च परितिष्ठति। यस्मिन् काले द्रव्ये गुणो नोत्पन्नः क्रिया च नोत्पन्ना तस्मिन् काले गुणनिरूपकः क्रियानिरूपकश्च समवायोऽपि नास्ति। यदा अवयवेषु अवयविद्रव्यं नारब्धं तदा अवयविनिरूपकः समवायोऽपि नास्तीति समवायस्यानित्यत्वम्। अक्षरपदेन ब्रह्मण एव प्रतिबोधनात्। तथा च श्रुतिः

"[21]यथोर्णनाभिः सृजते गृह्णते व यथा पृथिव्यामोषधयः सम्भवन्ति।
यथा सतः पुरुषात्केशलोमानि तथाक्षरात्सम्भवतीह विश्वम्।

"[22]विरजः पर आकाशादज आत्मा महान् ध्रुवः" "[23]नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। अस्तु लौकिकपरमार्थिकः समवायस्तथापि

आत्मनो निगुर्णत्वात् निष्क्रियत्वाच्च न समवायः सम्भवति। आत्मनि समवायसम्बन्धेन यदि कश्चित् वर्तेत, तदा समवायः स्वीक्रियेत। अवयविद्रव्यभिन्नतया आत्माऽपि न समवायेन कुत्रचिद्वृत्तिर्भवति।

## संयोगसम्बन्धनिरासः-

आत्मानात्मनोर्नापि संयोगसम्बन्धस्तस्याव्याप्यवृत्तितया सावयवद्रव्ययोरेव सम्भवात्। अव्याप्यवृत्तित्वं नाम स्वात्यन्ताभावसमानाधिकरणत्वम्। अनित्यद्रव्येषु यत्किञ्चिदवच्छेदेन संयोगस्य वृत्तित्वेऽपि यत्किञ्चिदवच्छेदेन संयोगाभावस्य सत्त्वात् संयोगसंयोगाभावयोर्भवति समानाधिकरणत्वम् निरवयवेषु नित्यद्रव्येषु तदभावात्। सर्वभूर्तद्रव्यसंयोगित्वमिति लक्षणमप्यसम्भवम्। देशापरिच्छिन्नत्वं वस्त्वपरिच्छिन्नं वा विभुत्वम्। कालापरिच्छिनत्वञ्च नित्यत्वम्। दृशः देशकालवस्तुभिरपरिच्छिन्नत्वात्। आकाशात्मकालदिशामपरिच्छिन्नत्वेन विभुत्वं न तु सर्वमूर्तसंयोगितयेति। घटमठाद्युपाधिमादाय घटाकाशमठाकाशादिव्यवहारः क्रियारूपोपाधिमादाय काले भूतवर्तमानभविष्यदादिव्यवहारः। उदयाचलसुमेरु-सन्निकृष्टविपकृष्टाद्युपाधिमादाय दिशि प्राच्यादिव्यवहारः सम्पद्यते। उपाधेर्विधेयेऽनन्वयात् अपरिच्छिन्नत्वं विभुत्वमेव परितिष्ठते वियदादिषु।

## कालिकसम्बन्धनिरासः-

आत्मानात्मनोः कालिकसम्बन्धोऽपि न सम्भवति। जन्यमात्रं कालोपाधिरिति नियमात्। नित्येषु कालिकायोगादिति वचनाच्च। यत्तु प्रतिपादियन्ति नित्येषु कालिकयोगादित्यस्यायमर्थः, नित्येषु कालिकसम्बन्धेन अनित्यपदार्था वृत्तयो न भवन्ति, नित्यास्तु कालिकसम्बन्धेनानित्येषु वृत्तयो भवन्त्येव तन्न युक्तिसहम्। कालिकसम्बन्धस्य वृत्तिनियामकतया कालिकसम्बन्धेन वियदादीनामनित्येषु वृत्तित्वे, आकाशमवृत्तिम-दिति सिद्धान्तस्य विप्लवापत्तेः। अत आत्मानात्मनोर्न कालिकसम्बन्धः। देशकालापरिच्छिन्नस्यात्मनः कालिकसम्बन्धो नास्ति।

## स्वस्वामिभावसम्बन्धनिरासः-

स्वत्वं नाम सत्तावत्त्वं तच्च प्रपञ्चजातस्य न सम्भवति। ब्रह्मातिरिक्तस्य देहादिप्रपञ्चजातस्य स्वसत्ता नास्ति। अधिष्ठानभूतचैतन्यसत्त्वेन सत्तावन्तोऽन्ये। आरोप्यमाणवस्तुनोऽधिष्ठानसत्तातिरिक्तसत्ताऽभावात्। एवं स्वामित्वमपि न सम्भवति, ब्रह्मणः सत्वसम्बन्धानिरूपात्।

वाच्यवाचकभावसम्बन्धस्तु शब्दार्थयोरेव सम्भवति। इत्थं प्रतियोग्यनुयोगिनिरुपितः कश्चन सम्बन्धो नास्ति, आत्मानात्मनोरिति।

## विषयविषयिभावसम्बन्धनिरासः-

नापि विषयविषयिभावः सम्बन्धस्तस्य स्वरूपं निरूपयितुमशक्यत्वात्। विषयश्च विषयी चेति विषयविषयिणौ तयोर्भावः, द्वन्द्वान्ते श्रूयमाणतया भावपदस्य प्रत्येकमन्वयात्। विषयभावः (विषयत्वम्) विषयिभावः (विषयित्वम्) इति स्वरूपमवगम्यते विषयविषयिभावपदस्येति। विषयत्वं हि विषयवृत्तिधर्मः विषयित्वञ्च विषयिवृत्तिधर्मस्तयोरन्यतरत्वेनोभयत्रानन्वयात्। यदि च कथञ्चिन्निरूप्यनिरूपकभावापन्नत्वेन ज्ञानविषययोः सम्बन्धोऽभिमन्यते तथापि तयोरभेदासम्भवात् भेद एवाङ्गीक्रियते। स च भेदो न निरूपयितुं शक्यते। दृशो ज्ञानविषयत्वाभावाज्ज्ञानविषयीभूतदृश्यान्न सम्भवति भेदप्रतिपत्तिः। धर्मिप्रतियोग्यपेक्षत्वाद्भेददृष्टेः। नाज्ञातोधर्मी प्रतियोगी अनुयोगी वा भवति। यदि अज्ञातप्रतियोगिकः अज्ञातानुयोगिको भेदः स्यात्तदा सर्वस्य सर्वतो युगपद्भेददृष्टिरनुभूयेत। तस्माद्दृष्टयोरेव परस्परापेक्षया भेददृष्टिः सम्भवति, न तु दृष्टादृष्टयोर्नाप्यदृष्टयोरिति। अंतो दृग्दृश्ययोर्भेदप्रसिद्धेर्न मूलं पश्यामः। ननु ज्ञानान्तराविषयाऽपि दृग् नाप्रसिद्धा स्वयंप्रकाशस्वरूपात्वादतो भेददृष्टिः स्यादिति चेन्न, भेदस्वरूपं निरूपयितुमशक्यत्वात्। तथा हि कोऽयं भेदो नाम। किं स्वरूपमेवानुयोगिनः उतानुयोगिधर्मः। स्वरूपं चेत् भेदज्ञानाय प्रतियोग्यपेक्षा न स्यात्। न हि स्वरूपज्ञानाय प्रतियोगी अपेक्ष्यते। यदि स्वरूपज्ञाने प्रतियोग्यपेक्षा स्यात्तदा प्रतियोगिस्वरूपज्ञानाय प्रतियोग्यन्तरापेक्षा स्यात् ततो भेददृष्टेरनवस्थाऽऽपतेत्। यदि धर्मः सोऽपि नाभिन्नः उक्तदोषप्रसङ्गात्।

तस्मात्कथञ्चिद्भिन्नो ज्ञानान्तरगम्यो रूपरसादिवद्भेदोऽभ्युपेयः। अथ युष्मत्प्रत्ययगोचरो विषयः अस्मत्प्रत्ययगोचरआत्मा हि विषयी तथापि विषयविषियिभावेन सम्बन्धप्रातिपादनमशक्यमेवास्ति। ज्ञानजन्यफलाधारत्वं विषयत्वं विषयनिष्ठफलजनकत्वं च विषयित्वमिति चेत् न विकल्पासहत्वात्। तथा हि ज्ञानजन्यफलं ज्ञातता? व्यवहारो वा नाद्यः ज्ञातता हि सन्निकृष्टविषयेऽपूर्वतां जनयति, अतीतादिविषये तदभावेन फलाधारत्वं न स्यात्। फलजननसमयेऽतीतादेरविद्यमानत्वात्। अतस्तज्जनकत्वं ज्ञानस्य न सम्भवति। ततस्तत्राव्याप्तिर्लक्षणस्य स्यात्। फलजननेऽप्यनुगतनियामकायोगात्। अयमर्थः यत्फलं प्रत्याधारत्वं विषयस्योच्यते तत्फलं तत्रैव विज्ञानं जनयति नान्यत्रापि किञ्चिन्नियामकाभावात्।

नापि द्वितीयः तथा हि कोऽयं ज्ञानजन्यव्यवहारः कराकर्षणादिरिति चेन्न तस्य स्पर्शरहिते विभौ चात्मादावसम्भवादव्याप्तिः। कलधौतमलादेरपि नान्तरीयकतया तद्व्यवहारविषयस्य तज्ज्ञानविषयापत्तेः। नापीच्छादिः आत्मन एव तदधारतया तदन्यस्याविषयत्वप्रसङ्गात्। ज्ञानजन्येच्छाविषयत्वामिति चेन्न तस्यैव निरूप्यमाणत्वात्। अथ ज्ञानप्रतिबद्धहानादिज्ञानविषयत्वं तद्योग्यत्वं वा विषयत्वमिति चेन्न ज्ञानगोचरत्वस्यैव निरूप्ययाणत्वात्। अतो दृग्दृश्ययोर्विषय-विषयिभावरूपः सम्बन्धोऽपि न सम्भवति।

इत्थं दृग्दृश्ययोः सम्भाविता यावन्तः सम्बन्धा निराकृताः। द्वैतजन्यत्वात् सम्बन्धस्य आत्मनश्चाद्वैतरूपत्वान्न कश्चित् सम्बन्धो भवितुमर्हति। "यत्र हि **द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत तत्केन कं पश्येत**[२४]" **यत्र नान्यच्छृणोति नान्यद्विजानाति स भूमा**[२५] "**मृत्योः स मृत्युमाप्नोति य इह नानैव पश्यति**[२६]" इति श्रुति वाक्यैः भेदघटितस्य सम्बन्धस्य द्वैतबुद्धिं यावत् स्थितिः। तत्रापि सम्बन्धो न वास्तविकः। आत्मभिन्नस्य निखिलस्य मिथ्याभूतत्वात्। अनात्मभूतस्य देहादेरात्मतादात्म्येन प्रत्ययात् तादात्म्यसम्बन्धोऽस्ति चेन्न तादात्म्यस्याध्यस्तत्वात्। विरुद्धस्वभावयोर्न तादात्म्यं सम्भवति।

असति च तादात्म्ये या तादात्म्यप्रतीतिः सा मिथ्या भवितुमर्हति। अतो युष्मत्प्रत्ययगोचरस्यात्मनस्तद्धर्माणाञ्च यद्युष्यत्प्रत्ययगोचरे दृश्ये तादात्म्यं तन्मिथ्या। उक्तञ्चाध्यासभाष्ये [२७]"**अस्मत्प्रत्ययगोचरे विषयिणि चिदात्मनि युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः तद्विपर्येण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्या भवितुं युक्तम्**। तत्रायमाशयः यदध्यस्तं तन्मिथ्या आत्मा चेदध्यस्तस्तदा सोऽपि मिथ्या भविष्यति। अत एवोच्यतेऽनात्मनः संसर्गतः स्वरूपश्चाध्यासः आत्मनस्तु संसर्गमात्रमध्यास्ते। अध्यस्तस्य मिथ्यात्वे दृश्यस्य स्वरूपं तत्संसर्गश्च मिथ्या। आत्मनोऽनात्मना सह यो हि सम्बन्धः स अध्यासिकः अतो मिथ्येति।

आत्मनः संसर्गस्यानात्मनि समारोपादात्मवृत्तिसत्त्वादिधर्मा अनात्मनि भासन्ते। अनात्मरूपस्य दृश्यस्य तत्संसर्गस्य चात्मनि समारोपादन्तःकरणदेहादिधर्मा आत्मनि भासन्ते। तथा चान्तःकरणधर्मतादात्म्येन अहं सुखीतिप्रत्ययः, देहधर्मतादात्म्येन स्थूलोऽहं कृशोऽहमिति प्रत्ययः, देहतादात्म्येनाहं गच्छामि इति प्रत्ययः। इन्द्रियधर्माध्यासेन काणोऽहं बाधिरोऽहमिति प्रत्ययो भवति। अनादिरनन्तोऽध्यासोऽयं तन्मूलको लौकिकव्यवहारोऽनाद्यनन्त।

**शास्त्रसम्मतसंसर्गस्वरूपमत्र बोधितम्।**
**दृग्दृश्ययोर्न सम्बन्धशास्त्रेणैव निषेधनात्।।** इति शम्।

## सन्दर्भ सूची–

१. परमलघुयञ्जूषाशक्तिनिरूपणे ।
२. व्युत्पत्तिवादे प्रथमाकारके ।
३. पा. सू. २-३-५० ।
४. वा.प. ३-६-१५६
५. वा.प. ३-६-१५६
६. पा०सू० ८/३/५९ ।
७. पा०सू० १/१/५९ ।
८. महाभारतम् पा०सू० २/३/५० ।
९. न्यायसिद्धान्तमुक्तावली प्रत्यक्षखण्डे ।
१०. पा.सू. १/२६
११. पातञ्जलभाष्यम् पा.सू. १/२६
१२. परमलघुमञ्जषाशक्तिनिरूपणे ।
१३. न्या.सि.का. ४५
१४. न्या.सि.प्रत्यक्षखण्डे
१५. प्रमाणवार्तिके
१६. अध्यायसभाष्ये
१७. नैष्कर्म्यसिद्धौ प्रथमाध्याये ।
१८. वृहदारण्योपनिषदि ४/२/४ ।
१९. वृहदारण्योपनिषदि ४/३/१५
२०. गीता ३/४२
२१. मु. १/१/७
२२. वृ. ४/४/२०
२३. श्वेता ६/१३ ।
२४. वृहा. ४/५/१५
२५. छा. ७/२४/१
२६. का. २/४/११
२७. अध्यासभास्ये।

# साहित्यशास्त्रे सम्बन्धतत्त्वम्

धारणार्थकाद् दधातेः गत्यर्थकाद् हिनोतेर्वा क्तप्रत्ययस्य योगेन निष्पन्नेन हितेतिशब्देन सहयोगात् सहितेति पदं निष्पद्यते। सहितपदेन भाववचनस्य ष्यञो योगेन निष्पद्यते साहित्यमिति पदम्। 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन' इत्यनेन भावप्रत्ययोऽत्र सम्बन्धवाचकः कृत्परत्वात्। शब्दार्थयोः सम्बन्धः साहित्यमुच्यते इति आलंकारिकाणां सिद्धान्तोक्तिः। भामहस्य काव्यलक्षणे साहित्यपदं शब्दार्थविशेषणीभूते सहितपदप्रयोगे गर्भितं दृश्यते। एवम्- 'शब्दार्थौ सहितौ काव्यम्'। शब्दार्थयोः उभयोरपि सहितत्वेन स्थितयोः काव्यादवाच्यतां स्वीकरोति भामहाचार्यः। दण्डिनः काव्यादर्शे, वामनाचार्यस्य काव्यालङ्कारसूत्रवृत्तौ, उद्भटस्य काव्यालङ्कारसारसङ्ग्रहे नोपलभ्यते शब्दार्थयोः सम्बन्धवाचकं साहित्यमिति पदम्।

कुन्तकमते काव्यात्मत्वेन अभिमतयोः शब्दार्थयोः वैलक्षण्यमेवास्ति साहित्यम् एवम् -

वाच्योऽर्थो वाचकः शब्दः प्रसिद्धमिति यद्यपि।
तथापि काव्यमार्गेऽस्मिन् परमार्थोऽयमेतयोः।।१.८।।
शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि।
अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः।।१.९।।

वक्रोक्तिजीविते कुन्तकाचार्यः साहित्यपदं काव्यैकवृत्तित्वेन स्वीकरोति एवम्-

शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।१.७।।
साहित्यमनयोः शोभाशालितां प्रति काप्यसौ।
अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः।।१.१७।।

"ननु तथाविधं साम्यं द्वयोरुपहतयोरपि संभवतीत्याह- शोभाशालितां प्रति। शोभा सौन्दर्यमुच्यते। तया शालते श्लाघते यः स शोभाशाली, तस्य भावः शोभाशालिता, तां प्रति सौन्दर्यश्लाघितां प्रतीत्यर्थः। सैव च

सहृदयाह्लादकारिता। तस्यां स्पर्धित्वेन यासाववस्थितिः परस्परसाम्यसुभगमवस्थानं सः साहित्यमुच्यते। तत्र वाचकस्य वाचकान्तरेण वाच्यस्य वाच्यान्तरेण साहित्यमभिप्रेतम्। वाक्ये काव्यलक्षणस्य परिसमाप्तित्वादिति प्रतिपादितमेव (१.७ कारिकायाम्)।

ननु च वाचकस्य वाच्यान्तरेण वाच्यस्य वाचकान्तरेण कथं न साहित्यमिति चेतन्न, क्रमव्युत्क्रमे प्रयोजनाभावादसमन्वयाच्च। तस्मादेतयोः शब्दार्थयोर्यथास्वं अस्यां स्वसम्पत्सामग्रीसमुदायः सहृदयाह्लादकारी परस्परसार्धया परिस्फुरति, सा काचिदेव विन्यासम्पत् साहित्यव्यपदेशभाग् भवति।" (वक्रोक्तिजीवितम् १.१७ वृत्तिः)।

शब्दार्थयोः सम्बन्धविशेषमवलम्ब्यैव साहित्यं लभते काव्यात्मकतामिति उद्घोषयन्ति भोजराजादयः परवर्तिनः आलङ्कारिकाः। भोजराजः साहित्यस्य द्वादशसम्बन्धात्मकतां प्रतिष्ठापयति एवं शृङ्गारप्रकाशे-

'तत् (काव्यं) पुनः शब्दार्थयोः साहित्यमामनन्ति।
तद् यथा 'शब्दार्थौ सहितौ काव्यम्' इति।
कः शब्दः? येनोच्चारितेनार्थः प्रतीयते।०००।
कोऽर्थः? यः शब्देन प्रत्याय्यते।०००।
किं साहित्यम्? यः शब्दार्थयोः सम्बन्धः।

स च द्वादशधा - (१) अभिधा, (२) विवक्षा, (३) तात्पर्यम्, (४) प्रविभागः, (५) व्यपेक्षा, (६) सामर्थ्यम्, (७) अन्वयः, (८) एकार्थीभावः, (९) दोषहानम्, (१०) गुणोपादानम्, (११) अलङ्कारयोगः, (१२) रसावियोगश्च। (शृङ्गारप्रकाशः १.१२ उदा० वृत्तिः पृ. ३)

शृङ्गारप्रकाशस्य सप्तम-अष्टम-दशम-नवम-प्रकाशेषु च आचार्योऽसौ एतेषां पुनरपि उल्लेखं करोति एवम्-

'अभिधाविवक्षातात्पर्यप्रविभागव्यपेक्षासामर्थ्यान्वयैकार्थीभावदोषहानगुणोपादाना-लङ्काररसावियोगरूपाः शब्दार्थयोर्द्वादशसम्बन्धाः साहित्यमुच्यते।' (शृङ्गारप्रकाशः, सप्तमः प्रकाशः पृ. ३५५)

साहित्यस्य द्वादशसंख्यकानां सम्बन्धानामेतेषां सप्तमप्रकाशतः एकादशप्रकाशपर्यन्तं सन्ति भोजराजेन लक्षणानि निरूपितानि एवम् -

(१) अभिधा- शब्दस्यार्थाभिधायिनी शक्तिरभिधा। शब्देष्वर्थदानाभिप्रायो विवक्षा।

(२) विवक्षा- शब्देष्वर्थेऽभिधानदानाभिप्रायो विवक्षा। विवक्षातः कारकाणि भवन्ति 'अक्षान् दीव्यति, अक्षैर्दीव्यत' इति।

(३) तात्पर्यम्- 'यत्परः शब्दः स शब्दार्थ' इति तात्पर्यम्। तच्च वाक्य एवोपपद्यते, पादत्रयेणाभिप्रायस्य प्रकाशयितुमशक्यत्वात्।

(४) प्रविभागः- पदे वाक्ये प्रबन्धे वास्यैतावतः शब्दस्यायमर्थोऽस्मिन्नर्थे चायमेतावच्छब्द इति शब्दार्थयोर्मिथः सम्बन्धितया पृथक्त्वेनाऽवधारणं प्रविभागः। स त्रिविधोऽन्वयव्यतिरेकाभ्याम्। तत्रावस्थितस्यानुवृत्तिः अन्वयः। तद्विपर्ययो व्यतिरेकः। सः द्विविधो जन्महानिभ्याम्। (पृ. ३९०)

(५) व्यपेक्षा- उद्भूतसम्बन्धव्यतिरेकाणां पदार्थानामितरेतरं प्रत्याकाङ्क्षा व्यपेक्षा देवा वर्षतीत्यादौ सन्निहितस्य, प्रविश पिण्डीं गृहं भक्षयेत्यादौ च व्यवहितस्य सा। सेयं व्यपेक्षा संक्षेपतः पदार्थानां त्रेधा भवति आभिधानिकी, नैयायिकी नैषेधिकी च। (पृ. ३९७)

(६) सामर्थ्यम्- व्यपेक्षावतां पदार्थानां मिथःसम्बन्धिरूपता सामर्थ्यम्। तत् त्रेधा भेदः, संसर्गः, उभयं च (पृ. ४१०)।

(७) अन्वयः- व्यपेक्षादिभिरेकार्थपरतयोपात्तानां पदार्थानां मिथोऽभिग्रथनमन्वयः। स त्रिधा- शाक्तः, वैभक्तः, शक्तिविभक्तिमयश्च। तेषु कर्मादिशक्तिभिर्निर्वृतः शाक्तः, सम्बन्धादिभिविभक्तिविर्वैभक्त। उभाभ्यां पुनः शक्तिविभक्तिमयः। (पृ.४१५)

(८) एकार्थीभावः- व्यपेक्षावतां समर्थानामन्वितार्थानां च पदार्थानां तिलतण्डुलवत्, नीरक्षीरवत्, पांसूदकवच्च यदविभागरूपेण भवनं स एकार्थीभावः। लक्षणे चैतत् समस्तं व्यस्तं च । तेन सापेक्षासमर्थसमासादीनां उपसंग्रहः। (पृ. ४३८)

अष्टौ साहित्यनियामकानि तत्त्वानि विस्तरेण निरूप्य नवमप्रकाशे भोजराजः निष्पन्नस्यास्य साहित्यस्य काव्यात्मरूपतायाः नियामकानि अवशिष्टानि चत्वारि अन्यतमानि तत्त्वानि निरूपयति एवम्-

"तत्र अभिधाविवक्षादिभिर्निरूपिते शब्दार्थयोः साहित्ये वाक्यस्य प्रयोगयोग्यता प्रयोगानर्हता च निश्चीयते। यदाह- 'एकः शब्दः सम्यक्प्रयुक्तः स्वर्गे लोके कामधुग्भवति' (म.मा. ६.१.८४) दुष्प्रयुक्तः पुनरधर्माय सम्पद्यते। सम्यक्प्रयोगश्चास्य तदापद्यते यदा दोषहानं, गुणोपादानम्, अलङ्कारयोगो रसावियोगश्च भवति। तेषां च प्रथमं दोषहानमेव विधेयम्। यतः कमनीयरूपादिसम्पदुपेतमपि वपुः कुष्ठबिन्दुनैकेन दौर्भाग्यमनुभवति। उक्तं च- (काव्या. १.७)

तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथंचन।
स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्।।९.१।।

किं च- (भामहालंकारे १.१२)-

नाकवित्वमनर्थाय मृतये दण्डनाय वा।
कुकवित्वं पुनस्साक्षान्मृतिमाहुर्मनीषिणः।।९.२।।

(९) दोषहानम्- दोषास्त्रिधा पददोषाः, वाक्यदोषाः वाक्यार्थदोषाश्च।

(१०) गुणोपादानम्- निर्दोषरूपं च काव्यस्य शरीरवस्तुनः (शरीरस्येव) कामनीयकोपपत्तावयमुपायो यद्गुणोपादानमलङ्कारयोगश्च। (पृ. ४९७) गुणाश्च त्रिविधा भवन्ति- बाह्याः, आन्तरा, वैशेषिकाश्च। तत्र अन्वयावयवयो-रूपलावण्यादयो बाह्याः। शीलवैदग्ध्यमहाभाग्यसौभाग्यादयश्चान्तराः। ये तु दोषा अप्याश्रयविशेषावस्थाविशेषाद्युपाधेर्गुणत्वमाश्रयन्ते ते वैशेषिकाः। काव्यशरीरेऽपि त्रे त्रिधैवा तत्र-

बाह्याः शब्दगुणाः ते ह्यन्वयादिवंद् बाह्यत्वेनावभासन्ते। आन्तरा अर्थगुणाः तैः सौशील्यादिवद्विमर्शेन ज्ञायन्ते। वैशेषिका दोषगुणास्ते हि पात्रविशेषाद्युपाधेः दोषा अपि गुणत्वेन विख्यायन्त इति। (पृ. ४९८)

(११) अलंकारयोगः- अथ अपास्तदोषस्य उपात्तगुणस्य च काव्यशरीरस्य चारुत्वोत्कर्षसिद्धये प्राप्तकालः अलंकारयोगः उच्यते। अलङ्काराश्च त्रिधा बाह्याः, आभ्यन्तराः बाह्याभ्यन्तराश्च। तेषु- बाह्या वस्त्रमाल्याभूषणादयः। आन्तरा-दन्तपरिकर्मनखच्छेदालककल्पनादयः। बाह्याभ्यन्तराः-स्नानधूपविलेपनाञ्जन-मुखवासताम्बूलोपयोगादयः शरीरे। काव्यशरीरेऽपि वस्त्रमाल्यभूषणादिस्थानीया जात्यादयः शब्दालङ्काराः दन्तपरिकर्मादिस्थानीयाः स्वभावाख्यानादयः अर्थालङ्काराः। स्नानधूपविलेपनादिस्थानीया उपमादयः उभयालङ्काराः बाह्याभ्यन्तरोभयालङ्कार-व्यपदेशं लभन्ते (पृ. ५३९)।

(१२) रसावियोगः- निर्दोषस्य गुणवतोऽलङ्कृतस्य च काव्यशरीरस्य कामनीशरीरस्येव शोभातिशयनिष्पत्तौ रसावियोग एव प्रकृष्ट उपायो गीयते। रसं त्विह प्रेमाणमेवामनन्ति सर्वेषामपि हि रत्यादिप्रकर्षाणां रतिप्रियो रणप्रियो अमर्षप्रियः परिहासप्रिय इति प्रेमण्येव प्रतिक्रिया (पृ. ६१३)। मनोऽनुकूलेषु हि सुखादिषु आत्मनः सुखानुभवाभिमानो रसः (पृ. ६१५)।

भावप्रकाशनकारः साहित्यतत्त्वविषये भोजराजसम्मतानि शब्दार्थसम्बन्ध-निष्पादकानि द्वादशतत्त्वानि संकेतयति एवम्-

सम्बन्धो रसकाव्यादेस्तद्वाक्यार्थतया भवेत्।
काव्यं सामाजिकोद्देशप्रवृत्तमिति यत्ततः।।
वृत्तिर्विवक्षातात्पर्यप्रविभागाविहोदितौ।
ततो व्यपेक्षा सामर्थ्यान्वयश्चैकार्थभावना।।
दोषहानं गुणादानं तथाऽलङ्कारयोगिता।
रसावियोग इत्येते सम्बन्धाः कथिता बुधैः।।

(भावप्रकाशनम् ६.९१ पृ.२०५-२०६)

साहित्यनियामकानां सर्वेषामेतेषां सम्बन्धानां विस्तरेण व्याख्यानं पृथग्तया उपलभ्यते भावप्रकाशनस्य षष्ठाधिकरणे।

साहित्यमीमांसाकारः साहित्यतत्त्वस्य व्याख्यानप्रसंगे अष्टसम्बन्धात्मकतावादं स्वीकरोत्येवम्-

साहित्यं सपरिष्कारं कविना परिकल्पितम्।
भावयन् रसिको लोके सुखमत्यन्तमश्नुते।।१.२।।
वृत्त्यादीनां समष्टिः स्यात् साहित्यं, तत्परिष्कृतिः।
शब्दार्थयोः परिष्कारः कविस्तस्य प्रसाधकः।।१.३।।
अष्टौ वृत्त्यादयस्तत्र परिष्कारश्चतुर्विधः।१.४।
वृत्तिर्विवक्षा तात्पर्यं प्रविभागो व्यपेक्षणम्।।१.५।।
सामर्थ्यमन्वयैकार्थ्ये अष्टौ वृत्त्यादयः स्मृताः।
दोषत्यागो गुणाधानमलङ्कारो रसान्वयः।।१.६।।
इत्थं चतुर्विधा क्लृप्ता साहित्यस्य परिष्कृतिः।।१.७।।

(१) वृत्तिः (अभिधा) पदानां व्यापारः पदार्थप्रतिपादने।२.९।
(२) विवक्षा वक्तुमिच्छा स्यात् समसंक्षिप्तविस्तृतैः, शब्दैरर्थस्य।२.१७।
(३) वर्तते यत्परः शब्दः स शब्दार्थ इति स्थितिः।२.२१।
(४) एतावतोऽर्थभागस्य स्यादियान् शब्द इत्ययम्, प्रविभागः।२.२२।
अन्वयव्यतिरेकाभ्यां शक्तिनिष्कर्ष एव सः।२.२३।
(५) परस्परं पदार्थानामाकाङ्क्षा स्याद् व्यपेक्षणम्।२.२४।
(६) सामर्थ्यं च पदार्थानां भवेत् सम्बन्धिरूपता।२.२५।
(७) परस्परस्य ग्रथनं पदार्थानामिहान्वयः।२.२७।
(८) ततश्चैकत्वसम्पत्तिरेकार्थीभावनं विदुः।२.२८।

एषां समष्टिरष्टानां साहित्यमिति निर्णयः।
सम्बन्धो वा सरूपेण तद्धेतुः शक्तिरेव वा।।२.२३।।

एवं समष्टिरूपस्य साहित्यस्य कथं परिष्कारः इत्यपेक्षयामाह -

साहित्यस्य परिष्कारः पारम्पर्येण सिद्ध्यति।।२.३४।।
प्रयोगे दुष्यते येन स दोषः परिकीर्त्तितः।
शास्त्रे लोके च समये निषेधात् त्याज्य एव सः।।३.५१।।
गुणाः श्लेषप्रसादाद्या य काव्ये समवायिनः।
बाह्यान् शब्दगुणान् प्राहुरानन्तरानर्थसंश्रयान्।।४.६२।।
काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।५.९६।
कान्तया गुणशालिन्या सर्वालङ्कारयुक्तया।
किं फलं कामयानस्य यदि न स्याद् गुणावहा।।६.१४२।।
स भावो रसनीयत्वं यत्प्रकर्षः प्रपद्यते।६.१४५।

साहित्यतत्त्वनियामकेषु द्वादशसम्बन्धेषु अष्टौ साहित्यनिष्पादकत्वेन सर्वैरपि स्वीक्रियन्ते। अवशिष्टाः दोषहानादयश्चत्वारः सम्बन्धाः तत्र काव्यपदवाच्यतामादधानाः निष्पन्नस्य साहित्यस्य परिष्कर्तारः सर्वैरपि आलंकारिकैः स्वीक्रियन्ते।

## काव्यालङ्कारेषु सम्बन्धतत्त्वम् -

शब्दार्थयोः सम्बन्धरूपिणि साहित्यशास्त्रे चमत्कारोत्पादकानाम् अलंकृतिपदवाच्यानां तत्त्वानां प्राधान्यं वरीवर्ति।

अलङ्करोतीति, अलंकृतिरिति, अलङ्क्रियतेऽनेनेति अलं भावो इति चोपलभ्यन्ते काव्यात्मभूतस्य अलङ्कारतत्त्वस्य कृत्करणभावमूलकाः व्युत्पत्तयः। अलमिति पर्याप्ततापरपर्यायो भूषणतामपि अभिव्यनक्ति काव्यमार्गे। पर्यायपरिवृत्यसहत्वं शब्दालङ्कारत्वं, पर्यायपरिवृत्तिसहत्त्वञ्चार्थालङ्कारत्वमिति शब्दालङ्कारार्थालङ्कारयोः भेदः। शब्दार्थात्मनि काव्ये अर्थालङ्काराः उपमानोपमेययोः सौन्दर्यसाधकं सम्बन्धविशेषमाश्रित्य प्रवर्तन्ते।

सादृश्यमूलकेषु उपमादिषु अर्थालङ्कारेषु उपमानोपमेययोर्मध्ये सम्बन्धभेदः समुपपद्यते यदाश्रित्य आचार्या अलङ्कारलक्षणं निर्धारयन्ति।

उपमानप्रतियोगिकः उपमेयानुयोगिकः सम्बन्धः सादृश्यमुच्यते। समानधर्मप्रतियोगिकः उपमानोपमेयोभयानुयोगिकः सम्बन्धः साधर्म्यमुच्यते। सादृश्यस्य प्रतियोग्युपमानम् अनुयोग्युपमेयम्। साधर्म्ये पुनः उपमानोपमेयौ

द्वावप्यनुयोगिनौ। साधर्म्यप्रयोजकं सादृश्यमुपजनयति चमत्कारं काव्यवर्त्मनि। गुणक्रिययोः साम्यात् साधर्म्यं वस्तुधर्म तद्बलेन सादृश्यञ्चोपजन्यते द्रष्टरि। उपमामूलकेषु सर्वेष्वप्यलङ्कारेषु उपमानोपमेययोः एतादृशः सम्बन्धः अलङ्कारनियामकः उपलभ्यते। सादृश्यसम्बन्धस्यास्य स्वरूपमवलम्ब्य सादृश्यमूलकानामलङ्काराणां लक्षणानि निर्धारयन्ति आचार्याः एतेन च वैविध्यं जन्यते अलङ्कारेषु। अत एव सादृश्यप्रयोजकसाधारणसम्बन्धः उपमेति निश्चीयते।

प्रायेण सर्वालंकारनियामकस्य सादृश्यमूलकस्य उपमेयोपमाननिष्ठस्य सम्बन्धस्य वैलक्षण्यमुपवर्ण्यते अलंकारसर्वस्वस्य श्रीविद्याचक्रवर्तिनः संजीविनीटीकायाम्। तद्यथा-

'मुखं चन्द्रमनुस्मरामीति स्मरणम्। मुखमेव चन्द्र इति रूपकम्। मुखचन्द्रेण तापः परिशाम्यतीति परिणामः। किं चन्द्र आहोस्वित् पद्ममिति सन्देहः। चन्द्र इति चकोरा नन्दन्तीति भ्रान्तिमान्। चन्द्र एव न मुखमित्यपह्नुतिः। नूनं चन्द्र इत्युत्प्रेक्षा। चन्द्रं पश्येत्यतिशयोक्तिः। अस्यां प्रावृषि मुखं चन्द्रबिम्बं च विच्छायमित्येका तुल्ययोगिता। शरदि रम्यमिति त्वन्या। इदं च तच्च रम्यमिति दीपकम्। मुखमेव रम्यं चन्द्र एव हृद्य इति प्रतिवस्तूपमा। भुवि मुखं दिवि चन्द्र इति दृष्टान्तः। मुखदूषणं चन्द्रमसो मलिनीकरणमिति निदर्शना। चन्द्रादधिकं मुखं मुखादधिकश्चन्द्र इति च व्यतिरेकः। चन्द्रेण सह मुखमिति सहोक्तिः। न मुखेन विना चन्द्रः समीचीन इति विनोक्तिः। कलाभिरामं पूर्णं मुखमिति समासोक्तिः। कलाभिरामौ मुखचन्द्राविति श्लेषः। नमस्ते चन्द्र प्रसन्नोसीत्यप्रस्तुतप्रशंसा। मुखे रोषो न दोषः, न हीन्दोर्निन्दायै कलङ्करेखेति अर्थान्तरन्यासः। इत्थं स्वप्रकारवैचित्र्येण सादृश्यविच्छित्तिविशेषात्मना यतो नानालङ्कारनिदानभूता अतोऽर्थालङ्कारेषु प्रथमं निर्दिष्टेति यावत्।' (अलंकारसर्वस्वम् पृ० ४१)

चित्रमीमांसायामपि अप्पयदीक्षितः सादृश्यमूलकोपमेयोपमानसम्बन्धाश्रितम् अलङ्काराणाम् वैलक्ष्यण्यमेवमुस्थापयति-

'चन्द्र इव मुखं मुखमिव चन्द्र इत्युपमेयोपमा। मुखं मुखमिव इत्यनन्वयः। मुखमिव चन्द्र इति प्रतीपम्। चन्द्रं दृष्ट्वा मुखं स्मरामि इति स्मरणम्। मुखमेव चन्द्रः इति रूपकम्। मुखचन्द्रेण तापः शाम्यति इति परिणामः। किमिदं मुखमुताहो चन्द्रः इति सन्देहः। चन्द्र इति चकोरास्त्वन्मुखमनुधावन्ति इति भ्रान्तिमान्। चन्द्र इति चकोराः कमलमिति चंचरीकास्त्वमुखे रज्यन्ति इत्युल्लेखः। चन्द्रोदयं न मुखम् इत्यपह्नवः। नूनं चन्द्र इत्युत्प्रेक्षा। चन्द्रोदयम् इत्यतिशयोक्तिः। मुखेन

चन्द्रकमले निर्जिते इति तुल्ययोगिता। निशि चन्द्रस्त्वन्मुखं च हृष्यति इति दीपकम्। त्वन्मुख एवाहं रज्यामि चन्द्र इव चकोरो रज्यते इति प्रतिवस्तूपमा। दिवि चन्द्रो भुवि त्वन्मुखम् इति दृष्टान्तः। मुखं चन्द्रश्रियं बिभर्ति इति निदर्शना। निष्कलङ्कं मुखं चन्द्रादतिरिच्यते इति व्यतिरेकः। त्वन्मुखेन समं चन्दो निशासु हृष्यति इति सहोक्तिः। मुखं नेत्रांकरुचिरं स्मितज्योत्स्नोपशोभितम् इति समासोक्तिः। अब्जेन सदृशं वक्त्रं हरिणाहितसक्तिना इति श्लेषः। मुखस्य पुरतश्चन्द्रो निष्प्रभ इत्यप्रस्तुतप्रशंसा। एवमुक्तानेकालंकारविवर्तवतीयमुपमा।

तदिदं चित्रं विश्वं ब्रह्मज्ञानादिवोपमाज्ञानात् ।
ज्ञातं भवतीत्यादौ निरूप्यते निखिलभेदसहिता सा ।।'

(चित्रमीमांसा पृ० ३५)

सादृश्यमूलकाः एकोनत्रिंशदलङ्कारा: अलङ्कारसर्वस्वे रुय्यकसम्मताः। विभिनक्त्येतानाचार्योऽसौ चतुर्षु वर्गेषु तन्निष्ठोपमेयोपमानमध्ये सादृश्य-सम्बन्धवैलक्षण्यमवलम्ब्य एवम्-

१. भेदाभेदप्रधानसम्बन्धमूलकः,
२. आरोपमूलकाभेदप्रधानसम्बन्धकः,
३. अध्यवसायमूलकाभेदप्रधानसम्बन्धकः
४. गम्यमानौपम्यमूलकसम्बन्धकश्च ।

तद्यथा- साधर्म्ये त्रयः प्रकाराः- भेदप्राधान्यं व्यतिरेकादिवत् 'अभेदप्राधान्यं रूपकादिवत्' द्वयोस्तुल्यत्वं यथास्याम्। यदाहुः- 'यत्र किञ्चित्सामान्यं कश्चिच्च विशेषः स विषयः सादृशतायाः' इति। उपमैवानेकप्रकारवैचित्र्येणानेकालंकारबीज-भूतेति प्रथमं निर्दिष्टा। अस्याश्च पूर्णालुप्तात्वभेदाच्चिरन्तनैर्बहुविधत्वमुक्तम्। तत्रापि साधारणधर्मस्य क्वचिदनुगामितयैकरूप्येण निर्देशः। क्वचिद्वस्तुप्रतिवस्तु-भावेन पृथङ्निर्देशः। पृथङ्निर्देशे च सम्बन्धिभेदमात्रं प्रतिवस्तूपमावत्। बिम्बप्रतिबिम्बभावो वा दृष्टान्तवत् (पृष्ठ ८० अलंकारसर्वस्वम्)।

सादृश्यमूलकेषु प्राधान्यं बिभर्ति उपमालङ्कारः। तद्यथा- तेषु उपमेयोपमान्वयप्रतीपस्मरणरूपकसंदेहभ्रान्तिमदपह्नुत्युत्प्रेक्षातिशयोक्तितुल्य-योगितादीपक-प्रतिवस्तूपमादृष्टान्तनिदर्शनाव्यतिरेकसहोक्तिसमासोक्त्याद्यनेका-लंकारमूलभूतत्वात्सौकुमार्याद्यतिशयाच्च प्रधानमुपमां लक्षयति साधर्म्यमिति। (वामनझलकीकरः पृ. ५४०)

## १.भेदाभेदप्रधानसम्बन्धमूलकः-

**उपमालङ्कारः-**

नाट्यशास्त्रादारभ्य पण्डितराजं यावद् उपमानोपमेययोः समानधर्मेण जायमानं सम्बन्धविशेषमाश्रित्य आचार्याः उपमालङ्कारस्य लक्षणं निर्धारयन्ति। तद्यथा-

यत्किञ्चित् काव्यबन्धेषु सादृश्येनोपमीयते।
उपमा नाम सा ज्ञेया गुणाकृतिसमाश्रया।।
एकस्यैकेन सा कार्या ह्यनेकेनाऽथवा पुनः।
अनेकस्य तथैकेन बहूनां बहुभिस्तथा।।

(नाट्यशास्त्रम् ६.४१-४२)

उपमानोपमेयस्य गुणलेशतः साम्यमुपमा।

(काव्यालंकारसूत्राणि ४.२.१)

साधर्म्यमुपमा भेदे। उपमानोपमेययोः न तु कार्यकारणादिकयोः समानेन धर्मेण सम्बन्धः साधर्म्यमम् । (काव्यप्रकाशः१०.१)।

उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्वे उपमा

(अलङ्कारसर्वस्वम् सूत्रम् २)

यथाकथञ्चित् सादृश्यकथनं सोपमा स्मृता।
सर्वात्मनैव सादृश्यं नास्ति भावस्य कस्यचित् ।।

(५.११८ साहित्यमीमांसा)

सादृश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमालङ्कृतिः

(द्वितीयाननम्, रसगंगाधरः पृ. २०४)

सर्वत्रात्र साधर्म्यप्रयोजकं सादृश्यं उपमायाः मूलं प्रतिपद्यते। तच्च उपमेयोमानभूतयोः पदार्थयोर्मध्ये भेदाभेदमूलकं गुणक्रिययोः साम्यात् सम्बन्धविशेषवाचकं च। तद्यथा-

साधारणधर्मवत्वं साधर्म्यम्। साधारणधर्मवत्वं च साधारणसम्बन्ध एव मतुब्रूपतद्धितप्रत्ययोत्तरवर्तिभावप्रत्ययस्य सम्बन्धबोधकत्वात्। अतः सादृश्यप्रयोजकसाधारणधर्मसम्बन्धः उपमेति सिद्धम्

'उपमानोपमेययोः न पुनः कार्यकारणादिकयोः समानेन धर्मेण सम्बन्धः उपमा' इति यदुच्यते' तत्र साधर्म्यं हि सम्बन्धविशेषः। सम्बन्धश्चैकप्रतियोगिकोऽपरानुयोगिक एव नियतः। यथा 'राज्ञः पुरुषः' इत्यत्र राजपुरुषयोः स्वस्वामिभावसम्बन्धे राजा प्रतियोगी पुरुषश्चानुयोगी । उपमायाः प्रसङ्गे साधर्म्यस्य

सम्बन्धस्य कौ प्रतियोग्यनुयोगिनौ इति प्रश्ने उच्यते आचार्यैः यद् उपमानो-पमेयनिष्ठः साधारणधर्मः प्रतियोगी उपमानोपमेये चेति द्वावप्यनुयोगिनाविति-

साधर्म्यस्य उपमानोपमेयं द्वावप्यनुयोगिनौ।
सादृश्यस्य प्रतियोग्युपमानम् अनुयोग्युपमेयम्।

अत एव साधारणधर्मप्रतियोगिकः उपमानोपमेयोभयानुयोगिकः सम्बन्धः साधर्म्यमुच्यते यश्च उपमानप्रतियोगिकः उपमेयानुयोगिकः सम्बन्धः सः सादृश्यमित्युच्यते।

पूर्णोपमास्थले उपमानम्, उपमेयं, साधारणो धर्मः साधर्म्यं चेति चतुष्टयमपेक्ष्यते। साधारणधर्मवत्त्वेन प्रसिद्धः पदार्थः उपमानं, तद्धर्मवत्तया वर्णनीयः पदार्थः उपमेयम् इति उच्यते। केचित् पुनः अधिकगुणवत्तया संभाव्यमानमुपमानं निकृष्टगुणवत्तया संभाव्यमानमुपमेयमिति प्रतिपादयन्ति। सादृश्यप्रतियोग्युपमानं सादृश्यानुयोग्युपमेयमित्यन्ये। उपमानोपमेययोः संगतेन साधारणधर्मेण सम्बन्धात् जायमानं सादृश्यमुपमेत्युच्यते। 'कमलमिव मुखं मनोरमम्' इत्यत्र मनोज्ञत्वधर्मसम्बन्धात्तद्वत्तया प्रसिद्धेन कमलेन सह मुखमुपमीयते। अत्र मनोज्ञत्वम् उपमानोपमेयोभयनिष्ठसाधारणधर्मः, कमलमुपमानम्। मुखमुपमेयमित्युपमा-लंकारसिद्धिः।

उपमालङ्कारस्य पूर्णोपमा लुप्तोपमा चेति प्राधान्येन भेदद्वयमामनन्ति आचार्याः। पूर्णोपमास्थले उपमानम्, उपमेयम्, साधारणो धर्मः साधर्म्यं चेति चतुष्टयमेपक्ष्यते वाच्यत्वेन। साधारणधर्मवत्त्वेन प्रसिद्धः पदार्थः उपमानमुच्यते। उपमानधर्मवत्त्वतया वर्णनीयः पदार्थः उपमेयमुच्यते। अधिकगुणत्तया सम्भाव्यमानम् उपमानं भवति येन सह उपमीयते सादृश्यं नीयते उपमेयस्य। निकृष्टगुणवत्तया संभाव्यमानमुपेयं भवति उपमानेन यस्य सादृश्यं स्थाप्यते।

उपमानोपययोः संगतः धर्मः साधारणधर्मपदवाच्यः। यस्य धर्मस्य साम्याद् येनोपमानेन सह यदुपमेयमुपमीयते सादृश्यं नीयते स साधारणो धर्मः। अत्र सर्वत्र इवादिपदादेरिव यथादिपदादपि साधर्म्याद्यवगतिः। पर्यायपरिवृत्तिसहत्वादस्य अर्थालङ्कारत्वं प्रमाणसिद्धम्।

सर्वेष्वप्यलङ्कारेषु अलङ्कारतानियामकं तन्निष्ठं चमत्कारजनकतावच्छेकं तत्त्वविशेषं भवतीति अलङ्कारिकाः। चमत्कारजनकतावच्छेकत्वेनोपजनितमलङ्कारत्वं प्रकृतरसानुपकारकतया संभवतीति। उपमानादिचतुष्टयं क्वचिद् वाच्यं भवति क्वचिच्च प्रतीयमानमपि। लुप्तोपमायाम् उपमायाः चतुर्ष्वप्यङ्गेषु एकस्य

द्वयोस्त्रमाणामपि लोपे अलङ्कारत्वसिद्धिरविद्यमानस्य प्रतीते प्रतीयमानत्वेनावगमात्। लुप्तोपमायाम् उपमायाः अङ्गानामनुपात्तत्वेऽपि न बाधते उपमासिद्धिः।

उपमानोपमेययोः साधारणधर्मसम्बन्धः क्वचिद्विशेषणतया क्वचिद्विशेष्यतया संघटते। 'चन्द्र इव मुखमाह्लादकम्' इत्यत्र समानविभक्तित्वेनोपात्तयोः उपमानोपमेययोः सम्बन्धः विशेषणतया उपादीयते। बोधश्चात्र आह्लादकोपमान-भूतचन्द्रभिन्नमाह्लादकमुपमेयम् मुखमिति। 'चन्द्र इव मुखमाह्लादयति' इत्यत्र समानविभक्तिकयोः मुखचन्द्रयोः विशेष्यतया उपमानचन्द्रकर्तृकाह्लादभिन्नः उपमेयमुखकर्तृकाह्लाद इति बोधः।

उपमा-उपमेयोपमा-अनन्वय-स्मरणालङ्कारे च उपमानोपमेययोः सम्बन्धः भेदाभेदप्रधान भवतीति अलङ्कारसर्वस्वे रुय्यकः। अत एव चत्वारोप्येते भेदाभेदप्रधानसादृश्यसम्बन्धाश्रिताः चमत्कारकारितामापद्यन्ते। 'चन्द्र इव मुखमाह्लादकम्' इत्यत्र चन्द्रमुखयोस्तत्त्वेन भेदोऽस्ति भिन्नपदार्थकत्वात् तथाप्यत्र साधारणधर्मवत्त्वेन उभयोरपि अभेदान्वययोग्यता अवबुध्यते। अत्र आह्लादकपदमुभयगामी यतो हि यज्जातीयधर्माश्रयश्चन्द्रस्तज्जातीयधर्माश्रयो मुखमपि भवतीति समानधर्मावच्छिन्नः उपमानोपमेययोः सम्बन्धः।

श्रौती आर्थी चेति उपमायाः भेदद्वयं तद्वाचकानां यथेवादीनां पदानाम् उपादानेन साधारणसम्बन्धरुपिणि साधर्म्ये वैलक्षण्यात् सिद्धयति एवम्- 'यथेवादिशब्दानां सादृश्यप्रयोजकसाधारणधर्मसम्बन्धरूपे साधर्म्ये शक्यतया यथेवादि शब्दप्रयोगस्थले साधारणसम्बन्धरूपं साधर्म्यं वाच्यं सादृश्यं त्वार्थम्, तुल्यसदृशादिशब्दानां सादृश्यवति शक्तेस्तुल्यसदृशादिशब्दप्रयोगस्थले सादृश्यं वाच्यं साधारणसम्बन्धरूपं साधर्म्यं त्वार्थमिति सम्बन्धबोधे विशेषादुपपन्न एवं श्रौत्यार्थी चेति विभागः (पृ. ५५३ वामनझलकीकरः)।

अनन्वयालङ्कारः-

अनन्वयालङ्कारः असादृश्यविवक्षामूलकः द्वितीयसदृशव्यवच्छेदकाभावात् सम्बन्धाभावविशिष्टः एवम्-

> उपमानोपमेयत्वे एकस्यैवैकवाक्यगे अनन्वयः। (काव्यप्रकाशः १०.५)
>
> एकस्यैवोपमानोपमेयत्वे अनन्वयः। वाच्याभिप्रायेणात्र पूर्वरूपानुगमः। एकस्य तु विरुद्धार्मसंसर्गो द्वितीयसब्रह्मचारिनिवृत्त्यर्थः। अत एवानन्वय इति योगोऽप्यत्र संभवति। (अलंकारसर्वस्वम् सूत्रम् १२)
>
> एकस्यैवोपमानोपमेयत्वे अनन्वयो मतः। एवकारबलादेकस्यामेवोपमिति-क्रियायामिति गम्यते। (चित्रमीमांसा, पृ. १७६)

द्वितीयसदृशव्यवच्छेदफलकवर्णनविषयीभूतं यदेकोपमानोपमेयकं
साद्दृश्यं तदनन्वयः। (रसगंगाधरः द्वितीयाननम् पृ. ४११)

न विद्यते अन्वयः सम्बन्धोऽर्थादुपमानान्तरेण यत्र सोऽनन्वयालङ्कारः इत्यन्वर्थसंज्ञा। द्वितीयसदृशव्यवच्छेदाय उपमानान्तरव्यवच्छेदाय वा एकस्यैव वस्तुनः (धर्मिणः) एकस्मिन्नेव वाक्ये उपमानोपयोभयरूपेण उपमानिबन्धनमनन्वयः। 'तद्विलासा इव तद्विलासाः' इत्यत्र नायिकायाः विलासाः तद्विलासा इव भान्ति। नायिकायाः विलासानाम् उपमानोपमेयोभयरूपेणोपात्तत्वात् सहृदयानां मनसि चमत्कारातिशयकारकत्वाच्च अनन्वयालङ्कारः ।

## उपमेयोपमालङ्कारः-

इतरोपमानव्यवच्छेदपरस्य सादृश्यसम्बन्धमूलकस्य उपमेयोपमालङ्कारस्य मम्मटसम्मतं लक्षणमस्ति-

विपर्यासः उपमेयोपमा तयोः। (काव्यप्रकाशः १०.५)
उपमानोपमेयत्वं द्वयोः पर्यायतो यदि।
उपमेयोपमा सा स्याद् द्विविधैषा प्रकीर्तिता।। चित्रमीमांसा पृ. १५४।।

द्वयोः पर्यायेण तस्मिन्नुपमेयोपमा। तच्छब्देनोपमानोपमेयत्यवप्रत्वमर्शः। पर्यायो यौगपद्याभावः। अत एवात्र वाक्यभेदः। (अलंकारसर्वस्वम् सूत्रम् १३)

द्वितीयसदृशव्यवच्छेदफलकवर्णनविषयीभूतं यदेकोपमानोपमेयकं
सादृश्यं तदनन्वयः।। (द्वितीयाननम् रसगंगाधरः पृ. २७०)

उपमेयोपमालङ्कारस्तृतीयसदृशव्यवच्छेदमूलकः यत्र काव्यनिबद्धोपमानोपमेययोः परिवृत्तिर्जायते। विपर्यासः वाक्यद्वयात्मकः स्यात् तस्य एकवाक्यात्मकत्वेनाप्रतिपादनात्। उपमेयोपमायाम् उपमानोपमेयत्वेन अवस्थितयोः सम्बन्धः भवति द्वयोः पदार्थयोः यत्र तृतीयतत्सदृशपदार्थाभावप्रतीतिः चमत्कारमादधाति सहृदयचेतसि।

'मुखारविन्दं च परस्परेण समम्' इत्यत्र एकवाक्यात्मकत्वेनोपमेयोपमाया अवस्थितत्वाद् उपमेयोपमायाः लक्षणमेतन्न संघटते इति आचार्याः। एकवाक्यात्मकत्वेनापि उपमेयोपमायाः लक्षणं संघटतेऽत्र यतो हि अरविन्देन समं मुखं, मुखं चारविन्दमित्यर्थतोऽत्र वाक्यभेदोपलब्धिः।

## स्मरणालङ्कारः-

स्मरणालङ्कारोप्यस्ति भेदाभेदप्रधानसादृश्यसम्बन्धाश्रितः। तद्यथा-

यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः स्मरणम्
(काव्यप्रकाशः १०.४६)

सादृश्यानुभवाद्वस्त्वन्त्तरस्मृतिः स्मरणम्। वस्त्वन्तरं सदृशमेव। अविनाभावान्नानुमानम्। (अलंकारसर्वस्वम् सूत्रम् १४)

स्मृतिः सादृश्यमूला या वस्त्वन्तरसमाश्रया।
स्मरणालंकृतिः सा स्यादव्यंग्यत्वविशेषता।। (चित्रमीमांसा पृ. १८९)
सादृश्यज्ञानोद्बुद्धसंस्कारप्रयोज्यं स्मरणं स्मरणालङ्कारः।
(रसगङ्गाधरः, द्वितीयाननम्)

केनचिदाकारेण नियतस्य पदार्थविशेषस्य कालान्तरे तत्समाने वस्तुनि दृष्टे तत्स्मृतिप्रबोधः स्मरणमुच्यते। सादृश्यसम्बन्धमूलकोऽसौ अलङ्कारः। पूर्वदृष्टस्य वस्तुनः तत्सदृशपदार्थदर्शनेन जायमाना स्मृतिः चमत्कारं जनयति। सादृश्यमूलकायाः स्मृतेरेव चमत्कारितया ग्रहणेनात्रालङ्कारत्वं, तदभिन्नाश्रितत्वेन स्मरणस्य नालङ्कारत्वम्।

करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य।
संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम्।।

मातुः शङ्खसदृशे स्तने दृष्टे जन्मान्तरेऽनुभूतस्य पाञ्चजन्यस्य स्मृतिर्जायते भगवतः श्रीकृष्णस्य मनसि। अस्मिन् जन्मनि जन्मान्तरे वाऽनुभूतस्य पदार्थस्य स्मरणमत्र विषयतामापद्यते। जन्मान्तरानुभूतस्य पदार्थस्य स्मरणमत्र विषयीकृतमाचार्येण। उपमानोपमेयनिष्ठसाधर्म्यस्य वाच्यत्वेन प्रतीयमानत्वात् चत्वारोप्येते भेदाभेदप्रधानाः अर्थालङ्काराः वाच्यसाधर्म्याश्रिताः।

## २. आरोपमूलकाभेदप्रधानसम्बन्धकः-

उपमानोपमेययोर्मध्ये आरोपमूलकाभेदप्रधानसम्बन्धाश्रिताः षडलङ्काराः विद्वद्भिः निर्धार्यन्ते। तद्यथा- रूपकम्, परिणामः, ससन्देहः, भ्रान्तिमान्, उल्लेखः अपह्नुतिश्च।

एतेषु सर्वेष्वपि भेदेषु उपमानोपमेयभूतयोः पदार्थयोर्मध्ये यः सम्बन्धः तत्र उभयोरपि अभेदः निश्चीयते अन्यस्मिन्नारोपितत्वात्।

## रूपकालङ्कारः-

रूपकालङ्कारः आरोपमूलकः यत्रारोपस्य पर्यवसानं भवति एकधर्मावच्छेदकेन तादात्म्यनिश्चयेन उपमानोपमेययोः। रूपयति एकतां नयतीति रूपकम्, रूपवत्करोति, रूपयतीति रूपयुक्तं करोतीति वा रूपकपदस्य आचार्यसम्मताः व्युत्पत्तयः। अत्र उपमाभूतस्य पदार्थस्य उपमेयभूतपदार्थे तादात्म्यारोपः अभेदारोपो वा भवतीति आलङ्कारिका एवम्-

स्वविकल्पेन रचितं तुल्यावयवलक्षणम्।
किञ्चित्सादृश्यसंपन्नं यद् रूपं रूपकं तु तत्।। (नाट्यशास्त्रम् ६.५४)
श्रुत्या सम्बन्धविरहाद्यत्पदेन पदान्तरम्।
गुणवृत्तिप्रधानेन युज्यते रूपकं तु तत्।। (काव्यालङ्कारसारः १.११)
उपमैव तिरोभूतभेदा रूपकमिष्यते। (साहित्यमीमांसा ५.१२३)
उपमानोपमेयस्य गुणसाम्यात् तत्त्वारोपो रूपकम्
(काव्यालंकारसूत्राणि ३.१.६)
तद्रूपकमभेदो यः उपमानोपमेययोः। अतिसाम्यात् अनपह्नुतभेदयोरभेदः।
(काव्यप्रकाशः १०.७)
रूपकं तत्समारोपाद् विषये निरपह्नवे। (साहित्यदर्पणः १०)
अभेदप्राधान्ये आरोपे आरोपविषयानपह्नवे रूपकम्। अभेदस्य प्राधान्यद् भेदस्य वस्तुतः सद्भावः। (अलंकारसर्वस्वं सूत्रम् १५)
विम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते।
उपरञ्जकतामेति विषयी रूपकं तदा।। (चित्रमीमांसा पृ. २११)
विषय्यभेद-ताद्रूप्यरञ्जनं विषयस्य यत्।
रूपकं तत् त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः।। (कुवलयानन्दः १६)
उपमेयतावच्छेदकपुरस्कारेणोपमेये शब्दान्निश्चीयमानमुपमानतादात्म्यं रूपकम्। तदेवोपस्कारकत्वविशिष्टमलंकारः। (रसगंगाधरः पृ. २९७)

उपमानोपमेययोः अभेदः अतिसाम्यात् धर्मबाहुल्यात् संभवति। अत्र उभयोरपि वैधर्म्यं स्वातन्त्र्येण अनुभूयते। अत एव प्रकाशितभिन्नस्वरूपयोः उपमानोपमेययोर्मध्ये अतिसाम्याज्जायमानः काल्पनिकोऽभेदारोपसम्बन्धः रूपकमुच्यते। 'मुखं चन्द्रः' इत्यस्मिन् रूपकालङ्कारस्योदाहरणे मुखत्व-चन्द्रत्वरूपपरस्परविरुद्धधर्मवत्तया विद्यमानयोः उपमेयोपमानभूतयोः मुखचन्द्रयोः पदार्थयोर्मध्ये अभेदारोपसम्बन्धः अवबुध्यते यतो हि एकविभक्तिकत्वे सति एकार्थप्रतिपादकत्वेनात्र सामानाधिकरण्यं प्रतिपद्यते।

रूपकालङ्कारे उपमानोपमेययोः सादृश्यमूलकः सम्बन्धः तादात्म्यं भजमानः अलङ्कारत्वं प्रतिपद्यते। यतो हि सादृश्यसम्बन्धमूलकमेव तादात्म्यं रूपकम् आमनन्ति आचार्याः। सादृश्येतरसम्बन्धमूलकयोः कार्यकारणादिकयोः कल्पितस्य ताद्रूप्यस्य रूपकत्वं नाभ्युपेयते।

## ससन्देहालङ्कारः-

ससन्देहालङ्कारोऽपि रूपकमिव उपमानोपमेयभूतयोः पदार्थयोर्मध्ये आरोपमूलकाभेदप्रधानसम्बन्धाश्रितः आचार्यैः परिकल्प्यते। तद्यथा-

उपमानेन तत्त्वं च भेदं च वदतः पुनः।
ससंदेहवचः स्तुत्यै ससंदेह विदुर्बुधाः।। (काव्यालंकारसारः ६.१)
उपमानोपमेयसंशयः संदेहः। (काव्यालंकारसूत्राणि ४.३.११)
विषयस्य संदिह्यमानत्वे संदेहः।। (अलंकारसर्वस्वं सूत्रम् १७)
ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः। (काव्यप्रकाशः १०.६)
साम्यादप्रकृतार्थस्य या धीरनवधारणा।
प्रकृतार्थाश्रया तज्ज्ञैः ससन्देहः स इष्यते।। (चित्रमीमांसा पृ. २५९)
सादृश्यमूला भासमानविरोधका समबला नानाकोट्यवगाहिनी धी
रमणीया ससंदेहालंकृतिः। (रसगंगाधरः पृ. ३४०)

उपमेयस्य उपमानेन सह सादृश्यज्ञानप्रयोज्यं यस्तु संशयात्मकं ज्ञानं स ससंदेहनामालङ्कारः। संदेहेन सह विषयतया तद्विशिष्ट इति ससंदेहः उच्यते। उपमानोपमेयभूतयोः पदार्थयोः सम्बन्धः सादृश्यमूलकत्वे सत्यपि समानकोटिक-संशयात्मकः भवतीत्यत्र वैलक्षण्यम्। उपमानोपमेययोः संशयमूलकं सम्बन्धविशेषमेवाश्रित्य द्वावप्येतौ उत्प्रेक्षाससन्देहालङ्कारौ यद्यपि प्रवर्तेते तथापि भिद्यते संशयात्मकं ज्ञानमत्र उत्प्रेक्षामूलकात् संशयात्। उत्प्रेक्षालङ्कारे उपमानोपमेययोः सम्बन्धः उत्कटोपमानैकोटिको भवति ससंदेहालङ्कारे पुनः पृथग्भूतयोरनयोः सम्बन्धः समानकोटिकसंशयात्मकः भवतीति महान् भेदः।

**'अयं मार्तण्डः किम्'** इत्यत्र प्रतापेन दुर्निरीक्ष्यत्वसाम्यात् राजनि मार्तण्डस्य संशयः समुत्पद्यते। सादृश्यमूलकस्यास्य संदेहस्य निश्चयान्तः निश्चयगर्भ इति भेदद्वयमाचार्याः परिकल्पयन्ति उपमानोपमेययोर्मध्ये सम्बन्धभेदस्य परिणतिमभिलक्ष्य। वामनाचार्यमते- **'उपमानोपमेययोः अतिशयार्थं यः क्रियते संशयः स संदेहः'** इति संशयोऽत्र अतिशयरूपं चमत्कारं जनयति उपमानोपमेयभूतयोः पदार्थयोः मध्ये येन अनयोः सम्बन्धः अलङ्कारतां लभते।

## भ्रान्तिमान् अलङ्कारः-

भ्रान्तिमान् अलङ्कारः उपमानोपमेययोर्मध्ये आरोपमूलकाभेदप्रधान-सम्बन्धाश्रितः वर्तते रूपकादिवत्। सादृश्यमूलकः प्रकृतेऽर्थेऽप्रकृतार्थस्य भ्रमो भ्रान्तिमानुच्यते-

भ्रान्तिमान् अन्यसंवित्तत्तुल्यदर्शने।। (काव्यप्रकाशः १०.४६)
सादृश्यात् वस्त्वन्तरप्रतीतिः भ्रान्तिमान्।। (अलंकारसर्वस्वं सूत्रम् १८)

कविसम्मितसादृश्याद्विषये पिहितात्मनि।
आरोप्यमाणानुभवो यत्र स भ्रान्तिमान् मतः।। (चित्रमीमांसा पृ. २७९)

सदृशे धर्मिणि तादात्म्येन धर्म्यन्तरप्रकारकोऽनाहार्यो निश्चयः सादृश्यप्रयोज्यश्चमत्कारी प्रकृते भ्रान्तिः। सा च पशुपक्षिगता यस्मिन् वाक्यसन्दर्भेऽनूद्यते स भ्रान्तिमान्। (द्वितीयाननं, रसगंगाधरः पृ. ३५३)

उपमानोपमेययोर्मध्ये सादृश्यसम्बन्धमूला अतस्मिन्तद्बोधरूपा भ्रान्तिरेवात्र अलङ्कारतां प्राप्नोति । अप्राकरणिकोपमानतया प्राकरणिकस्योपमेयस्य निर्धारणमत्र क्रियते कविप्रतिभया । लौकिकस्य भ्रमस्यात्र न संग्रहः कविप्रतिभोत्थापिताभावात्। अस्मिन् अलङ्कारे प्रवृत्तिर्जायते संज्ञायाः भ्रमात्मकस्य अप्राकरणिकस्योपमानभूतस्य पदार्थस्य प्राप्तये । तद्यथा -

कपाले मार्जारः पय इति करान् लेढि शशिनः......
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति।।

कपाले पतितान् शशिनः करान् पयोभ्रान्त्या मार्जारः आस्वादयति शुभ्रतया। सादृश्यमूलकात् अयथार्थशशिकरप्रभावशात् सम्मोहितः कश्चन मार्जारः दुग्धप्रपूरितं मत्वा जिह्वया कपालं घर्षयितुं प्रवर्तते। प्रवृत्तिरत्र सन्देहजनिका उपमानोपमेयभूतयोः पदार्थयोर्मध्ये भ्रान्तिमानलङ्कारस्य नियामिका। अत्र भ्रान्तिमूलके च सादृश्यप्रयोजकेन सम्बन्धविशेषेणोपमानोपमेययोः कश्चन प्रवृत्तिमूलकश्चमत्कारः समुत्पद्यते अलङ्कारत्वाधायकः।

## अपह्नुत्यलंकारः-

उपमानोपमेययोः पदार्थयोः आरोपमूलकाभेदप्रधानसम्बन्धाश्रितः अपरः अलङ्कारोऽस्ति अपह्नुतिः । उपमेये तन्निषेधपूर्वकः उपमानस्यारोपोऽत्र विधीयते सादृश्याश्रितः -

अपह्नुतिरभीष्टा च किञ्चिदन्तर्गतोपमा।
भूतार्थापह्नवेनास्या निबन्धः क्रियते बुधैः।। (काव्यालङ्कारसारः ५.७)

प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः।। उपमेयमसत्यं कृत्वा उपमानं सत्यतया यत् स्थाप्यते सा त्वपह्नुतिः ।
(काव्यप्रकाशः १०.१०)

उपमेयतावच्छेदकनिषेधसामानाधिकरण्येनारोप्यमाणमुपमानतादात्म्यमपह्नुतिः। अस्यां चोपमेयतावच्छेदकस्य निषेधादुपमेयतावच्छेदकोपमानतावच्छेदकयोर्विरोधो गम्यते ।
(द्वितीयाननम्, रसगंगाधरः पृ. ३६६)

उपमानेन क्रियमाणः उपमानस्य निषेधः तत्पूर्वकश्चात्रारोपश्चमत्कारकारकः। उपमानोपमेययोः सम्बन्धः अत्र वैलक्षण्यं भजते निषेधमूलकारोपजनकत्वात्। तद्यथा-

स्मितं नैतत्किं तु प्रकृतिरमणीयं विकसितं
मुखं ब्रूते मूढः कुमुदमिदमुद्यत्परिमलम्।
स्तनद्वन्द्वं मिथ्या कनकनिभमेतत्फलयुगं
लता रम्या सेयं भ्रमरकुलनम्या न रमणी।।

अत्र उपमेयभूतां रमणीं निषिध्य उपमानभूतायाः लतायाः आरोपः विधीयते। इयं सावयवा अपह्नुतिः रसगंगाधरकारमते- इयं चानुग्राह्यानुग्राहकभावमापन्ना अवयवसंघातात्मकतया सावयवा-अत्र स्मितादीनां रमणीयगतावयवानाम् अपह्नुत्या अङ्गिभूतायाः रमण्याः अपह्नुतिः समर्थ्यते। अत्र पूर्वमङ्गानां निषेधमूलकारोपसिद्धिः तदनन्तरञ्च अंगिनः निषेधमूलकारोपसिद्धिर्जायते चमत्कारकारिका।

निरवयवाऽपि भवति अपह्नुतिः रसगंगाधरकारमते।

मम्मटमते यत्र शब्दतया उपमेयस्य असत्यत्वमपह्नियते तत्र शाब्दी अपह्नुतिर्भवति यत्र च अर्थतया आक्षिप्यते उपमेयस्य निषेधस्तत्र आर्थी। आर्थी चैषा क्वचित् कपटार्थकशब्दोपादानात्, क्वचित् परिणामार्थशब्दोपादानात् क्वचिच्चान्यथेति निष्पद्यते। उपमानोपमेयभूतयोः पदार्थयोः सम्बन्धः सादृश्यमूलकत्वात् कविप्रतिभोत्थापितत्वाच्च चमत्कारकारितां बिभ्रति।

### ३. अध्यवसायमूलकाभेदप्रधानसम्बन्धकः-

अध्यवसायमूलकाभेदप्रधानेषु अर्थालङ्कारेषु उपमानोपमेयभूतयोः पदार्थयोर्मध्ये सम्भावनैकमूलः सम्बन्धाश्रितः उत्प्रेक्षालङ्कारः अध्यवसायमूलकः अतिशयोक्तिश्च द्वाप्यलङ्कारौ परिगणितौ। उपमानोपमेययोः साधर्म्यस्य व्यङ्ग्यत्वेनात्र प्रतीयमानत्वाद् उभावप्येतौ व्यङ्ग्यसाधर्म्याश्रितावपि।

उत्कटा प्रकृष्टस्योपमानस्य ईक्षा ज्ञानमुत्प्रेक्षापदार्थः। उत्कटोपमानैककोटिकं संभावनामश्रित्य प्रवर्तमानस्यार्थालङ्कारस्य लक्षण एवमस्ति-

अतद्रूपस्यान्यथाध्यवसानमतिशयार्थमुत्प्रेक्षा।
(४.३.९ काव्यालङ्कारसूत्राणि)

सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् (काव्यप्रकाशः १०.६)।

**अन्यथावस्थितं वस्तु यस्यामुत्प्रेक्ष्यतेऽन्यथा।। ५.१२७ ।।**

**उत्प्रेक्षामाद्रियन्ते तां प्रायः सादृश्यगर्भिताम्** (साहित्यमीमांसा ५.१२८)।

**तद्भिन्नत्वेन तदभाववत्त्वेन वा प्रमितस्य पदार्थस्य रमणीयतद्वृत्ति-तत्समानाधिकरणान्यतरतद्धर्मसम्बन्धनिमित्तकं तत्त्वेन तद्वत्त्वेन सा सम्भावनमुत्प्रेक्षा।।** (रसगंगाधरः, द्वितीयाननम्, पृ० ३७४-३७५)

उत्प्रेक्षालङ्कारस्य नियामिका सम्भावना उपमेयोपानयोर्मध्ये साधर्म्यप्रयोजकं सादृश्यमाश्रित्य प्रवर्तमाना संदृश्यते। सम्भावनायामुपमेये उपमानस्य संशयः प्राधान्येन समुत्पद्यते तेन च जन्यते चमत्कारः तत्रालङ्कारत्वाधायकः। उपमानोपमेय-योर्मध्ये जायमानः सम्भावनाश्रितः सम्बन्धविशेषः उत्प्रेक्षालङ्कारस्य प्रवर्तकः। उत्प्रेक्षाबोधकानां 'मन्ये, शङ्के' इत्यादीनां शब्दानां प्रयोगे वाच्या तेषामप्रयोगे गम्योत्प्रेक्षेति द्विविधैषा उत्प्रेक्षा। कविप्रतिभोत्थार्पितायाः साधारणधर्ममूलायाः संभावनायाः चमत्कारजनकतया अलङ्कारत्वसिद्धिरुत्प्रेक्षायाम्।

अत्र उत्कटोपमानैककोटिकसंशयाश्रितरूपायाः संभावनायाः प्राधान्यम् अत एवात्र उपमानोपमेययोर्मध्ये निष्पन्नः गुणक्रियादिसाधर्म्यमूलकः सम्बन्धः सम्भावनाश्रितत्वात् वैलक्षण्यं भजते।

**'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः'** इत्यत्र लिम्पतीति पदेन उपमेयभूतं व्यापनमुपस्थितं वर्षतीति पदेनापि उपमेयभूतमधःप्रसरणमुपस्थितम्। अतः तमःकर्तृकव्यापनं सकलवस्तुनिमीलिनीकरणत्वादिनिमित्तेन लेपनरूपेण सम्भावितं नभःकर्तृकाञ्जनकर्मकाधःप्रसारणं सकलवस्तुनिमीलनकरणत्वात् वर्षणरूपतया सम्भावितमित्युभयत्र क्रियास्वरूपोत्प्रेक्षा । अत्र तमःकर्तृकं कर्म व्यापनं स्वतःसंभविं लोकप्रसिद्धत्वान् नभःकर्तृकाञ्जनकर्मकाधःप्रसरणं तु कविकल्पितमिति उद्योतसुधासागरयोः मतम्।

**'लिम्पतीव तमोऽङ्गानि'** इत्यत्र अचेतनस्य तमसः व्यापनरूपो विषयः लेपनत्वेन संभाव्यत एव **'वर्षतीवाञ्जनं नभः'** इत्यत्र निरालोकप्रवृत्तस्तमसः संपातो नभःकर्तृकाञ्जनवर्षणत्वेन।

वामनाचार्येण उच्यते काव्यालङ्कारसूत्रवृत्तौ एवम् - **'अतद्रूपस्यातत्त्वभावस्य अन्यथा तत्स्वभावतयाऽध्यवसायः, न पुनरध्यारोपो लक्षणा वा। सादृश्यादिय-मुत्प्रेक्षेति'** (४.३.९)। उपमानस्वभावतयाध्यवसानम् उपमेयस्य उत्कटोपमानैक-संशयमूलकः। सादृश्यसम्बन्धाश्रितोऽसौ कविप्रतिभाञ्चितत्वात् चमत्कारं जनयति तेन च अलङ्कारत्वमापद्यते।

## अतिशयोक्त्यलंकारः–

आरोपमूलकाभेदप्रधानेषु अलङ्कारेषु अध्यवसायमूला अतिशयोक्तिरपि गण्यते। उपमानेनात्र उपमेयस्य अध्यवसायः आहार्याभेदनिश्चयः क्रियते पृथगनिर्दिश्यः।

निमित्ततो यत्तु वचो लोकातिक्रान्तगोचरम्।
गम्यन्तेऽतिशयोक्तिं तामलंकारतया बुधाः।।

(काव्यालङ्कारसारः २.१२)

निगीर्याध्यवसानं तु प्रकृतस्य परेण यत्।
प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम्।।
कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः।
विज्ञेयातिशयोक्तिः।। (काव्यप्रकाशः १०.१५)

उपमानेनान्तनिगीर्णस्योपमेयस्य यदध्यवसानं सा एका। यच्च तदेवान्यत्वेनावसीयते साऽपरा। यद्यर्थस्य यदिशब्देन चेच्छब्देन वा उक्तौ यत् कल्पनम् अर्थादसम्भविनोऽर्थस्य सा तृतीया। कारणस्य शीघ्रकारितां वक्तुं कार्यस्य पूर्वमुक्तौ चतुर्थी।

(काव्यप्रकाशवृत्तिः १०.१५)

अप्रकृतेन निगीर्णे साध्यवसानाश्रयात्प्रकृते अप्रकृतस्यान्यत्वोक्तौ यद्येवं स्यात्तथापत्तौ।। स्याज्जन्यजनकपौर्वापर्यत्यागश्च सा त्वतिशयोक्तिः। अत्र साध्यवसानलक्षणया उपमेयास्योपानरूपत्वेन विवक्षया उपमानपदमेव प्रयुज्यते सा प्रथमा। (अलङ्कारकौस्तुभम् पृ. २७७)

विषयिणा विषयस्य निगरणम् अतिशयः। तस्य उक्तिः। (रसगङ्गाधरः द्वितीयाननम् पृ. ४१०)

अध्यवसायस्यापरप्रकारेषु क्वचित् बुद्धिसन्निहितस्य उपमेयस्य अन्यत्वम् अन्यप्रकारेण वर्णनं क्रियते, क्वचिद् यदिशब्दस्य चेच्छब्दस्य वा प्रयोगेण असंभविनोऽर्थस्य कल्पनं भवति, क्वचित् कार्यकारणयोः प्रसिद्धस्य पूर्वापरभावस्य वैपरीत्यं भवतीति अतिशयोक्त्यलङ्कारे अध्यवसायस्य प्रकारभेदेन उपमानोपमेययोः सम्बन्धोऽपि भिद्यते।

अतिशयोक्त्यलङ्कारः अध्यवसानमूलको भवति । अत्र प्रकृते उपमेये अप्रकृतस्योपमानस्य तादात्म्यारोपः भवति स च भेदप्रतिप्रत्यसहकृताहार्याभेदनिश्चयरूपः निर्धार्यते अलङ्कारकृद्भिः।

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्।
सा च सुकुमार सुभगेत्युत्पातपरम्परा केयम्।।

अत्र नायिकायाः मुखं कमलरूपेण, नेत्रे कुवलयद्वयरूपेण देहयष्टिश्च कनकलतिकारूपेण अध्यवसितानि। अत्रोपमानभूतानां कमल-कुवलय-कनकलतिकानामेव उपादानाद् उपमेयभूतानां मुखनेत्रद्वयदेहयष्टीना तैः निगरणमतिशयोक्त्यलङ्कारनियामकम्।

## ४. गम्यमानौपम्यमूलकसम्बन्धकश्च-

सादृश्यमूलकाः सप्तदश अलङ्काराः अलङ्कारसर्वस्वे परिगणिताः सन्ति यत्र औपम्यं व्यञ्जनया गम्यते न पुनः शब्दतः अभिधीयते। तद्यथा-

तुल्ययोगिता, दीपकम्, प्रतिवस्तूपमा, दृष्टान्तः, निदर्शना, व्यतिरेकः, सहोक्तिः, विनोक्तिः, समासोक्तिः, परिकरः, परिकराङ्कुरः, श्लेषः, अप्रस्तुतप्रशंसा, अर्थान्तरन्यासः, पर्यायोक्तिः, व्याजस्तुतिः आक्षेपश्च।

## तुल्ययोगिता अलंकारः-

तुल्ययोगितायां केवलप्रकृतानां केवलाप्रकृतानां वा पदार्थानां सकृदुपात्तेन गुणक्रियादिरूपैकधर्मेण सम्बन्धो भवति। तद्यथा -

उपमानोपमेयोक्तिशून्यैरप्रस्तुतैर्वचः।
साम्याभिधायि प्रस्तावभाग्भिर्वा तुल्ययोगिता।।

(काव्यालङ्कारसारः ५.७)

नियतानां सकृद् धर्मः सा पुनस्तुल्ययोगिता। नियतानां प्राकरणिकानामेव अप्राकरणिकानामेव वा। (काव्यप्रकाशः १०.१८)

प्रकृतानामेवाप्रकृतानामेव वा गुणक्रियादिरूपैकधर्मान्वयस्तुल्ययोगिता।।

(द्वितीयाननम् रसगंगाधरः पृ. ४२३)

सकृदुपात्तेन गुणक्रियादिरूपेण धर्मेण येषां पदार्थानां गम्योपमानोपमेय-भूतानां सम्बन्धः भवति ते सर्वेऽपि प्राकरणिकाः भवन्ति उत वा अप्रकारणिकाः। दीपकालङ्कारादेष भिद्यते अनेनैव वैलक्षण्येन। अत्र प्राकरणिकाप्राकरणिकोभयरूपयोः पदार्थयोः सकृदुपात्तेन धर्मेण सम्बन्धौ भवति, तत्प्रयोजकस्य समानधर्मस्योपादानाद् वाचकाभावाच्च औपम्यं गम्यं च भवति। अत्र सकृदुपात्तेन गुणक्रियादिरूपेण केनचिद्धर्मेण उपमानोपमेययोः सम्बन्धो विधीयते। तद्यथा-

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः।।

अत्र विरहिण्या अनुभावत्वेन उपात्ताः क्षामत्वादयः उपमेयभूताः धर्माः प्रकृताः । तेषां सकृदुपात्तेन आवेदनक्रियारूपधर्मेण सम्बन्धः संघटते। उपमानभूतेन क्षेत्रियरोगेणापि जन्यन्ते एतादृशाः दोषाः। विरहरोगयोर्मध्ये औपम्यमत्र आवेनदक्रियया अवगम्यते। विरहानुभावत्वेन विद्यमानानां समेषामेव क्षामत्वादीनां धर्माणामत्र प्राकरणिकत्वम्। सादृश्यसम्बन्धोऽत्र धारयति वैलक्षण्यमेकेन धर्मेण सह अनेकेषामेकरूपाणां धर्माणामन्वितत्वात्। तुल्यैः समानरूपैः केवलप्रकृताप्रकृतात्मकैः अनेकपदार्थैः सह एकस्य धर्मस्य योगात् तुल्ययोगिताऽत्र निष्पद्यते। सैषा परिणमति औपम्यस्य व्यञ्जनया प्रकाशने। अत एवास्य गम्यमानौपम्याश्रितता प्रमाणीभवति।

**दीपकालङ्कारः -**

दीपकालङ्कारे प्रकृताप्रकृतात्मनाम् उभयरूपाणां पदार्थानां सकृदुपात्तेन गुणक्रियादिरूपेण धर्मेण सम्बन्धः निष्पद्यते तेन च व्यज्यते तन्निष्ठं सादृश्यम् -

आदिमध्यान्तविषयाः प्राधान्येतरयोगिनः।
अन्तर्गतोपमाधर्मा यत्र तद्दीपकं विदुः।। काव्यालङ्कारसारः १-१४।।

सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्।
सैव क्रियासु बह्वीषु कारकस्येति दीपकम्।। काव्यप्रकाशः १०.१७

प्रकृतानामप्रकृतानां चैकसाधारणधर्मान्वयो दीपकम्।।
रसगंगाधरः पृ. ४३१।।

प्राकरणिकमुपमेयमप्राकरणिकमुपमानं तद्रूपाणां पदार्थानां क्रियादिरूपस्य धर्मस्य एकवारमुपादानेन क्रियादीपकं निष्पद्यते। बह्वीषु क्रियासु षट्कारकाणां मध्ये कस्याप्येकस्य सम्बन्धात् कारकदीपकं निष्पद्यते। दीपकं द्विविधं एकस्याः क्रियायाः प्रस्तुताप्रस्तुतोभयवृत्तित्वेन उपात्तेषु कारकेषु सम्बन्धाद् एकम्, एकस्य कारकस्य प्रकृताप्रकृतासु क्रियासु एकवारमेवान्वयाद् द्वितीयम्। दीपकालङ्कारे प्रकृताप्रकृतयोः पदार्थयोः सजातीयधर्मसम्बन्धः उपमायां पर्यवस्यति।

कृपणानां धनं नागानां फणमणिः केसराः सिंहानाम्।
कुलबालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम्।।

अत्र वर्णनीयत्वेन प्रकृताः सन्ति कुलवधूनां स्तनाः। तस्योपमानभूताः सन्ति कृपणधनं, नागफणमणिः सिंहकेसराश्च अप्रकृताः पदार्थाः। एतेषां प्रकृतोपमेयानाम् अप्रकृतोपमानभूतानां सकृदुपात्तेन स्पर्शेन क्रियारूपसाधारणधर्मेण संबन्धाद् अत्र क्रियादीपकालङ्कारः। एकस्था क्रिया समस्तमपि वाक्यं दीपयतीति दीपकम्।

अत्र उपमानोपमेयभूतयोः पदार्थयोर्मध्ये औपम्यमवाचिकमेवावतिष्ठते ।

**प्रतिवस्तूपमाऽलङ्कारः -**

उपमानोपमेयभूतयोः वाक्ययोर्मध्ये वस्तुप्रतिवस्तुभावमाश्रित्य प्रवर्तमानः प्रतिवस्तूपमाऽलङ्कारः गम्य-औपम्याश्रित एव। तद्यथा -

उपमानसन्निधाने च साम्यवाच्युच्यते बुधैर्यत्र।
उपमेयस्य च कविभिः सा प्रतिवस्तूपमा गदिता।।

(काव्यालङ्कारसारः १.२५)

प्रतिवस्तूपमा तु सा। सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः।।

(काव्यप्रकाशः १०.१५)

वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मकवाक्यार्थयोरार्थमौपम्यं प्रतिवस्तूपमा।।

(रसगंगाधरः पृ. ४४२)

एकस्य साधारणधर्मस्य उपमानोपमेयवाक्ययोः द्विवारं शब्दभेदेन उपादानात् प्रतिवस्तूपमा निष्पद्यते। 'प्रतिवस्तु प्रतिवाक्यार्थमुपमा साधारणधर्मोऽस्याम्' इति व्युत्पत्तिः प्रतिवस्तूपमापदस्य। वाक्यर्थयोः वाक्यार्थानां वा उपमासम्पादकस्य एकस्यैव धर्मस्य विभिन्नशब्दोपात्तत्वेन प्रतिवस्तूपमा सिद्ध्यति। भिन्नशब्देनोपात्तस्य एकस्यैव धर्मस्य अनेकत्र सम्बन्धाद् आर्थिकौपम्यसिद्धिः। प्रतिवस्तूपमायां वैलक्षण्यसाधिका। अत्र उपमानोपमेयभूतयोः वाक्यर्थयोः स्वार्थसिद्धिः परस्परमनपेक्ष्य भवति। अतः निरपेक्षत्वेन उपमानोपमेयभूतयोर्वाक्ययोः स्थितिरत्र चमत्कारं जनयति। अत्र एकस्यैव धर्मस्य शब्दभेदेन विभिन्नेषु उपमानोपमेयभूतेषु वाक्येषु उपादानान्निष्पन्नः वस्तुप्रतिवस्तुभावः अलङ्कारनियामकः। तद्यथा -

यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता।।

अत्र अनलादिषु दहनादिरूपं स्वाभाविककार्यदर्शनं न विस्मयकरम्। चतुर्ष्वपि वाक्येषु स्वाभाविककार्यदर्शनेन अद्भुताभावरूपः विस्मयाभावजनकः साधारणो धर्मः अत्र प्रतिवाक्यं 'किमद्भुतम्', 'किं ततः', 'सदैव', 'प्रकृतिरेव' इति विभिन्नशब्दैरुपादीयते।

सतामविषादित्वमत्र वर्णनीयमत एव तस्योपमेयवाक्यतासिद्धिः। अनल-दहनाद्रिगौरवमहोदधिलवणानि अत्रोपमानानि तत्तद्वाक्यमुपमानवाक्यञ्च। औपम्यमत्र

व्यङ्ग्यत्वेनोपपद्यते अवाच्यत्वात्। मालाप्रतिवस्तूपमात्र स्वीकुर्वन्ति केचन आचार्या भिन्नशब्दैरेकस्यैव स्वाभाविकस्वरूपसमानधर्मोपादानात्। उपमानोपमेययोः वाक्ययोः विलक्षणः सम्बन्धः अत्रालङ्कारत्वमादधाति वस्तुप्रतिवस्तुभावरूपः। अनेनैव द्वयोर्वाक्ययोर्मध्ये जायमानेन सम्बन्धविशेषेणैव पृथगलङ्कारतासिद्धिः।

## दृष्टान्तालङ्कारः -

दृष्टान्तालङ्कारोऽपि वाक्यद्वयसम्बन्धात्मकः गम्य-औपम्याश्रितः सादृश्य-मूलकः भवतीति आचार्या एवम् -

इष्टस्यार्थस्य विस्पष्टप्रतिबिम्बनिदर्शनम्।
यथेनादिपदैः शून्यं बुधैर्दृष्टान्त उच्यते।। (काव्यालंकारसारः ६.८)

दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्। (काव्यप्रकाशः १०.१६)

प्रकृतवाक्यार्थघटकानामुपमानादीनां साधारणधर्मस्य च
बिम्बप्रतिबिम्बभावे दृष्टान्तः।। (रसगंगाधरः पृ. ४५२)

दृष्टान्तालङ्कारे उपमानोपमेयभूतयोः वाक्यार्थयोर्मध्ये बिम्बप्रतिबिम्बभावो भवति। अत्र प्रतिवाक्यं साधारणधर्मः भिद्यते, किन्तु तुल्यरूपतया वाक्ययोर्मध्ये सादृश्यं सम्पाद्यते। द्वयोः धर्मयोः वाक्यद्वयेऽत्र उपादानेन बिम्बप्रतिबिम्बभावः तद्यथा -

"वस्तुतो भिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्यादभिन्नता-माप्तवतोः पृथगुपादानं बिम्बप्रतिबिम्बभावः।" साधार्म्यवाचकस्य अभावाद् दृष्टान्तालंकारेऽपि उपमानोपमेयवाक्ययोरौपम्यसिद्धिः व्यञ्जनया भवतीत्यसौ उपमातो भिद्यते। बिम्बप्रतिबिम्बभावापन्नेषु वाक्येषु साधारणधर्मस्य भिन्नत्वादेष प्रतिवस्तूपमालङ्काराद् भिद्यते यत्र साधारणधर्मो न भिद्यते वस्तुप्रतिवस्तुभावमापन्नेषु वाक्येषु।

दृष्टान्तालङ्कारे दार्ष्टान्तिकवाक्येन सह दृष्टान्तवाक्यस्य निश्चयो भवति। दार्ष्टान्तिकवाक्यमत्र उपमेयभूतं दृष्टान्तवाक्यमत्रोपमानभूतञ्च परिकल्प्यते।

साधर्म्येण समानधर्मसम्बन्धेन वैधर्म्येण विरुद्धधर्मसम्बन्धेन च उपमानोपमेयभूतयोः वाक्ययोर्मध्ये बिम्बप्रतिबिम्बभावस्य नियामकत्वाद् दृष्टान्तालङ्कारः द्विविधो भवति। साधर्म्येण दृष्टान्तदार्ष्टान्तिकयोः निश्चयः यथा -

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम्।
आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः।।

नायकं प्रति नायिकायाः सख्याः उक्तिरियम्। मनोभवेन ज्वलितं नायिकायाः मनः नायकं दृष्ट्वा प्रसन्नं भवति तथैव यथा हिमांशोः दर्शनेन कुमुद्वत्याः पुष्पं विकसति।

पद्येऽस्मिन् नृपचन्द्रयोः, नायिकाकुमुद्वत्योः, मनःकुसुमयोः, मनोभवज्वलितसूर्यकिरणज्वलितयोः, निर्वाणप्रकाशयोश्च बिम्बप्रतिबिम्बभावः। कुमुद्वत्याः कुसुमस्य चन्द्रदर्शनेन विकास इव नायिकायाः मनसि नायकदर्शनेनोल्लासः समुत्पद्यते। अत्र मनःकुसुमयोरुपमानोपमेयभावत्वेन प्रतीयमानयोः विकासोल्लाससाधारणधर्मवतोः बिम्बप्रतिबिम्बभावापन्नता दृष्टान्तालङ्कारसाधिका।

### निदर्शनालङ्कारः -

निदर्शनालङ्कारोऽपि दृष्टान्तालङ्कारवद् गम्यमानौपम्याश्रितः। अत्र पदार्थवाक्यार्थयोर्वा अनुपपद्यमानान्वयः तयोर्मध्ये सादृश्यमाक्षिप्य पर्यवस्यतीति आचार्याः। काव्यालङ्कारसारे विदर्शनेति संज्ञा अलङ्कारस्यास्य उद्भटाचार्यसम्मता। तद्यथा -

**अभवन्वस्तु सम्बन्धो भवन्वा यत्र कल्पयेत्।**
**उपमानोपमेयत्वं कथ्यते सा विदर्शना।।** (काव्यालंकारसारः ५.१०)

**निदर्शना, अभवन् वस्तुसम्बन्धः उपमापरिकल्पकः।। निदर्शनं दृष्टान्तकरणम्।** (काव्यप्रकाशः १०.११)

**उपात्तयोरर्थयोरार्थभेद औपम्यपर्यवसायी निदर्शना।।**
(रसगंगाधर पृ. ४५६)

अनुपपद्यमानसम्बन्धात्मकयोः उपमानोपमेयभूतयोः पदार्थयोर्मध्ये यदा औपम्यमवलम्ब्य सम्बन्धः संस्थाप्यते तदा निदर्शनालङ्कारो भवति। पदार्थवाक्यर्थभूतयोर्वा उपमानोपमेययोर्मध्ये निश्चित्य दर्शनं सादृश्यप्रकाशनं निदर्शना उच्यते।

निदर्शनायां द्वाप्युपमानोपमेयभूतौ पदार्थौ पूर्वमसम्बद्धावेव प्रतीयेते। एकस्मिन्नेव पद्ये प्रयुक्तत्वाद् असम्बद्धयोरप्यनयोर्मध्ये सम्बन्धः संस्थाप्यते सादृश्यमन्विष्य। सैषा द्विविधा भवति वाक्यार्थविषया पदार्थविषया च।

### वाक्यार्थनिदर्शनायाः उदाहरणम् -

**क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।**
**तितिर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्।।** (रघुवंशम् १.२)

पद्येऽस्मिन् पूर्वार्द्धे सूर्यवंशवर्णनमाकलनविषयकमसामर्थ्यं प्रकाशयति कविः तन्मत्याः अल्पविषयत्वात्। उत्तरार्द्धे पुनः उडुपेन समुद्रसन्तरणस्य इच्छायाः प्रकाशनं क्रियते। द्वयोः वाक्यर्थयोर्मध्ये सम्बन्धस्य अनुपन्नत्वात् सम्बन्धस्य उपपत्तये औपम्याश्रितः सम्बन्धः परिकल्प्यते एवम् - उडुपेन सागरतरणवन्मदीयमत्या सूर्यवंशवर्णनमसंभवमिति।

प्रकृतोऽर्थः सूर्यवंशवर्णनविषयकः अप्रकृतश्च सागरसंतरणविषयकः। उभावप्यसम्बद्धौ। सम्बन्धश्च औपम्यामाक्षिप्य विधीयते वाक्यार्थयोर्मध्ये।

## व्यतिरेकालङ्कारः -

व्यतिरेकालङ्कारे उपमानापेक्षया उपमेयस्य गुणजन्यमाधिक्यमुपादीयते। तद्यथा -

विशेषोपादानं यत्स्यादुपमानोपमेययोः।
निमित्तादृष्टिदृष्टिभ्यां व्यतिरेको द्विधा तु सः।।

(काव्यालङ्कारसारः २.७)

उपमानाद् यदन्यस्य व्यतिरेकः स एव सः।। अन्यस्योपमेयस्य व्यतिरेक आधिक्यम् । (काव्यप्रकाशः १०.१९)

उपमानादुपमेयस्य गुणविशेषत्त्वेनोत्कर्षो व्यतिरेकः।।

(रसगंगाधरः पृ. ४६७)

उपमानापेक्षया उपमेयस्य यः विशेषणातिरेकः गुणविशेषकृतः उत्कर्षो वा सः व्यतिरेकनामालङ्कारः भवति। उपमानोपमेययोर्मध्ये साधारणधर्ममूलकं साधर्म्यमाक्षिप्यतेऽत्र। उपमानस्य अधिकगुणसम्पन्नता उपमेयस्य च न्यूनगुणसम्पन्नता इत्येषा प्रसिद्धिरत्र परावर्तते। अत्र पुनः उपमेयगतमुत्कर्षं प्रदर्श्यते उपमानगतमपकर्षञ्च। एतदेवाश्रित्य व्यतिरेकस्य द्वादशभेदाः एवं परिकल्पिताः मम्मटाचार्येण -

हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते।
शब्दार्थाभ्यामथाक्षिप्ते श्लिष्टे तद्वत्त्रिरष्ट तत्।।

(काव्यप्रकाशः १०.१०५)

'व्यतिरेकस्य हेतुः उपमेयगतमुत्कर्षनिमित्तम् उपमानगतमपकर्षकारणं तयोर्द्वयोरुक्तिः एकतरस्य द्वयोर्वा अनुक्तिरित्यनुक्तित्रयम् एतद्भेदचतुष्टय-मुपमानोपमेयभावे शब्देन प्रतिपादिते, आर्थेन च क्रमेणोक्ताश्चत्वार एव भेदाः, आक्षिप्ते च तावन्त एव, एवं द्वादश। एते श्लेषेऽपि भवन्तीति चतुर्विंशतिर्भेदाः। (वामनझलकीकरः पृ. ६४७)

## सहोक्त्यलङ्कारः -

'सहोक्तिः' इत्येष अलङ्कारोऽपि गम्यमनौपम्याश्रितः। अत्र एकार्थाभिधायकस्य वाक्यस्य सहशब्दार्थसम्बन्धबलाद् अनेकार्थाभिधायकता सम्पद्यते। तद्यथा -

तुल्यकाले क्रिये यत्र वस्तुद्वयसमाश्रिते।
पदेनैकेन कथ्येते सा सहोक्तिर्मता सताम्।।

(काव्यालङ्कारसारः ५.१५)

सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्।। एकार्थाभिधायकमपि सहार्थबलात् यद् उभयस्याप्यवगमकं सा सहोक्तिः।" (काव्यप्रकाशः १०.२६)

गुणप्रधानभावावच्छिन्नसहार्थसंबन्धः सहोक्तिः।। (रसगंगाधरः पृ.४८९)

एकस्यैव धर्मस्य वाक्यद्वये सहशब्दप्रयोगेन उपस्थितिः सम्बन्धमाकलयति। गुणप्रधानभावोऽत्र विद्यत एव सहशब्दस्य विधानात्। एक एव धर्मः एकस्मिन् वाक्ये प्राधान्येनावतिष्ठते अन्यस्मिन् च अप्राधान्येन। सहशब्दप्रयोगाद् एकधर्मस्य उभयत्राप्यवस्थितिः प्रमाणीभवति चमत्कारैककारिका सहृदयानां चेतसि आह्लादजनिका च। तद्यथा-

सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः
सह मणिवलयैर्बाष्पधारा गलन्ति।
तव सुभग वियोगे तस्याः उद्विग्नायाः
सह च तनुलतया दुर्बला जीविताशा।।

नायिकायाः विरहावस्थायाः वर्णनमिदम्। अत्र दीर्घतैकगुणस्य दिवसनिशाभ्यां सह श्वासदण्डेष्वपि विद्यमानता उभयोर्मध्ये सहशब्दप्रयोगात्संबन्धनियामिका। दिवसनिशादौ दीर्घताया आपादनं दुःखजनकत्वादत्र औपचारिकम्। बाष्पाम्बुधारा अश्रुधारा नेत्राभ्यां निर्गत्य भूमौ पतति कृशकायत्वात् रत्नवलयेन सार्द्धम्। पतनक्रियायाः अश्रुधारया कनकवलयेन च उभयत्रापि सम्बन्धः स्थाप्यतेऽत्र सहशब्दविधानात्। एवञ्चात्र तनुलतया सह जीविताशायाः अपि क्षीणत्वमभिप्रेतमस्ति।

श्वासदण्डाः, बाष्पधाराः, जीविताशा इत्येतेषां प्रथमान्तपदानां दीर्घत्वेन, गलितत्वेन, दुर्बलत्वेन च क्रमेण सम्बन्धः साक्षात् शाब्दः वर्तते दिवसनिशाभिः,

मणिवलयैः तनुलतया च तृतीयान्तपदैः सहशब्दार्थान्वयबलात् आर्थश्चेत्यत्र सहोक्त्यलङ्कारः। प्रकृताप्रकृतयोभयरूपयोः पदार्थयोः उपादानात् औपम्यमत्र काल्पनिकम् 'सहयुक्ते अप्रधाने' इत्यनेन सूत्रेण सर्वत्रात्र तृतीयाविधानम्। अत एव तृतीयान्तानां समेषामेव पदानां गुणभावाद् उपमानत्वं प्रथमान्तानां प्राधान्यादुपमेयत्वमिति आचार्याः।

### समासोक्त्यलङ्कारः -

'समासोक्तिः' इत्येष अलङ्कारः प्रकृताप्रकृतयोः पदार्थयोर्मध्ये गम्यमानौपम्यमूलकः। अत्र अप्रकृतार्थस्याभिधानेन प्रकृतार्थः आक्षिप्यते। तद्यथा-

**प्रकृतार्थेन वाक्येन तत्समानैर्विशेषणैः।**
**अप्रस्तुतार्थकथनं समासोक्तिरुदाहृता।।** (काव्यालङ्कारसारः २.११)

**परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः।।** प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यान्न तु विशेष्यस्य सामर्थ्यादपि यद् अप्रकृतस्यार्थस्याभिधानं सा समासेन संक्षेपेणार्थद्वयकथनात् समासोक्तिः।। (काव्यप्रकाशः १०.११)

**अत्र प्रस्तुतधार्मिको व्यवहारः साधारणविशेषणमात्रोपस्थापिता-प्रस्तुतधर्मिकव्यवहाराभेदेन भासते सा समासोक्तिः।।**
(रसगंगाधरः पृ. ४९३)

अत्र अप्रकृतव्यवहारः प्रकृतव्यवहारेण अक्षिप्यते। उपमानभूतः अप्रकृतव्यवहारः उपमेयभूते प्रकृतव्यवहारे अभेदसम्बन्धेन आरोप्यते। व्यवहारसमारोपादत्र समासोक्तिः तेनैवासौ रूपकालङ्काराद् भिद्यते।

समासेन प्रकृताप्रकृतोभयवृत्तान्तयोः प्रतिपादनेन समासोक्तिरिति संज्ञा विधीयते। अत्र विशेषणपदानि प्रकृताप्रकृतोभयसम्बन्धानि भवन्ति। तत्प्रभावेणैव उपमानभूतस्य अप्रकृतव्यवहारस्य उपमेयभूते प्रकृतव्यवहारे आरोपः क्रियते। आरोपश्चात्र व्यञ्जनया अवगम्यते। प्रकृतार्थविशेषणवाचकानि पदान्यत्र द्व्यर्थकत्वात् श्लिष्टानि भवन्ति न पुनः विशेष्यपदानि तथा। समासोक्तौ प्रकरणादिभिः अभिधायाः निममनात् प्रकृतवृत्तान्तस्य अभिधया प्रतीतिर्भवति अप्रकृतवृत्तान्तस्य च व्यञ्जनया।

दैवाद् दुर्बलेन शत्रुणा जितं समरपतितं स्वामिनमवेक्ष्य वीरपत्नी कथयत्येवम्-

**लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः।**
**जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सा।।**

अत्र विशेष्यवाचकस्य जयलक्ष्मीशब्दस्य कान्तावाचकत्वं नास्ति जयलक्ष्मीमात्रबोधनसामर्थ्यात्। जयलक्ष्मीपदगतस्य स्त्रीप्रत्ययस्य प्रकृत्यर्थान्वित-स्वार्थबोधकत्वनियमेन जयलक्ष्मीनिष्ठस्त्रीत्वमात्रप्रत्यायनं न पुनः कान्तावाचकत्वमत्र ग्राह्यम्। विशेषणपदानि बाहुस्पर्शादीनि प्रकृताप्रकृतोभयगतानि। बाहुस्पर्शमुपलभ्य जयलक्ष्मीस्तथा उज्ज्वलतामदधाति यथा काऽपि कान्ता प्रियतमबाहुस्पर्शादिना। तव विनाशाज्जायमानेन बाहुस्पर्शादिव्यापाराभावेन यथा जयश्रीः निरुज्ज्वला दुर्बला च तथैव कान्ताऽपि उज्ज्वलतायाः हेतुभूतस्य तव बाहुस्पर्शस्य अनुपलब्धत्वात्।

उपमेयोपमानभूतयोः प्रकृताप्रकृतयोः वृत्तान्तयोः सम्बन्धः व्यवहारसाम्याद् अवसीयते विशेषणपदानां श्लिष्टत्वेन उभयत्रान्वितत्वात्। सम्बन्धस्य नियामकोऽस्त्यत्र प्रकृताप्रकृतभूतयोर्मध्ये व्यवहारतादात्म्यम्। तच्चैतद् व्यञ्जनया प्रतीयते अत एव समासोक्त्यलङ्कारस्य गम्यमानौपम्यमूलकता।

### अप्रस्तुतप्रशंसालङ्कारः-

'अप्रस्तुतप्रशंसा' इत्यस्मिन् गम्यमानौपम्यमूलके अलङ्कारे अप्रस्तुतस्य उपमानभूतस्य अप्राकरणिकस्य वृत्तान्तस्य अभिधया प्रतिपादनं तत्प्रभावेन च प्रकृतस्योपमेयभूतस्य पदार्थस्य व्यञ्जनया आक्षेपो भवति। तद्यथा-

**अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः।**
**अप्रस्तुतप्रशंसेयं प्रस्तुतार्थानुबन्धिनी।।** (काव्यालङ्कारसारः ५.८)

**अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया।।** अप्राकरणिकस्याभिधानेन प्राकरणिकस्याक्षेपोऽप्रस्तुतप्रशंसा (काव्यप्रकाशः १०.१२)।।

**अप्रस्तुतेन व्यवहारेण सादृश्यादिवक्ष्यमाणप्रकारान्यतमप्रकारेण प्रस्तुतव्यवहारो यत्र प्रशस्यते साप्रस्तुतप्रशंसा।।**

(रसगंगाधरः पृ. ५३७)

अप्रस्तुतस्य अप्राकरणिकस्य अभिधानं (प्रशंसा) प्राकरणिकार्थस्य प्रतिपत्तिपरं (प्रस्तुताश्रया) भवत्यत्र। अप्रस्तुतस्य अभिधया प्रतिपादनेन प्रस्तुतस्य यदाक्षेपः सः कमपि सम्बन्धमाश्रित्य प्रवर्तते। प्रकृताप्रकृतयोर्मध्ये सम्बन्धभेदानवलम्ब्य सैषा अप्रस्तुतप्रशंसा पञ्चधा भवतीति आचार्याः एवम्-

**कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ।**
**तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ।।**

कार्ये, निमित्ते, सामान्ये विशेषे च प्रस्तुते तदन्यस्य कारणस्य, कार्यस्थ, विशेषस्य सामान्यस्य च क्रमेण वचः अभिधया प्रतिपादनम् एवञ्च तुल्यं प्रस्तुते तुल्यस्याप्रस्तुतस्य अभिधया कथनं इत्येतैः प्रस्तुताप्रस्तुतयोर्मध्ये सम्बन्धभेदैः अप्रस्तुतप्रशंसालङ्कारः पञ्चविधः परिकल्प्यते। तुल्ये प्रस्तुते तुल्यस्याभिधान-भेदस्योदाहरणम् -

आदाय वारि परितः सरितां मुखेभ्यः किं तावदर्जितमनेन दुरर्णवेन।
क्षारीकृतं च वडवादहने हुतं च पातालकुक्षिकुहरे विनिवेशितञ्च।।

अप्रकृतस्य समुद्रस्य दुष्टव्यवहारोऽत्र वाच्यः। तत्सदृशस्य प्रस्तुतस्य सर्वथापकारकर्मणि प्रवृत्तस्य कश्चन दुष्टपुरुषव्यवहारस्यात्र आक्षेपः। प्रकृताप्रकृतोभयगतं आसुधत्वगुणसाम्येनात्र प्रतीयते औपम्यम्। अत एव गम्यमानौपम्याश्रितोऽयमलङ्कारः।

सर्वतः धनमाहृत्य तस्य दुरुपयोगे सर्वथा प्रवृत्तं प्रकृतं कमपि उपमेयभूतं दुष्टमभिलक्ष्य अप्रकृतोपमानभूतस्य तत्सदृशव्यवहारे प्रवृत्तस्य मिष्टस्यापि नदीनां प्रभूततरजलराशेः क्षारीकरण-वडवानलदहन-पातालकुक्षिविनिवेशनादिदुष्टकर्मसु सततं प्रवृत्तस्य समुद्रस्य अभिधानं क्रियते।

अप्रकृतभूतस्य समुद्रस्य अभिधानं तत्प्रभावेण च प्रकृतस्योपस्थितस्य दुष्टजन्यस्य तत्तुल्यस्याक्षेपोऽत्र चमत्कृतिं जनयति। गुणसाम्यादत्र सम्बन्धः स्थाप्यते प्रकृताप्रकृतभूतयोः पदार्थयोर्मध्ये।

## अर्थान्तरन्यासालङ्कारः-

'अर्थान्तरन्यासः' इत्यस्मिन् अर्थालङ्कारे उपमेयोपमानभूतयोः पदार्थयोर्मध्ये जायमानः समर्थ्यसमर्थकभावः चमत्कृतिं जनयति। तद्यथा-

समर्थकस्य पूर्वं यद्वचोऽन्यस्य च पृष्ठतः।
विपर्ययेण वा यत्स्याद्धिशब्दोक्त्यान्यथापि वा।।

(काव्यालंकारसारः २.५)

सामान्यं वा विशेषो वा तदन्येन समर्थ्यते।
यत्तु सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा।।

साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण यत् समर्थ्यते विशेषो वा सामान्येन सोऽर्थान्तरन्यासः।। (काव्यप्रकाशः १०.२३)

सामन्येन विशेषस्य विशेषणेन सामान्यस्य वा यत्समर्थनं तदर्थान्तर-न्यासः।। (रसगंगाधरः पृ. ६३४)

उपमेयोपमानोभयरूपयोः सामान्यविशेषभूतयोः पदार्थयोः परस्परं समर्थ्यसमर्थकोभयरूपसम्बन्धः चमत्कृतिं जनयत्यत्र अलङ्कारनियामिकाम्। सामान्यविशेषयोः समर्थनमत्र क्वचित् साधर्म्येण क्वचिच्च वैधर्म्येण विधीयते।

अन्यः अर्थः अर्थान्तरं, तस्य न्यासः अर्थान्तरन्यासः- "अनुपपद्यमानतया संभाव्यमानयोः सामान्यविशेषयोरुपपादनार्थं तयोरन्यतररूपोदाहरणोपन्यासः अर्थान्तरन्यासः।"

दृष्टान्तालङ्कारेण असौ भिद्यते यत्र पुनः सामान्यं सामान्येन विशेषश्च विशेषेण समर्थ्यते। अर्थान्तरन्यासे सामान्यस्य तदितरेण विशेषेण विशेषस्य च तदितरेण सामान्येन समर्थनं भवति।

सामान्यस्य विशेषेण समर्थनस्य उदाहरणम् -

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम्।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम्।।

निजदोषेण आक्रान्तमनाः जनाः सुन्दरतममपि पदार्थमसुन्दरमेव पश्यन्ति तथैव यथा पित्तरोगेणोपहतः जनः शुभ्रमपि शङ्खं पीतमेव पश्यति। उपमेयभूतं निजदोषेत्यादिवाक्यं सामान्यम् उपमानभूतं पित्तोपहतादि-वाक्यं विशेषम्। अनयोः सम्बन्धः समर्थ्यसमर्थकभावरूपः। पूर्वार्द्धस्य सामान्यवचनमत्र उत्तरार्द्धेण विशेषवचनेन समर्थ्यते। अनेन जन्यते वैलक्षण्यम् उपमेयोपमान-भूतयोर्वाक्ययोर्मध्ये चमत्कृतिजनकम्।

एवं परिकरः पर्यायोक्त-व्याजस्तुति-आक्षेप-श्लेषादीनामर्थालङ्काराणाम् उपमेयोपमानभूतयोः पदार्थयोर्मध्ये सम्बन्धविशेषविषयकः विचारः सोदाहरणम् उपस्थातुं शक्यते चमृत्कृतिजनतावच्छेदकस्य तन्निष्ठवैलक्षण्यस्य प्रकाशनाय।

इत्थं साहित्यशब्देन सह साहित्यस्य काव्यात्मतामादधानाः प्रायेण सर्वेऽपि काव्यालङ्काराः सम्बन्धविशेषमभिलक्ष्य चमत्कृतिं जनयन्तः संदृश्यन्ते सहृदयानां चेतसि। उपमानोपमेयभूतयोः कविप्रतिभाकल्पितयोः पदार्थसार्थयोर्मध्ये सम्बन्धविशेषमभिलक्ष्य समुत्पद्यते वैलक्षण्यमलङ्कारस्वरूपनियामकम्। काव्यशास्त्रे पदार्थयोर्मध्ये जायमानः चमत्कृतिजनकतावच्छेदकः सम्बन्धविशेषः वैशिष्ट्यं विभर्तीति प्रमाणीभवत्यनेन।

## सन्दर्भग्रन्थाः-


१. अलङ्कारकौस्तुभम्, विश्वेश्वरपण्डितः, सं. म.म.शिवदत्तशर्मा, निर्णसागराख्य-मन्त्रालयः, १९९८
२. अलङ्कारसर्वस्वम्, रूय्यकः, जयरथविरचितविमर्शिनीसहितम्, संपादकोऽनुवादकश्च म.म.रेवाप्रसादद्विवेदी, प्र. चौखम्बासंस्कृतसीरीज्आफिस, वाराणसी, १९७१
३. अलङ्कारसर्वस्वम्, रुय्यकः श्रीविद्याचक्रवर्तीविरचितसंजीविनीटीकासंवलितः, सम्पादकोनुवादकश्च प्रो०रामचन्द्रद्विवेदी, प्र. मोतीलालबनारसीदासः, १९६५
४. काव्यप्रकाशः, मम्मटः, सं. म.म. रेवाप्रसादद्विवेदी, प्र. प्रकाशनविभागः, काशीहिन्दू-विश्वविद्यालयः, १९८१
५. काव्यप्रकाशः, मम्मटः, बालबोधिनीव्याख्या, वामनाचार्य रामभट्टझलकीकरः, सं. रघुनाथदामोदरकरमरकरः, प्र.भण्डारकरप्राच्यविद्याप्रतिष्ठानम्, पुण्यपत्तनम् (पुणे),१९६५
६. काव्यालङ्कारसारः, उद्भटः, सं. मंगेशरामकृष्णतैलङ्गः, प्र. निर्णयसागरमुद्रणालयः, १९२८
७. काव्यालङ्कारसूत्रवृत्तिः, वामनः, सं. नारायणरामआचार्यः, प्र. निर्णयसागरप्रेस, मुंबई, १९५३
८. कुवलयानन्दः, अप्पयदीक्षितः, रसिकरञ्जन्याख्यया टीकया संवलितः,सं. जयशंकरलालत्रिपाठी, चौखम्बासंस्कृतसीरीजआफिस, वाराणसी
९. चित्रमीमांसा, अप्पयदीक्षितः, धरानन्दकृतसुधासंस्कृतटीकासहितः, सं. जगदीशचन्द्रमिश्रः, प्र. चौखम्बासंस्कृतसीरीजआफिस, वाराणसी, १९७१
१०. नाट्यशास्त्रम् (काव्यलक्षणखण्ड), भरतमुनिः, सं. अनु. म.म. रेवाप्रसादद्विवेदी, प्र. भारतीय-उच्च-अध्ययन-संस्थानम्, शिमला, २००५
११. भावप्रकाशनम्, शारदातनयः, अनु. मदनमोहनअग्रवालः, प्र. श्रीमती उषाअग्रवालः, राधाकृष्णजनरलस्टोर, चौकबाजार, सादाबाद, मथुरा, १९७६
१२. रसगंगाधरः, पण्डितराजजगन्नाथः, नागेशभट्टविरचितगुरुमर्मप्रकाशटीकया संवलितः, सं. भट्टमथुरानाथशास्त्री, प्रकाशकः मोतीलालबनारसीदासः, १९८३
१३. वक्रोक्तिजीवितम् : कुन्तकः, व्याख्याता राधेश्याममिश्रः, प्र. चौखम्बाप्रकाशनम्, काशीसंस्कृतग्रन्थमाला १८०, १९६७
१४. साहित्यमीमांसा, मङ्खः, सं. गौरीनाथशास्त्री, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, १९८५.
१५. साहित्यसन्दर्भाः, रचयिता आचार्यरेवाप्रसादद्विवेदी, काशीहिन्दूविश्वविद्यालयः, प्राच्यविद्यासंकायः, १९७०.
१६. शृङ्गारप्रकाशः, भोजदेवः, संम्पादकौ - रेवाप्रसादद्विवेदी सदाशिवकुमारद्विवेदी च, प्रकाशकौ-इन्दिरागाँधीराष्ट्रियकलाकेन्द्रम्,नई दिल्ली, कालिदासंस्थानम् ,वाराणसी, २००७

# रसनिष्पत्तौ सम्बन्धविचारः

द्विविधः खलु रसः- १. आस्वाद्यरूपः २. आस्वादरूपश्च।

तत्र यः परः स विगलितेवेद्यान्तरः, आत्मचैतन्यरूपस्तत्र का वा सम्बन्धचर्चा। स्थायिभावेन सहात्मचैतन्यस्य यः कारणभूतः संयोगस्तमेवैकलं संबन्धतया निनीषावहै। तत्र काव्यप्रकाशस्य कूटवचनम्-

कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः।।

विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः।।

किमत्र कूटमिति प्रश्ने श्रूयताम्- तैरिति येयं तृतीया प्रायोजि तत्रास्ति निभृता द्विधा विवक्षा एका हेत्वर्थविवक्षा तैः कारणभूतैरिति, परा च साहचर्य-विवक्षा-रसानुभूतिकाले स्थायिना सह विभावादयोऽपि भवन्ति। एतेषां यः समूहस्तत्र संप्लवः सर्वेषां यथा पानकरसे गुडमरिचादीनाम्। कस्याप्येकस्य घटकस्योद्रिक्ततायां समूहेऽत्र रसोनाऽनुभूयते, अपितु तस्य स्थायिन एवानुभूतिर्भवति। अभिनवगुप्तमते तु विभावादीनां संमिश्र एव परभागकल्पयन्नेकमपूर्वमतिरिक्तं च यमास्वादमुद्भावयति स एव सामाजिकानां रसः। सञ्जायन्ते तत्र मञ्चन्तद्द्रष्टोः, तन्मध्ये चोड्डीनाः, मञ्चादुत्थाय द्रष्टुश्चेतोधातुमभिनिविशमाना कतिपये भावास्तेषामेवाऽत्र रसता। केचनैव पुण्यवन्तस्तानेतान् प्रमिण्वन्ति। पुण्यमत्र हृदयकौशलम्। अतएव विदग्ध इति सामाजिकानां पदवी। अत्र कृते विचारे निम्नाङ्किता उपलभ्यन्ते सम्बन्धाः-तत्र विभावस्य द्वैविध्यम् आलम्बनविभाव उद्दीपनविभावश्चेति। तत्र

१. विभावः- स्थायिनोर्मध्ये बीजाङ्कुरन्यायेन जन्यजनकभावो भवति। सामाजिकाः शृङ्गार-स्थायिना रतिनाम्ना भवन्त्येव दिग्धहृदयाः। आलम्बनत्वं नाम अङ्कुरिता रतिर्यदालम्बते तत्। यथा- एकमेव रथगर्भमाश्रितौ नारायणोरु-सम्भवाप्सरोविशेष उर्वशी सोमवंशसंभवो युवा नृपः पुरुरवश्च। दृङ्मात्रगोचरी-भूतामुर्वशीं पुरुरवो हृदयेश्वरीं विदधाति। प्रथममसुरावलेपसंरम्भेणोर्वशी

गतसंज्ञासीत्, चित्रलेखाद्वितीयां पुरूरवस्तथा तथा निर्वर्णयति। प्रत्युच्छ्वासमुर्वश्याः स्तनकुम्भयोः स्पन्दनं सहर्षं गणयति। कालिदासस्तमिममवसरं शृङ्गाराय न जहाति। सादरमुल्लिखति स एतमेवम्–

मन्दारकुसुमदाम्ना गुरुरस्याः सूच्यते हृदयकम्पः।
मुहुरुच्छ्वसता मध्ये परिणाहवतोः पयोधरयोः।। (वि. १.६)

पयोधरयोः परिणाहं मन्दारकुसुमदामोत्कम्पं चेति लक्षयता निरूपयता च नायकेन लक्षितं स्वकीयं तत्कृतं हृदयबन्धनम्। लब्धसंज्ञयोर्वश्या चापि हापित आत्मनि स्ववशः। तया ज्ञाते 'पुरूरवसाऽस्मि परित्रातेति तं दृष्ट्वैवोदगारि- 'उवकिदं क्खु दाणविंदसंरंहेण' इति। इतः परमपि प्रशंसनीयाऽस्ति सुकवे- र्नायकनायिकयोरन्योन्यप्रीतिप्रकाशनचातुरी। अत्र ये श्लोकाः कवित्वाय ते संपूर्णेऽपि विश्वम्भरापृष्ठे प्रियाः। आविर्भूते शशिनि (१.९), अस्याः सर्गविधौ' (१.१०) इत्युभे अपि विश्वकण्ठहारभेते पद्यरत्ने अत्रैव संघटिते। स्वकीया प्रीतिः सूचितैवानया प्रसङ्गोक्त्या–

यदृच्छया त्वं सकृदप्यबन्ध्ययोः
पथिस्थिता सुन्दरि? यस्य नेत्रयोः।
त्वया विना सोऽपि समुत्सुको भवेत्
सखीजनः किं पुनरात्तसौहृदः।। १.११।।

अत्रोर्वशीरतिं पुरूरवा अङ्कुरयति, पुरूरवोरतिञ्चोर्वशी। एवमुभाविमावुभयो- रतावालम्बनम्। विभक्त्वमप्यनयोः कविप्रतिभया कल्पितत्वात् रङ्गपीठे दृश्ययोरपि लोकेऽन्यत्रानुपलम्भविषयत्वात्, असत्त्वे सत्त्वकल्पनाच्च। विभावनानाम्नि अर्थालङ्कारेऽपीयमेवकाला 'कारणाभावेऽपि कार्योत्पत्तिरिति।' इदमालम्बनत्वं विभावस्य विभावपदोद्दिष्टत्वञ्च। अथोद्दीपनत्वम्।

पश्यन्त्वत्रैव प्रकरणे कीदृशमत्रोद्दीपनम्। नायकयोरैकाधिकरणाम्, तत्रापि गतसंज्ञात्वं नाविकायाः। द्रष्टुं शक्येयं प्रकामं स्वैरञ्च। नायिकायाः संपूर्णैवाङ्गयष्टिः शोभना। तस्यां किंवाङ्गं द्रष्टुमर्हम्। मध्येवक्षो भ्राजवक्षस्तत्रसुतरां प्रथमम्। तत्र वर्त्तते द्वित्वम्। परिणाहोऽन्यो विशेषः। तत्र कम्पो नाम हृदयस्य भाषा। प्रवर्त्तते च तदेव सर्वाण्यङ्गानि पश्चात्कृत्यपुरः सर्त्तुम्। शकुन्तलाया इदं प्राथम्येन साक्षात्कारेऽपि दुःष्यन्ताय तदेव पुनःस्थाप्यते। तदर्थमेव स्तनवल्कलश- शैथिल्यघटना। तत एव विसस्मार राजा आत्मानम्। तिसृष्य एकस्यामेवासज्जते

पौरवस्य दृष्यन्तस्यार्थं चेतः। शकुन्तलापि विस्मयते स्वस्य हृदो दशां दृष्ट्वा कथयति च 'किं नु खलु इयं दृष्ट्वा तपोवनविरोधिनो विकारस्य गमनीयाऽस्मि संवृत्तेति।'

एतैर्वचनैः स्पष्टमिदं यद् द्वावपीमावन्योन्यं प्रति सप्रीतिबन्धौ रतिनाम्ना रागबन्धेन पाशितचेतस्कौ जाताविति। ताविमावालम्बनोद्दीपन-विभावौ। एकतरानुरागे शृङ्गारो रसाभासो मा भूदित्युभयोरप्यनुराग उपस्थापितः कविना। अयं हि भारतीयः कविः। ते हि शेक्सपीयर-प्रभृतयो वैदेशिका लेखका येऽन्यतरस्थमपि रागं प्रपञ्चयन्ति। होमरः खलु स ग्रीकभाषाकविर्यो विंशतिं वर्षाणि प्रवासे गमयित्वा गृहागतो गृहिणीं नानुगृह्णाति कामसन्तापप्रशमनेन व्यतिगमयति च स्वाधीनां निशं स्वापेन।

अनुभावो नाम इत्यादरनुजातो भावः। सः चाङ्गिकवाचिकसात्त्विकाहार्यतया चतुर्विधः। कटाक्षादयोऽप्यनुभावाः। एतैर्हि हृदयस्थितिः सूच्यते। अतः कटाक्षादिभिरनुभावैः समं इत्यादीनां सम्बन्धो गम्यगमकभावरूपः।

सञ्चारिणो लज्जादयो इत्यादिंभावं विशेषाऽऽनुकूल्येन च व्यावर्त्तन्ते। अत एते पोषयन्तितरां इत्यादिकान् भावानतः, एतैः सह रत्यादेः पोष्यपोषकभावः सम्बन्धः। अनुषङ्गतः रससूत्रस्थानां संयोगादिशब्दानामपि संबन्धानुरूपाणि नामानि। तथा च संयोगशब्दस्य जन्यजनकभाव इति विभावादिभ्यो रसादेः सम्बन्धः, गम्यगमकभावः संबन्धोऽनुभावेभ्यः, पोष्यपोषकभावश्च सञ्चारिभ्यो निश्चीयते। ततः संयोगः जन्यजनकभाव इति, निष्पत्तिरुत्पत्तिः।

अनुमितिवादिनां शङ्कुकादीनां मते विभावानां स्थायिभिः सह लिङ्गलिङ्गिभावः, गम्यगमकभावापरपर्यायाः, अनुभावानामपि स एव गम्यगमकभाव-पदबोध्यः, सञ्चारिभिश्च बोध्यबोधकभावादिशब्दसंयोगः परामर्शरूपः, निष्पत्तिश्चानुमितिः।

भुक्तिवादे निष्पत्तिर्भुक्तिः, संयोगो भोगः, विभावानुभावयोः स्थायिना सह भाव्यभावकभावोत्तरो भोज्यभोजकभावः, भोज्यतार्थमपेक्ष्यते साधारण्यम् अर्थात् इयमगम्या नेति प्रत्ययविषयता। एवंविधप्रत्ययोत्पत्तयो काव्यनिष्ठत्वेन नवीन एको भावकत्वनामव्यापारः परिकल्प्यते भट्टनायकेन, भावकनिष्ठत्वेन तु पण्डितराजादिभिः। काव्यमत्राव्यभिचरितेनापेक्ष्यत इति काव्यनिष्ठत्वमस्यापरिहार्यम्।

भावकनिष्ठत्वाय पुनरौचित्यमुपस्थितमेव। यद् विना सभ्या शृङ्गारादिषु रसत्वस्य गन्धमपि न पश्यन्ति। यदुक्तम्–

अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
औचित्योपनिबन्धस्तु रसस्योपनिषत् परा।। इति।

**अभिव्यक्तिवादे–**

निष्पत्तिरभिव्यक्तिः, संयोगोऽभिव्यङ्ग्याभिव्यञ्जकरूपः।

पण्डितराजो जगन्नाथो व्यक्तिं भग्नावरणा चिदिति गृह्णाति। पर्यन्ते च निगमयति- भग्नावरणचिद्विशिष्टः स्थायी वा रसः, स्थायिविशिष्टा चिद्वा भग्नावरणा रसः। 'रसो वै स' इति वेदवचनाद्वस्तुतः स्थाय्यादिविशिष्टाया भग्नावरणायाश्चित एव रसत्वं सिद्धान्तयति।

संयोगा इमे समवायत्वेन नेया यदि स्थायिनश्चित्तवृत्तित्वेन भावत्वं चितश्च ब्रह्मात्मतया द्रव्यत्वम्, द्रव्यगुणयोः समवायस्यैव संबन्धत्वात्, यदि सर्वेषां चित्तवृत्तित्वमेव तदा तादात्म्यं संयोगतया नेयम्, तादात्म्यं च भेदाऽग्रहः।

सर्वथा साम्राज्यमत्राद्वैतस्य, विलसति चाद्वैते कीदृशी भेदधीः।।

# आगमिकः सम्बन्धस्वरूपविमर्शः

परमशिवः काश्मीरशैवागमदर्शने परमार्थतया अभ्युपेयते। स च सर्वस्य आत्मा अत एव स आत्मतया सिद्धः केनचित् साधनेन न साधनीयः। अयमेव शिवादिधरणीप्रान्तानां षट्त्रिंशत्तत्त्वानाम् आधारः तेषु अनुस्यूतः देदीप्यते। तत्त्वाध्वधारणासु आलम्बनभावम् एषां समेषां षट्त्रिंशत्-तत्त्वानाम् प्रतिपादयन्ति विज्ञाः। तत्र शिवः सूक्ष्मं तत्त्वं पृथ्वी तु सर्वापेक्षया स्थूलम्। पृथ्वीम् पृथिव्यण्डमाहुः। जलम् आरभ्य प्रकृतिं यावत् तत्त्वजातं प्रकृत्यण्डमित्याख्यायते। पुरुषः पञ्चविंशतितमः यत्र मायादिनियत्यन्तं षट्तत्त्वात्मकं कञ्चुकं संलग्नं सत् तिष्ठति। तदेतत् मायाण्डम् तदुपरि शुद्धानि त्रीणि तत्त्वानि भवन्ति- शुद्धविद्या, ईश्वरः सदाशिवश्चेति। एतत् शक्त्यण्डमित्युच्यते या शक्तिः यश्च शिवः इमे द्वे तत्त्वे अभेदात्मके भवतः।

एतेषां तत्त्वानाम् उपयोगः सप्तविधेषु प्रमातृवर्गेषु यथायोग्यं प्रवर्तते। सप्तविधाः प्रमातारः के सन्ति इति जिज्ञासायाम् उच्यते-

(१) सकलाः (मलत्रययुक्ताः)

(२) प्रलयाकलाः (आणवकार्मोभयमलावृताः)

(३) विज्ञानाकलाः (आणवमलमात्रेण आवृताः)

(४) विद्येश्वरसंज्ञकाः मन्त्राः (मायीयमलयुताः)

(५) मन्त्रेश्वराः (स्फुटमलसंस्कारयुताः)

(६) मन्त्रमहेश्वराः (सूक्ष्मतरमलसंस्कारवन्तः)

(७) शुद्धाः मलरहिताः प्रमातारः (अकलाः)

अकलप्रमातॄणाम् अपरम् अभिधानम् शिवप्रमातारः इति। एषां शिवभावप्राधान्यनिष्ठायां शाम्भवसंज्ञा, शक्तिभावप्राधान्यनिष्ठायां तु शाक्तसंज्ञा प्रयुज्यते।

एतदुक्तं भवति, समेषाम् अस्माकं स्वात्मा परमेश्वर एवास्ते स च शुद्धचिन्मात्ररूपः अपरिमितः पूर्णस्वतन्त्रः सृष्टिसंहारक्रीडारसिकः आस्ते। निजया तिरोधानशक्त्या स्वातन्त्र्येण असौ नैजम् अकृत्रिमं स्वरूपं स्वभावञ्च तादृशं यत्तिरोधते सोऽयम् अल्पकृत् अल्पज्ञश्च मायाप्रमाता भवन् अणुः पशुर्वा अभिधीयते।

अत एवाऽसौ जाग्रदादिषु तिसृषु दशासु देहं चित्तं प्राणं वा अहमिति विमृशति। सोऽयं विस्मृतशक्तिः सुषुप्तौ क्रियाशून्यः स्वप्नादौ च किञ्जिन्मात्रकरणसमर्थः सन् शक्तिसंकोचाद् अपरप्रकारकेण आणवेन मलेन युज्यते। मायावशात् स्वभिन्नं सर्वं पश्यन्नसौ मायीयेन मलेन युज्यते। संकुचितकर्मकारिणः पापपुण्यादिकर्तृत्व-संस्कारवतः अस्याणुव्रातस्य कार्ममलयोगिता जायते। सोऽयं नियतिकृतनियममनुसरन् नानायोनिषु कर्मफलभोगाय यत्संसरति तदस्य मलत्रयफलं बन्धनं कष्टाय कल्पते।

निष्कर्षरूपेण इदमेवात्रोक्तम् भवति- आत्मनो वास्तविकं स्वरूपं सर्वशक्तिकं सर्वकर्तृत्वात्मकं यत् तिरोहितं भवति अथ च पारमैश्वर्यात्मा स्वभावो यः विस्मर्यते ततोऽसौ शिव एव नाना अणुरूपतां गतः प्राणान्, चित्तं, शरीरं वा आत्मत्वेनाभिप्रैति ततोऽन्यद् वस्तुजातं स्वात्मनो भिन्नं वेत्ति अल्पशक्तिकमात्मानं मनुते। तथा च स्वरूपस्य स्वभावस्य च विस्मृत्या अणुतांगतस्य संसारिता आपद्यते।

"तदेजति तन्नैजति तद्दूरे तद्वन्तिके। तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः-इत्याद्युपनिषदनुमते-पराऽस्यशक्तिर्विविधैवश्रूयते स्वाभाविकी ज्ञानबलक्रिया-चेत्यादिसम्मते भैरवागमप्राधान्येन रौद्रशैवागमसाहाय्येन प्रवृत्तं तदेव त्रिकदर्शनम्, प्रत्यभिज्ञादर्शनम्, काश्मीरशैवागमदर्शनमिति वा प्रोच्यते।

सकृद्विभातोऽयमात्मेति प्रकाश-विमर्श-तत्सामरस्यरूपं त्रिकं परशिवाभिधं परमं तत्त्वमत्र नये सम्मन्यते।

अनुपायेन, शाम्भवेन, शाक्तेन, आणवेन वोपायेन अकलप्रमातृता शिवप्रमातृता वा स्वात्मनः प्रत्यभिज्ञाता यदाभाति तत् तस्य यस्य कस्यचन अणोः शिवानुगृहीतस्य सर्वात्मकता प्रतिभाति। शक्तिपात-विजृम्भितस्य दीक्षामनुसरतः साधकस्य अद्वैतदृष्टिसम्भरितस्य स्वात्मा शिवएव यतो भवति ततोऽस्य सर्वं जगत् स्वात्मरूपमेवावभासते। यथोक्तम्–

तेन शब्दार्थचिन्तासु न सावस्था न या शिवः।
भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः।।[1] इति।

यथा शिवः सर्वरूपः तथा प्रत्येकं वस्तु जडात्मकमपि शिवरूपमेवात्र शासने स्पष्टमुदीर्यते ततः प्रत्येकं परमाणुरपि शिवरूपतयेष्यते। तथोक्तम्–

इक्षौ प्रत्यणु माधुर्यं यथा सर्वात्मना तथा।
प्रत्येकं परमाणौ हि सर्वसृष्टिमयी स्थितिः।।[2] इति।

सर्वथा यद्यत् प्रतिभासते तच्चिद्रूप-शिवात्मकमेव। इति च[3]

यानि षट्त्रिंशत् तत्त्वानि शिवादिधरणी-प्रान्तानि राजन्ते तानि परशिवस्य

शक्तिभूतानि भवन्ति। यथा अग्नेर्दाहः स्वभावः, न च स्वभावः स्वभाविनो भिद्यते तद्वत् शक्तिमान् परशिवः, तस्य च शक्तयः षट्त्रिंशत्तत्त्वात्मकजगद्-भावाः स्वभावरूपा अभिन्ना राजन्ते। यथोक्तम्–

शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते।
शक्तयोऽस्य जगत् सर्वं शक्तिमांस्तु महेश्वरः।।[४] इति।

तत्र परशिवो बोधात्मा विद्यते। बोधो नाम विज्ञानम्। तच्चैकमपि प्रमाप्रमातृ-प्रमाणरूपेण प्रथमानं भवति। त्रितयस्यास्य वर्णमन्त्रपदरूपता शास्त्रेषु प्रतिपादिता। प्रमा वर्णात्मा भाति, प्रमाता मन्त्रात्मा अथ प्रमाणं पदसंज्ञया प्रथते। समुदितानामेषां कलनात्मतया कालाध्वेति नामधेयं भवति। अध्वशब्दार्थस्तु पद्येनैकेन विव्रियते–

प्रबुद्धैरद्यते यस्माद् गम्यते सिद्धिमीप्सुभिः।
गमनेनादनेनापि प्रोच्यतेऽध्वात्र शासने।।[५] इति।

प्रमादीनामुत्तरोत्तरत्रानुस्यूतता विद्यते। सेयमनुस्यूतता देशाध्वसंज्ञकेषु कला-तत्त्व-भुवनेष्वपि विद्यते। स्थूलतया कालाध्वनां प्रमातृपक्षपातिता देशाध्वनान्तु प्रमेयपक्षपातिता इष्यते।

भावनाऽभ्यासे अध्वनामेषां यद् आलम्बनता भवति तत् क्रमेण अध्वशोधनद्वारा गुरुकृतमार्गदर्शने शिवत्वमवाप्यते अतः अद्यते इति अध्वेति नैरुक्ता व्युत्पत्तिरेष्टव्या। यद्यपि संविद् अमूर्ता अक्रमा चास्ते नितरां सिद्धा सकृद्विभाता च तथापि यदसौ मूर्तिवैचित्र्यमवभासयति ततोऽसौ देशक्रमावभासनेन देशाध्वतया प्रथते चेद् क्रियावैचित्र्यं यदवभासयति ततोऽसौ कालक्रमावभासनेन कालाध्वतया प्रथते। द्विविधयोरप्येनयोरध्वनोः आणवोपायेन यथा शिवत्वावाप्तये तत्तद्भोगावाप्तये वा शिवेच्छयैव सृष्टिवत् अर्थक्रियाकारिताऽपि समास्ते। यथोक्तम्–

अमूर्तायाः सर्वगत्वान्निष्क्रियायाश्च संविदः।
मूर्तिक्रियाभासनं यत् स एवाध्वा महेशितुः।।
द्वैतिनां भोग्यभावात्तु-प्रबुद्धानां यतोऽद्यते।
भौक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः।।[६] इति।

षड्विधोऽप्ययमध्वा संविदि एव विजृम्भमाणोऽपि तदिच्छया शक्तिस्पन्दतया शून्यप्राणमनोबुद्धीन्द्रियदेहादिषु बाह्यप्रतिमादिषु च स्थितो विलसति। यथोक्तम्–

अध्वा समस्त एवायं चिन्मात्रे सम्प्रतिष्ठितः।
यत् तत्र न हि विश्रान्तं तन्नभः कुसुमायते।।
संविद्-द्वारेण तत्सृष्टे शून्ये धियि महत्सु च।
नाडीचक्रानुचक्रेषु बहिर्देहेऽध्वसंस्थितिः।।[७] इति।

द्विधा च सोऽध्वा क्रियया मूर्त्या च प्रविभज्यते।[८] इति।
अतः संविदि सर्वोऽयमध्वा विश्रम्य तिष्ठति।।[९] इति च।

प्रकाशमहेश्वरः संविदभिधानः अभेदमये स्वात्मनि स्वातन्त्र्यशक्त्या स्वस्वभावभूतया सम्बन्धद्योतितेन शिवादिधरण्यन्तेन सृष्टेन भेदात्मनापि निर्भासते। तद्यथा–

प्रकाशरूपस्य चिदात्मनस्ते स्वातन्त्र्यमेतन्नहि किञ्चिदन्यत्।
शिवादिपृथ्व्यन्तसमस्तविश्वरूपेण चैकोऽपि विभासि यत् त्वम्।।[१०]इति।

सम्बन्धशब्दस्यार्थः स्फुटतरो भवति यदा तदीयपर्यायः संश्लेषशब्दो विविच्यते। अनेकस्य एकतापादनं संश्लेष इत्युच्यते। संश्लेषे सम्बन्धे वा सर्वथा अनेकता न भवति चेत् सर्वथा एकताऽपि न भवति। अमिश्राः ये नाना भावास्तत्र भिन्नेषु कल्पनया या योजना मायाप्रमात्रा विधीयते सैव सम्बन्ध इत्युच्यते। यथा भिन्नयोरपि वसुदेववासुदेवयोः पुत्रपितृभावविमर्शः यथा वा नीलोत्पलयोः सामानाधिकरण्येनाभेदविमर्शः सम्बन्ध इत्युच्यते। यथोक्तम्–

स्वात्मनिष्ठा विविक्ताभा भावा एकप्रमातरि।
अन्योन्यान्वयरूपैक्ययुजः सम्बन्धधीपदम्।।[११] इति।

क्रियावैचित्र्यनिर्भासेन मूर्तिवैचित्र्यनिर्भासेन वा भिन्नयोः कुण्डबदरयोः प्रातर्भ्रमणयोर्वा भिन्नयोरपि परस्परान्वितयोर्विमर्शात्मनि सम्बन्धे भेदाभेदकोटि-द्वयात्मनि व्यवहारहेतुता संविन्महेश्वरेच्छयैव सम्प्रवर्तते। क्रियाशक्तिरूपात्मनि सम्बन्धे सम्बन्धान्तरसद्भावोऽपि क्वचित् संविन्महेश्वरेच्छया भाति। तदेवं सम्बन्धे अनेकता बाह्यतया भासते एकता तु आभ्यन्तरभावेनेति स्थितिः। यथोक्तम्–

"राजा पुरुषश्च बहिस्तटस्थौ स्वात्मैकपरिसमाप्तौ प्रमातृभूमौ यदैक्यं गच्छतो, न चैक्यमात्रं, तयोर्भेदविगलनापत्तेः, अपितु परस्पररूपश्लेषात्मकं युगपदेव निमज्जदुन्मज्जद्भेदाभेदकोटिद्वयदोलारोहणलक्षणमन्वयरूपं तदा तावेव सम्बन्धधिया आलम्बनं भवतो "राज्ञः पुरुष" इति.......एवं बहिरनेकता, अन्तस्तु परस्पररूपसंश्लेषेणैक्यमिति सम्बन्धस्य रूपम्।" इति[१२]

"यत्र पदार्थाभासस्य आत्मविश्रान्त्या सन्तोषमपुष्यतः आभासान्तर-परामर्शीविश्रान्तिसाकाङ्क्षतया स्वरूपनिष्ठा तत्र सम्बन्धरूपतैव क्रियाशक्ति विजृम्भामया, तत्रापि भावान्तरापेक्षया सम्बन्धान्तरमप्यस्तु, यथा संख्यादौ समवायं मन्यन्ते।" इति च[१३]

मायाप्रमाता क्रियावैचित्र्यमाश्रित्य पौर्वापर्यरूपं क्रमं परिकल्प्य सोऽयं चैत्रः इत्येवं पाटलिपुत्रे दृष्टचरं काश्यां यदनुसन्धत्ते सोऽयं क्रमेणावभासमानयोः

आभासयोः एकविमर्शमयताम् प्रापयन्नाभासः मैत्रीयः कालकृतः सम्बन्ध इत्याख्यायते। तथैव मूर्तिवैचित्र्यमाश्रित्य दूरादूरत्वादिरूपं क्रममाश्रित्य इदं गृहम्, तत्प्राङ्गणमित्येवं वा गृहप्राङ्गणे इत्येवं वा आभासयोरेकविमर्शात्मा मायाप्रमातुराभासः देशकृतः सम्बन्ध इत्यभिधीयते। अमितप्रमातुस्तु अहमात्मविमर्शात्मा सर्वो भावः आभासते इति विशेषः।

व्यवहारकृतः कालकृतः देशकृतो वा यावान् सम्बन्धः स द्विधापि प्रविभज्यते ज्ञाप्यज्ञापकतारूपः कार्यकारणतारूपश्चेति।

अथ प्रकारान्तरेण सम्बन्धस्य प्रातिपदिकार्थव्यतिरिक्त-विविधकारक-व्यापितया बहुविधरूपता चेत् सास्नादिमतां सम्बन्धः गावइति एकव्यपदेश-सहिष्णुतया सामान्यादिव्यपदेशेनापि व्यवह्रियमाणता अनुभूयते। यथोक्तम्–

सर्वत्राभासभेदोऽपि भवेत् कालक्रमाकरः।
विच्छिन्नभासः शून्यादेर्मातुर्भातस्य नो सकृत्।।[१४] इति।
क्रियाविमर्शविषयः कारकाणां समन्वयः।[१५] इति।
देशक्रमोऽपि भावेषु भाति मातुर्मितात्मनः।
स्वात्मेव स्वात्मना पूर्णा भावा भान्त्यमितस्य तु।।[१६] इति।

...कारकाणामपि सम्बन्धरूपतैव केवलं क्वचिदसौ सम्बन्धो व्यपदेशान्तर-ग्रन्थिं सहते यथा सास्नादिमतां सम्बन्धो "गावः" इति एकव्यपदेशसहिष्णुः, तत्र सामान्यादिव्यवहारः।[१७] इति।

सिद्धित्रयीग्रन्थस्य सम्बन्धसिद्धिपुस्तिकायाम्, ईश्वरप्रत्यभिज्ञायाः क्रियाधिकारे च सम्बन्धविषयिणी काचिद्दृगुन्मीलिता। वाक्यपदीयादौ च सम्बन्धस्वरूपं व्युत्पादितमिति सम्बन्धविमर्शं संक्षेपेणात्र विनिवेद्य विरम्यते।

।।इति शम्।।

## संदर्भ सूत्री–

१. स्पन्दकारिका–२९.
२. मालिनी विजयवार्तिकम् १/१०६४.
३. शिवदृष्टिवृत्तिः पृ. १३०.
४. परमार्थसारवि. पृ. १०.
५. श्री पू. प्रत्यभिज्ञा का.प्र. विमर्शः

६. श्रीतन्त्रालोकः ६/२९-३०.
७. श्रीत. ८/३-४.
८. तदेव, ६/२२.
९. तदेव, ६/२८.
१०. श्री पू.प्र.का. शिवस्तुतिः
११. ईश्वरप्रत्यभिज्ञा का. २/२/४.
१२. ईश्वर प्र.वि.ख. २, पृ. ४५.
१३. तदेव, पृ.५३.
१४. ई.प्र.का., २/१/६.
१५. तदेव, २/२/६.
१६. तदेव, २/१/७.
१७. ई.प्र.वि.ख.२, पृ.४३.

# धर्मकीर्त्तेः सम्बन्धविषयकावधारणा

सम्बन्धस्तु व्यावहारिकयथार्थो विद्यते। सम्बन्धेनैव लोकव्यवहारो भवति। सर्वेऽपि दार्शनिकाः सम्बन्धस्य लोकव्यावहाराय सत्तामङ्गीकुर्वन्ति। किन्तु लोकव्यवहारायावश्यकोऽपि सम्बन्धः दर्शनस्य तत्वमीमांसायां यदा विचार्यते तदा एतस्य सत्तालक्षणभेदज्ञानादिविषये प्रश्नाः उपस्थिताः भवन्ति। एषा समस्या न केवलमद्वैतवादिदर्शनेऽपितु द्वैतवादिदर्शनेऽप्यायाति। बौद्धदार्शनिक आचार्य धर्मकीर्त्तिस्तर्कशास्त्रज्ञोऽनेकविषयविचारततिषु सम्बन्धविषयेऽपि सतर्कं विचारितवान्। तत्र च नैयायिकप्रभृतिसिद्धान्तान् सम्बन्धविषयकान् युक्त्या निराकृतवान्। सम्बन्धविषयिणीं चर्चां समाहितुमाचार्यधर्मकीर्तिः "सम्बन्धपरीक्षा"[1] इति संज्ञकं लघु ग्रन्थं प्रणीतवान्। किञ्च प्रमाणवार्त्तिकतृतीयपरिच्छेदेऽपि (१० कारिकासु) सम्बन्धविषये विचारितवान्। निबन्धोऽयं एतद् ग्रन्थद्वयमादाय विद्यते। सम्बन्धविषये धर्मकीर्तिः स्वसिद्धान्तं प्रस्तौतीति-

(१) सम्बन्धो न नित्यः[2], (२) सम्बन्धस्य तात्विकसत्ता नास्ति। (सम्बन्धो नास्ति तत्त्वतः)[3] (३) एककालावच्छेदेन अनेकेषु आश्रितः सम्बन्धो नैव युक्तिसङ्गतः। (सम्बन्धो नैकवृत्तिमान्)[4] (४) यथा सम्बन्धिभ्यां कथ्यते न तथा सम्बन्धज्ञानं भवति।[5] (५) यथा मिथ्यार्थाः भ्रान्त्या सत्यवत् प्रतीयन्ते तथैव विकल्पाः पदार्थान् सम्बन्धान् प्रतीयन्ति। ("विकल्पा दर्शयन्त्यर्थान् मिथ्यार्था घटितानिव"[6]) (६) सम्बन्धाः कल्पिता सन्ति न तु वास्तविकाः। ("सम्बन्धः कलानाकृतः"[7]) (७) काल्पनिके सम्बन्धे नास्ति दोषः, तात्विके च दोषः- "सम्बन्धे नायं दोषो विकल्पते।"[8]

एतेषु विषयेषु धर्मकीर्तिः कथयति। सतोः सम्बन्धिनोः सम्बन्धसत्ता, सम्बन्धिनः पदार्था एव नित्या न सन्ति तदा तदाश्रितः सम्बन्धः कथं नित्यः स्यादिति नित्यत्वं सम्बन्धस्य न युक्तियुक्तमस्ति। नित्यपदार्थश्च न कमपि पदार्थादिकमुपकरोति, कूटस्थत्वात् निष्क्रियत्वाच्च[9]। चेन्नित्यः सम्बन्धस्तर्हि सम्बन्ध्याश्रितः सन् न पदार्थानुपकर्त्तुं सम्भवति कूटस्थत्वात् सम्बन्ध्याश्रिताभावे तस्य सत्ताया अभावः।

अतः सम्बन्धोऽनित्य इत्येव मन्तव्यम्। पदार्थाः स्वतन्त्रा इति पूर्वोत्तरपक्षसम्मतः सिद्धान्तः। चेत् सत्पदार्थयोः सम्बन्धाधीनता तर्हि

पदार्थस्वातन्त्र्यहानिः स्यात्।[१०] चेदुच्यते सम्बन्धः संस्कारविशेषो,[११] न भवति पदार्थयोर्मिथः सम्बद्धतायाः पूर्वं, तर्हि तस्यानित्यता स्वयमेव सिध्यति। यतोहि यस्मिन् वस्तुनि संस्कारः सः वस्तुनाशे स्वयमेव नश्यति। चेदुच्यते सम्बन्धिषु जातेषु तत्र सम्बन्धोऽपि सहैवोत्पद्यते, तदा उत्पद्यमानवस्तुषु पूर्वापरक्रमः अवस्था वा न स्थास्यति। तस्य नित्यत्वे सर्वास्वप्यवस्थासु सम्बन्धाः सर्वत्र वस्तुषु एकरूपेण तिष्ठेत्। वस्तूत्पत्तिपौर्वापर्यस्वीकारे हि सम्बन्धः स्वभावमेकं त्वक्त्वा अपरं स्वभावं धारयेत् चेत् तर्हि नित्यतत्त्वायैतदसम्भवम्।[१२] सम्बन्धवादिभिः सम्बन्धस्य यादृशं स्वरूपमङ्गीक्रियते तद् दृष्ट्या सम्बन्धिभ्यां सम्बन्धः सन्नेव नित्यः स्यात्। किन्तु सम्बन्धिनोर्नष्टयोः का गतिः स्यात् सम्बन्धस्य। चेदुच्यते व्यक्तिषु जातिः स्वीक्रियते सा च नित्या प्रत्येकं व्यक्तौ तिष्ठति। जातित्वं नाम नित्यत्वे सत्यनेकसमवेतत्वम्। तत्र जात्याश्रयस्य व्यक्तेः नाशेऽपि जातिः नित्या तिष्ठति तथैव सम्बन्धिनोः आश्रययोर्नाशेऽपि सम्बन्धस्य नित्यता तद्वत्स्यादेव। तन्न समीचीनं, तथा सति जातिप्रसङ्गे व्यक्तेः, सम्बन्धप्रसङ्गे सम्बन्धिनोः नैरर्थक्यमापद्येत।

जातिप्रसंगे व्यक्तिः सम्बन्धप्रसंगे च सम्बन्धिनश्चेत् अभिव्यक्ति-सहकारिकारणानि कथितानि स्युः। यथा अभिव्यक्तौ दीपकप्रकाशः सहकारिकारणमस्ति तर्हि इदमपि समाधानं न सन्तोषवहम्। यतोऽहि नित्यपदार्थोऽविशेषो भवति। न तत्र विशेषाधानं संभवम्।[१३] सम्बन्धस्वरूपे आश्रयस्य सम्बन्धिनां वा कस्याश्चित् सार्थकभूमिकाया असत्त्वेऽपि चेदाश्रयः नित्यतत्त्वेन सम्बद्ध्यते तर्हि कश्चिदप्यनुकारिपदार्थः कस्यचिदपि नित्यतत्त्वमाश्रयेत्।[१४]

सम्बन्धस्य नित्त्यत्वे तस्य पराश्रितस्वरूपमेव बाधकम्। पराश्रितसम्बन्धः न केवलं स्वीयपदार्थतां सन्देग्धि अपितु सम्बन्धिनां पदार्थानां वा स्वातन्त्र्यं नित्यत्वं चापि विकरोति। यतोऽहि स्वतन्त्रो नित्यो वा पदार्थः न परमार्थतः पदार्थान्तरं श्लिष्यति।[१५] पारतन्त्र्यं हि न सम्बन्धस्वरूपं भवितुमर्हति। स्वात्मनिष्ठपदार्थाः सम्बन्धाधीना इत्यसङ्गतसिद्धान्तः।[१६] रूपश्लेषोऽपि सम्बन्धस्वरूपत्वेन न वक्तुं शक्यते। यतोऽहि विविधप्रकृतिकयोः पदार्थयोः स्वतन्त्रपदार्थत्वेन समुचितोऽभिधीयमानस्सम्बन्धः कथं तिष्ठेत् यस्य स्वीया प्रकृतिरेव सम्बन्धिद्वयभिन्नाऽस्ति।[१७] अपेक्षापि न सम्बन्धस्वरूपमर्हति यतोऽहि पदार्थसत्ताक्षणे सम्बन्ध असन् भवति। अतः प्रथमक्षणे असन् सम्बन्धः कथं सम्बन्धिनौ अपेक्षेत। चेत् पदार्थप्रादुर्भावात् पूर्वमेव चेत् सम्बन्धः सन्नस्ति तर्हि तस्य पूर्णस्वरूपेण स्थितत्त्वात् तत्र कस्यचिदप्यपेक्षा स्वीकृतिरनुचितास्ति।[१८] चेत्

द्वयोरेकत्वविधानं सम्बन्धश्चेत् सम्बन्धिभ्यां भिन्ना तृतीया स्वतन्त्रसत्ता भवति तर्हि पुनः पदार्थान्तरस्य सम्बन्धिभ्यां सम्बन्धविधाने अनवस्थादोषप्रसंगः स्यात्।[१९]

स्वतन्त्रतत्त्वं स्वात्मनिष्ठं भवति। पदार्थः सम्बन्धश्च स्वतन्त्रत्वात् स्वात्मनिष्टत्वाच्च केवलं कल्पनायामेव एकत्वं भजेतां न तु यथार्थावस्थायाम्। पदार्थयोर्मिथः भिन्नेत्वेऽभिन्नत्वे वा द्वयोः स्थित्योः न स्बन्धः सम्भवः।[२०]

सम्बन्धस्य यत् स्वरूपमुच्यते तत्र सम्बन्धसम्बन्धिनोर्मिथः उपकार्योपकारकभाव अवश्यं स्वीकरणीयः। किन्तु द्वयोः सम्बन्धिनोः सम्बन्धस्य च त्रिष्वपि न उपकार्योपकारकभावो विद्यते।[२१] सम्बन्धसम्बन्धिनोर्मिथः वाच्यवाचकभावसम्बन्धस्वीकारे प्रश्न उत्तिष्ठति यत् तत्र वस्तुतः भेदोऽभेदो वा। तत्र भेदे सति वाच्यवाचकभावसम्बन्धस्य सम्बन्धिनोर्वा प्रतीतिः पृथक् पृथक् भवेत्। भिन्नभिन्नप्रतीतितात्पर्यं चास्ति। यः पदार्थः स्वतन्त्रः निराश्रितो वा विद्यते अस्यां स्थितौ सम्बन्धः सम्बन्धिनोः अथवा सम्बन्धिनौ सम्बन्धे नैव आश्रितौ वक्तुं शक्येते। तथास्वीकारे सम्बन्धस्वरूपहानिः स्यात्।[२२] सम्बन्धसम्बन्धिनोरभेदे प्रत्यक्षविषयत्वात् सम्बन्धिवस्त्वेव सत् सिध्येत्। सम्बन्धस्य च स्वतन्त्रसत्तायाः हानिः स्यात्।[२३] तृतीयो विकल्पोऽयमेव शक्नुयात् यत् सम्बन्धः न सम्बन्धिभ्यां भिन्नः, अपितु अभिन्न एव किन्तु विषयेऽस्मिन् धर्मकीर्तिः कथयति यत्-सम्बन्धसम्बन्धिनोः मिथः भेदस्य अभेदस्य वा स्वीकारे अतिरिक्तः तृतीयो विकल्पः न संभवति। यतोऽहि कश्मिश्चित् नित्यवस्तूनि न षरस्परविपरीतस्वभावाः स्थातुं शक्नुवन्ति।[२४]

इत्थं पूर्वोक्तयुक्तिभिः सम्बन्धं खण्डयित्वा धर्मकीर्तिः सम्बन्धस्य विशिष्टविषयेऽपि विचारयति। तं च क्वचित् क्षणभङ्गवादिदृष्ट्या, क्वचित् च तटस्थदृष्ट्या न स्वीकरोति। क्षणमङ्गवादिदृष्ट्या क्रियाकारकयोः यथार्थसम्बन्धमस्वीकुर्वन् आचार्यः तर्कयति यत् ज्ञानस्य क्षणावस्थायित्वात् क्रियाक्षणे कारकाणां कारकक्षणे क्रियायाः सत्ता न संभवेत्। अतः क्रियाकारकसम्बन्धः काल्पनिक एव न तु वास्तविकः। कार्यकारणभावविषये आचार्यधर्मकीर्तिः सम्बन्धपरीक्षाग्रन्थे सप्तकारिकातः सप्तदशकारिकांयावत् विचारितवान्। एतस्मिन् विचारे धर्मकीर्तिः स्थापितवान् यत् लोकव्यवहारे कार्यकारणभावत्वेन अभिधीयमानसम्बन्धः यथार्थतः सम्बन्धः नास्ति यतोऽहि सम्बन्धः द्विष्ठः। द्विष्ठतायै सहभाव आवश्यकः न च कार्यकारणभावे सहभावोऽस्ति। कारणक्षणे कार्यस्य, कार्यक्षणे कारणस्य च अभावो भवति।[२५] चेत् कारणे कार्ये वा सम्बन्धः तिष्ठति इति स्वीक्रियते तदपि

सम्बन्धः एकस्मिन् सम्बन्धिनि विद्यमानः द्वितीयं प्रति निस्पृहः तिष्ठेत्। तात्पर्यं तस्य इदमस्ति यत् एकस्मिन् विद्यमानत्वे सति द्वितीयं प्रति निरपेक्षोऽपि सम्बन्धः स्वीकरणीयः स्यात् येन तस्य द्विष्ठतायाः हानिः स्यात्। चेत् एकस्मिन् विद्यमानेऽपि सम्बन्धः कथ्यते तर्हि अपरेऽस्मिन् अविद्यमानेऽपि सम्बन्धः यथार्थत्वेन कथनीयः स्यात्। यत् च व्यावहारिकं स्यात् न च पारमार्थिकम्।[२६]

सम्बन्धो हि न कारणं कार्यं वा उपकरोति। कार्यं कारणं वा द्वाभ्यां विना सम्बन्धः असद् भवति। असद्-वस्तु च न कमपि नित्यपदार्थमुपकर्तुमर्हति।[२७] धर्मकीर्तिः कार्यं पटमवयविनं समवायिकारणानि तन्तवः उपकुर्वन्ति इति पक्षं नैव स्वीकरोति। कथयति सः यत् कार्योत्पत्तिकाले कार्यस्यासिद्धत्वात् समवायिकारणं न भवति। कार्योत्पत्यनन्तरं समवायिकारणसत्तायां न किमपि प्रमाणम्। अन्यथा कुम्भकारादेरपि घटोत्पत्या समवायसम्बन्धः स्यात्। चेद् इत्थं न मन्यते तर्हि अनुकारिणि सत्यपि समवायस्वीकारे समस्तविश्वमेव मिथः समवायि सिध्येत्।[२८] सम्बन्धं पदार्थं मत्वा तत्सम्बद्धत्वात् कार्यकारणयोः कार्यकारणताऽस्ति तर्हि द्वित्वसंख्या, परत्वापरत्वविभांगादिसम्बन्धात् द्वित्वस्य सत्वात् कस्यचित् पशोः दक्षिणवामविषाणयोरपि कार्यकारणता स्यात्।[३०] कारणसत्त्वे कार्यसत्ता कारणभावे कार्याभाव इयमेव अन्वयव्यतिरेकव्यवस्था कार्यकारणभावः कथ्यते। इयमेव कार्यबुद्धिः। कारणात् कार्याद् वा व्यतिरिक्ता न काचित् तृतीया सत्ता कार्यकारणभावस्य। कार्यविषयकशब्दोल्लेखः तादृशवचनं वा केवलं व्यवहारायैव। यतोऽहि शब्दोल्लेखं विनापि कार्यकारणभावः स्वस्थाने भवत्येव। यथा- सास्नादिमत्वं गोत्वमिति गोलक्षणरूपशब्दसङ्केतव्यवहारं विनाऽपि गौः गौरेव भवति।[३१] कार्यत्वेन कारणत्वेन वा व्यवह्रियमाणाः पदार्थाः भिन्ना अभिन्ना वा सन्ति, सर्वत्र स्थितौ कार्यकारणभावः सम्बन्धः नास्ति। यतोऽहि सम्बन्धस्यास्य न तयोर्व्यतिरिक्ता सत्ता विद्यते।[३२] संयोगस्य उत्पत्तिशीलत्वात् संयोगिनोः क्रिया आवश्यकी भवति। क्रियास्वीकारे च तस्या अपि संयोगिता भवेद् इत्थमत्र अनवस्थादोषप्रसंगः स्यात्।[३३] शब्दार्थयोः न स्वाभाविकसम्बन्धः शब्दोऽपि कल्पनामात्रं विद्यते। शब्दो हि वर्णसमुदायः कथ्यते, किन्तु क्रमिकसमुदायिभ्यो भिन्नो न समुदाय उपलभ्यते। तथैव कल्पितशब्दैः पदस्य वाक्यरूपसमुदायस्य च कल्पनाऽपि कल्पनामात्रमेव। अतः यदा शब्द एव काल्पनिकः तदा तत्रत्यसम्बन्धः कथं वास्तविकः स्यात्। शषविषाणे नीलादिकल्पना कल्पनामात्रमेव न तु तद्वस्तु सद्भवति।

सम्बन्धसिद्धान्तदर्शनं जगतः क्लिष्टश्लिष्टसमस्यास्वेकमस्ति। तत्वमीमांसीयसमस्याभिः सम्बद्धात् विषयोऽयं अत्यधिकं जटिलोऽस्ति। यद्यपि सम्बन्धस्य व्यावहारिकी सत्ता सर्वसम्मता तथापि तस्य पारमार्थिकी सत्ता नित्यता च विवादास्पदा विद्यते। सत्यस्य नित्यस्य भ्रान्तादेश्च वस्तुसम्बद्धा अवधारणा प्रत्येकं दर्शनसम्प्रदाये भिन्नाः भिन्नाः सन्ति।

धर्मकीर्तेः सम्बन्धविवेचनायाः प्रमुखं वैशिष्ट्यं इदमेव यत् स न केवलं क्षणभङ्गवादिबौद्धदृष्ट्या अपितु तटस्थदृष्ट्यापि गाम्भीर्येण विचारयन् तस्य प्रतिषेधे समुचिताः युक्तिः प्रास्तौत्। प्रथमदृष्ट्या सम्बन्धस्य नित्यतां द्वितीयदृष्ट्या च सम्बन्धावधारणाविसङ्गतीः समुद्घाटयति। आभ्यां दृष्टिभ्यां परीक्षणेन निश्चीयते यत् सम्बन्धः न केवलं क्षणभङ्गवादिदृष्ट्या अपितु पूर्वपक्षदृष्ट्याऽपि संभवो नास्ति। यतोऽहि सम्बन्धस्य स्वरूपं न कथमपि सम्बन्धिनिरपेक्षं निष्ठति। न्यायमतखण्डने धर्मकीर्तिः यत् तर्कं प्रस्तुतवान् न तत्र कुतर्कत्वं दुराग्रहो वा दृश्यते। एतासु युक्तिसु भवेन्नाम तत्र मौतिकत्वसन्देहः दर्शनान्तरेसु तासां सत्वात्। परन्तु तत्र शैथिल्यं नास्ति।

धर्मकीर्तिः सम्बन्धस्य सामान्यस्वरूपं विशेषस्वरूपं च प्रतिषेधितवान्। तत्र च सः क्रियाकारकभावकार्यकारणभाववाच्यवाचकभावसंयोगसमवायादि सम्बन्धानां आलोचनां कृतवान्। आलोचनेयं अचेतनेन अचेतनस्य सम्बन्धविचारे सीमितावर्तते। चेतनेन चेतनस्य सम्बन्धोऽपि दर्शनस्य गंभीरप्रश्नः। धर्मकीर्तिस्तु नेमं पक्षं विचारितवान्। यतोऽहि यः पक्षः पूर्वपक्षिभिरुपस्थापितः स एव विवेचितः। तस्माद् बहिर्भूतः पक्षः न विचारितः। अत्र हि सम्बन्धविषये क्षणभङ्गवादिनः तटस्थस्य च दृष्ट्या विचारः कृतः। विशेषप्रकाराणामालोचना तु क्षणमङ्गवादि दृष्ट्यैव प्रतीयते न तु तटस्थदृष्ट्या।

धर्मकीर्तेः सम्बन्धविषयकविवेचना सम्बन्धखण्डने एव वर्तते न तु तस्य स्वरूपनिर्धारणे। संभवतः सम्बन्धसत्त्वोच्छेदनात् न तत्स्वरूपं विचार आवश्यक इति मत्वा न सम्बन्धस्वरूपविषये विचारितवान्। धर्मकीर्तिः सम्बन्धं कल्पितं मन्यते। सम्बन्धस्य कल्पितत्वे ते दोषाः न भवन्ति ये तस्य नित्यत्वे समायान्ति। तस्य विवेचनेन इत्थं प्रतीयते यत् कल्पनयैव लोकव्यवहारे विविधभ्रान्तयो भवन्ति ताभिः लोकव्यवहारो चलति। इत्थमेव काल्पनिकप्रतीतिरूपसम्बन्धोऽपि लोकव्यवहारसंचालको भवति।

धर्मकीर्ति क्षणभङ्गवादिदृष्ट्या सम्बन्धः क्षणिकसदपि नास्ति तटस्थदृष्ट्या तथा सत्योऽपि नास्ति यथा वस्तुवादी नैयायिको मन्यते। धर्मकीर्तेः सिद्धान्तः

यत् सम्बन्धविषये तस्य क्षणिकसत्तैव विचार्यते। तदेव सद्वस्तु यत् अर्थक्रियाकारि स्यात्। अर्थक्रियाकारि क्षणिकं भवितुं शक्यते न तु नित्यम्। अतः सम्बन्धो न सत्यः न च नित्यः। अत्र जिज्ञास्यते यत् किं धर्मकीर्तिदृष्ट्या सम्बन्धः क्षणिकं सद्वस्तु भवितुं शक्यते। एतस्योतरमपि निषेधात्मकमेव भवति। यतोऽहि क्षणिकं क्रियाशून्यं भवति। सम्बन्धाय च सम्बन्धिनोः परस्परसामीप्ये क्रिया भवत्येव। क्रियायै च कर्तृकर्मादिकारकाणि अपेक्षितानि भवन्ति। तान्यपि धर्मकीर्तिना कल्पितानि कथितानि। अतः ताभिः भ्रान्तिभिः जायमानसम्बन्धोऽपि भ्रान्त एव मन्यते न तु वास्तविकः। नैयायिकः सम्बन्धेषु समवायं नित्यं संयोगं चानित्यं मन्यते परन्तु नित्यवस्तुनोः संयोगसम्बन्धस्य नित्यत्वं स्वीकरोति तत्र सम्बन्धलक्षणस्य घटितत्वात्। धर्मकीर्तिः सम्बन्धार्थं क्रिया सत्ता या बोधिता सा संयोगेऽपि स्वीकार्या स्यात्, किन्तु संयोगसम्बन्धे क्रिया संभवा नास्ति अतः संयोगो न सम्बन्धः।

सम्बन्धस्य नित्यत्वे क्षणिकत्वे वा उभयपरिस्थितौ तत्र क्रियास्वीकारः आवश्यकः। यतोऽहि द्वौ सम्बन्धिपदार्थौ स्वक्षणिके नित्यस्वरूपे वा स्थिरौ सन्तौ क्रियां विना कथं संश्लिष्टौ स्याताम्। सम्बन्धस्य स्वतन्त्रपदार्थत्वे तस्य ज्ञानमपि आवश्यकं भवति। क्षणभङ्गवादिदृष्ट्या यथा लोकव्यवहारे घटादेः प्रत्यक्षं न भवति तथैव सम्बन्धस्यापि प्रत्यक्षं न भवितुं शक्नोति। यतोऽहि सम्बन्धः नहि प्रत्यक्षस्य विषयः विकल्पज्ञानस्य विषयो भवति। अतः सः क्षणिकं सद्वस्त्वपि नास्ति। सम्बन्धस्य सत्यत्वे महती बाधा वर्तते पदार्थानां बहुत्वस्वीकृतिः। पदार्थानां बहुत्वं सत्यमस्ति न वा इति तु स्वतन्त्रविचारस्य विषयः किन्तु सम्बन्धस्य सापेक्षस्वरूपात् पराधीनस्वरूपाद् वा न निषेधं कर्तुं शक्यते। स्वतन्त्रतत्त्वं सापेक्षं नैव भवितुमर्हति। अनेकस्य एकत्र स्थितौ तस्य स्वातन्त्र्यं च विविधदोषान् आमन्त्रयति। तथा च स्वरूपसम्बन्धमसंभवं करोति। किन्तु सम्बन्धस्य काल्पनिकत्वे नैते दोषाः भवन्ति यतोऽहि विसङ्गतिं विनैव कल्पना अनेकान् विषयान् स्वस्मिन् समावेशयति।

सम्बन्धः वेदान्तिनां ब्रह्मण इव, शैवानां शिवस्य इव नैयायिकवैशेषिकयोः द्रव्यमिव, विज्ञानवादिनां क्षणिकविज्ञानादितुल्यं पारमार्थिकं सत्यं नास्ति। स च घटादिवत् ग्राह्यं सत्यमपि नास्ति। न च शशविषाणबन्ध्यापुत्राकाशकुसुमद्विचन्द्रादितुल्यं सर्वथा असदपि मन्यते। धर्मकीर्तिः सम्बन्धस्य काल्पनिकप्रतीतिंस्वीकरोति। अतः प्रतीतिमात्रं सत्यानुभूतिस्वीकर्तॄणां दृष्ट्या सम्बन्धः सत्यः वक्तुं शक्यते। वस्तुप्रतीतिसत्यत्वं न विज्ञानवादिदृष्ट्या प्रतिकूलं, यः समस्तं जगद् विज्ञानाभाषं मन्यते इति दिक्।

## संदर्भ सूत्री–


१. प्रमाणवार्तिक तृ.प.
२. प्रमाणवार्तिक, का. प.२३२.
३. सम्बन्ध प.का. १,२.
४. तत्रैव का. ८.
५. न सम्बन्धमतिस्तथा तत्रैव का. ४.
६. सं.प.वा.१७.
७. प्रमाणवार्तिक ३/२३८.
८. प्रमाणवार्तिक तृ.प. ३/२३२.
९. प्रमाणवा. ३/२३२.
१०. प्रमाणवार्तिक ३/२३९.
११. तत्रैव ३/२३३.
१२. तत्रैव ३/२३३.
१३. प्रमाणवार्तिक, ३/२३५-६.
१४. तत्रैव, ३/२३५.
१५. तत्रैव, ३/२३९.
१६. सम्बन्धपरीक्षा का.सं.१.
१७. तत्रैव, का.सं.२.
१८. तत्रैव, का.सं.३.
१९. तत्रैव, का.सं.४.
२०. तत्रैव, का.सं.५.
२१. प्रमाणवार्तिकम्, ३/२३७.
२२. तत्रैव, ३/२३७.
२३. तत्रैव, ३/२३८.
२४. सम्बन्धपरीक्षा, का.सं.६.
२५. तत्रैव का.सं. ७.
२६. तत्रैव का.सं. ९.
२७. तत्रैव का.सं. २०,२१.
२८. तत्रैव का.सं. १०.
२९. तत्रैव का.सं. १५.
३०. तत्रैव का.सं. १६,१८.
३१. तत्रैव का.सं. २२.
३२. प्रमाण वार्तिक, ३/२३९-४०.
३३. न्यायबिन्दु, का.सं. १५.

# निबन्धलेखकानाम् परिचयः


**प्रो. रेवाप्रसादद्विवेदी**
पूर्वसंकायप्रमुख, साहित्यविभागाध्यक्ष
संस्कृतविद्याधर्मविज्ञानसंकाय
काशीहिन्दूविश्वविद्यालय

**प्रो. श्रीनारायणमिश्र**
पूर्वअध्यक्ष,संस्कृतविभाग,कलासंकाय
काशीहिन्दूविश्वविद्यालय

**प्रो. किशोरनाथ झा**
पूर्वआचार्य, राष्ट्रीयसंस्कृतसंस्थान,
गंगानाथ झा परिसर, इलाहाबाद
ग्राम- विठ्ठो, पो. सरिसर्व-पाही
जिला मधुबनी, बिहार

**प्रो कृष्णकान्तशर्मा**
वैदिकदर्शनविभाग एवं पूर्वसंकायप्रमुख
संस्कृतविद्याधर्मविज्ञानसंकाय,
काशीहिन्दूविश्वविद्यालय।

**प्रो. भगवतशरणशुक्ल**
आचार्य, व्याकरणविभाग,
संस्कृतविद्याधर्मविज्ञानसंकाय,
काशीहिन्दूविश्वविद्यालय।

**प्रो. राजारामशुक्ल**
अध्यक्ष, वैदिकदर्शनविभाग,
संस्कृतविद्याधर्मविज्ञानसंकाय,
काशीहिन्दूविश्वविद्यालय।

**डॉ. दिव्यचेतनब्रह्मचारी**
डी. २५/१२ दत्तात्रेयमठ,
नारदघाट, वाराणसी।

**प्रो. सदाशिवकुमारद्विवेदी**
संस्कृतविभाग,
कलासंकाय,
काशीहिन्दूविश्वविद्यालय।

**प्रो. सूर्यप्रकाशव्यास**
पूर्वअध्यक्ष, जैन-बौद्धधर्मदर्शनविभाग
संस्कृतविद्याधर्मविज्ञानसंकाय
काशीहिन्दूविश्वविद्यालय

**डॉ. माधवजनार्दनरटाटे**
धर्मशास्त्रविभाग
संस्कृतविद्याधर्मविज्ञानसंकाय
काशीहिन्दूविश्वविद्यालय

**डॉ. देवानन्द शुक्ल**
कार्यक्रम अधिकारी
महर्षि सान्दीपनी राष्ट्रीय वेदविद्या प्रतिष्ठान,
उज्जैन, मध्यप्रदेश

**डॉ. तपनशङ्करभट्टाचार्यः**
एसो.प्रोफेसर संस्कृतविभागाध्यक्ष,
जाधवदपुर विश्वविद्यालय, कलकत्ता

**प्रो. का.इ. धरणीधर**
अध्यक्ष संस्कृतविभाग,
पाण्डेचेरी विश्वविद्यालय, पाण्डीचेरी

**प्रो. कमलेश झा**
अध्यक्ष, धर्मागमविभाग,
संस्कृतविद्याधर्मविज्ञानसंकाय
काशीहिन्दूविश्वविद्यालय

**डॉ. भुवनेश्वरी भारद्वाज**
असि.प्रोफेसर,संस्कृत एवं प्राकृत भाषा विभाग
लखनऊ विश्वविद्यालय, लखनऊ

**प्रो. रामकिशोरत्रिपाठी**
अध्यक्ष, वेदान्तविभाग,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालय,वारा.

**प्रो. सच्चिदानन्दमिश्र**
ज्योतिषविभाग,
संस्कृतविद्याधर्मविज्ञानसंकाय
काशीहिन्दूविश्वविद्यालय

**प्रो. सच्चिदानन्दमिश्र**
धर्म एवं दर्शनविभाग, कलासंकाय,
काशीहिन्दूविश्वविद्यालय

**प्रो सोमनाथ नेने**
संस्कृतविभाग, कलासंकाय,
काशीहिन्दूविश्वविद्यालय

